End. विद्वद्दुर्ल्लभापतेः परिज्ञमतत्कीर्त्तेः प्रपौत्रस्ततः
पौत्रः श्रीतपनस्य सत्कविमणेः मद्दैत्यचूडामणेः ।
श्रीगौरौनरसिंहसंमततनयो निःशेषतन्त्रोद्भवं
पथ्यापथ्यविनिश्चयं व्यतनुत श्रीविश्वनाथः सुधीः ॥
जानन् सर्व्वनिदानमप्यनुसरन् प्राग्रूपमालोकयन्
रूपञ्चोपशमं भजन्नपि परां संप्राप्तिमप्यौलयन् ।
साध्यासाध्यतया गदञ्च गणयन् कुर्व्वंश्चिकित्सां स्फुटां
पथ्यापथ्यविनिश्चयेन रहितो वैद्यो भ्रमत्यन्धवत् ॥
रोगान् नाशयितुं यशः प्रथयितुं प्राप्तुं प्रतिष्ठां परां
लब्धुञ्चापि धनानि यस्य भिषजश्चेतः समुत्कण्ठते ।
मुक्ताहारमिव प्रकाममसमं हृत्तोज्ज्वलं सद्गुणं
पथ्यापथ्यविनिश्चयं स्फुटममुं कण्ठे समं धारय ॥

Colophon इति सूर्य्यवंशावतंसक गजपतिप्रतापरुद्रेण प्रतिपादित तपनमहापात्रे तिदिजपितामहनामपदवीकस्य श्रीविश्वनाथसेनस्य कृतौ पथ्यापथ्यविनिश्चयः समाप्तः ।

विषयः । ज्वरादिव्याधिसङ्कुलेषु सर्व्वेषु रोगेषु तथा ग्रीष्मादिषु च ऋतुषु पथ्यापथ्य-निरूपणं ।

---

No 2940 रत्नसारचिन्तामणिः | Substance, country made paper, 13 × 5 inches. Folia, 77. Lines, 14 on a page Extent, 4,446 ślokas Character, Bengali. Date, Sm. 1221. Place of deposit, Zillá Virabhúma, Gráma Gopálapura, Káśinátha Kaviraja. Appearance, fresh. Verse. Incorrect.

Ratnasára-chintámaṇi. An elaborate treatise on Practice of Medicine. Apparently on abstract of a Tantra.

Beginning. ( नमस्ते पार्व्वतौनाथ महायोगेश्वर शिव ।
कल्याणं मङ्गलं शान्तं चतुर्व्वर्गवरप्रद ॥ )
दुर्गेति भद्रकालीति योगमाया महेश्वरी ।
धर्म्मार्थकाममोक्षाय वरदाय नमोऽस्तु ते ॥
अश्विनीकुमार उवाच ।
धन्वन्तरे महाभाग सर्व्वशास्त्रविशारद ।
आयुर्व्वेदे रोगनाम्ना महारोगस्तथा मतः ॥

विधामस्य तथा मोक्ष' कथमेव कृपानिधे।
संक्षिप्तं कथयास्माकं पुरातनवचोद्भवं ॥

धन्वन्तरिरुवाच।

चतुःषष्टिविधा रोगा भेदास्तेषामनेकधा।
त्रिलोकानां हितार्थं च पार्व्वत्युक्तिर्महेश्वरे।

पार्व्वत्युवाच।

देवदेव महादेव संसारत्राणकारक।
रोगनाम्ना रोगनाशः कथमेव महाप्रभो॥

End. भक्षयेद्दिनसप्तञ्च जीवेद्वर्षशतद्वयं।

अमृतार्णवमोदकः।

Colophon इति उमामहेश्वरसंवादे रत्नसारचिन्तामणिनानौषधिप्रक्रिया। सन ११११। मास फाल्गुन।

विषयः। पार्व्वतीपरमेश्वरसंवादेन रोगाणामुद्देशकथनं। आयुर्व्वेदागमविवरणं। वातपित्तादिज्वराधिकारे,—नारायणीपाचनं। पटोलादिपाचनं। कट्फलादिपाचनं। पञ्चकोलपाचनं। नवाङ्गपाचनं। कण्टकार्य्यादिपाचनं। अष्टाङ्गावलेहः। चतुर्दशाङ्गपाचनं। विल्वादिपाचनं। गुडुच्यादिपाचनं। मुस्तकादिपाचनं। भार्ग्यादिपाचनं। अष्टादशाङ्गपाचनं। शीतारिरसः। इच्छाभेदिरसः। कफकेतुरसः। हिङ्गुलेश्वररसः। पञ्चाननरसः। मृत्युञ्जयरसः। ज्वरकेशरिरसः। शीतभञ्जिरसः। प्रचण्डेश्वररसः। ज्वरमुरारिरसः। प्रतापेश्वररसः। वेतालरसः। भुवनेश्वररसः। आनन्दभैरवरसः। भास्करेश्वररसः। ज्वराङ्कुशरसः। मार्कण्डेयरसः। अर्द्धनारीश्वररसः। वृहदर्द्धनारीश्वररसः। चिन्तामणिरसः। कल्पतरुरसः। वृहत्कल्पतरुरसः। वृहद्दिवाकररसः। वाञ्छाकल्पतरुरसः। चन्दनाद्यलौहः। सर्व्वज्वरलौहः। वृहज्जीवकादिमोदकः। अङ्गारकतैलं। वृहत्शम्भुकेश्वरतैलं। महारुद्रतैलं। सुदर्शनचूर्णं। सर्व्वौषधिः। लक्ष्मीविलासरसः। वृहल्लक्ष्मीविलासरसः। महाभ्ररसः। रसबन्धयोगः। वृहत्शृङ्गाभ्रकरसः। वृहद्राजवल्लभरसः।

अतीसाराधिकारे,—पञ्चमूल्यादिपाचनं। वृहत्पञ्चमूल्यादिपाचनं। धान्यादिपाचनं। वृहज्जातीफलादिचूर्णं। नारिकेलचूर्णं।

ग्रहण्यधिकारे,—वृहत्कुटजावलेहः। विल्वादिमोदकं। जातिफलादिवटिका। त्रिपुरारिरसः। कनकसुन्दररसः। वीरभद्ररसः। वृहन्मदनमोदकं। विल्वादिवटिका। आम्रातकयोगः। पल्लवेश्वरयोगः। वाट्यासत्त्वं। मृत्युञ्जयरसः। वृहद्ग्रहणीगजेन्द्ररसः। लवङ्गादिचूर्णं। सिद्धेश्वरवटिका। वृहल्लवङ्गादिचूर्णं। मदनमोदकं।

अर्शोऽधिकारे,—वल्लवीजयोगः । त्रिवृद्दलपथ्ययोगः । शालमूलीयोगः । अर्शोऽरिमोदकः । बृहत्प्राणदमोदकः । मेघवर्णवटिका । भद्रेश्वरमोदक । दास्यादिघृतं ।

भगन्दराधिकारे,—गुग्गुलेश्वररस । फल्यादिप्रलेपः । अमृतसम्भवोरसः । फणीन्द्रतैलं । जम्बीरेश्वररसः ।

अग्निमान्द्याधिकारे,—पञ्चमुखचूर्णं । शङ्खवटिरसः । चित्रवटिका । बृहदग्निकुमारः । चतुर्मुखरसः । अग्निकुमाररसः ।

अजीर्णाधिकारे,—पञ्चमुखरसः । दावानलरसः । योगरत्नमोदकं । अजीर्णकण्टकरसः । बृहत्क्रव्यादिरसः । लवङ्गादिमोदकं ।

विसूचिकाधिकारे,—अञ्जनयोगः । शूकशर्करादियोगः । कज्जलीयोगः । त्रिकटादि-योगः । शाल्मलियोगः ।

अपस्माराधिकार,—जयन्तीयोगः । किंशुकयोगः । रससुन्दरनस्यं । चम्पेश्वरचूर्णयोगः । अमृतीयोगनस्यं । नानायोगाः ।

शिरोरोगाधिकार,—लेपनविधिः । चूर्णयोगः । स्वेदयोगः । मर्दनविधिः । शिवयोगः । वज्राङ्कुरतैलं । मयूरेश्वरघृतं । शूलवज्राङ्कुरतैलं ।

कर्णरोगाधिकारे,—नागवल्लीमत्स्ययोगः । जम्बूपत्रमत्स्ययोगः । तैलकाञ्जियोगः । धुस्तूरादि-तैलं । शम्बूकादितैलं । बृहत्शम्बूकादितैलं । चतुर्थचूर्णलेपनं । नानाविधप्रलेपाः । घृतमिश्र-भोजनं ।

नेत्ररोगाधिकारे,—वाटिकाञ्जनं । आमलकीतैलाञ्जनं । चन्द्रप्रभावटिका । चन्द्रहास-वटिका । चन्द्रोदयवटिका । बृहच्चन्द्रोदयवटिका । लवणेश्वरवटिका । दध्यञ्जनं । दैवाञ्जनं । दाम्याद्यञ्जनं । सिन्दूरेश्वरवटिका । शिंशपादियोगः । हरीतक्यादिवटिका । देवदारुवटिका । भीमसेनकर्पूराञ्जनं । रत्नराजघृतं । कामराजघृतं ।

नासारोगाधिकारे,—वदरेन्द्रयोगः । गण्डफलादिप्रलेपः । नस्यविधानं । रसामृतवटि-का । अमृतेश्वररसः । घृतयोगः ।

मुखरोगाधिकारे,—शुष्कलेपनादिकं । सौगन्धिवटिका । घृतयोगः । रसकवटिका । कर्पूरेश्वरवटिका । चन्द्रभागिकं । मूकदोषप्रक्रिया । बधिरदोषप्रक्रिया । गण्डमालारोगप्र-क्रिया ।

अङ्गुलिरोगाधिकारे,—मदनकण्टकप्रलेपः । दूर्व्वाप्रलेपः ।

स्वरभङ्गाधिकार,—मधुरस्वरमोदकं । चित्रकूटरसः ।

शोथोदराधिकारे,—वास्तुयोगः । बृहत्योगेश्वररस । बृहद्वीरभद्ररसः । वहन्मृत्युञ्जयरसः । पञ्चेश्वररसः । शोथशार्दूलतैलं । महाभैरवेश्वररस । महाशोथशार्दूलतैलं ।

कासरोगाधिकारे,—क्षीररसामृतसिन्धुः । बृहत्कनकसिन्दूरं । पद्मेश्वरचूर्णं । दाडिम्ब-

श्वरचूर्णं । चन्द्रामृतरसः । सिद्धबीजचूर्णं । त्रिफलादिमोदकं । अपामार्गचूर्णयोगः । तालिशा-दिमोदकं । कटुत्रयवटिका ।

यक्ष्मश्वासाधिकारयोः,—श्वासान्तकरसः । शृङ्गेश्वरवटिका । बृहद्वासावलेहः । रससागरः । बृहत्तालिशादिमोदकं । चन्दनेश्वरमोदकं । वासकेश्वरघृतं । कण्टकार्य्यादिघृतं । रसकल्पवटिका । चन्दनादितैलं । बृहच्चन्दनादितैलं । बृहत्तालिशादिचूर्णं । बृहल्लौहेश्वररसः । बृहदर्केश्वररसः । बृहद्दालिम्बेश्वरघृतं । बृहच्चन्दनेश्वरतैलं । रत्नामृतयोगः ।

वातरोगाधिकारे, वातान्तकरसः । वातारिरसः । सैन्धवेश्वररसः । लौहेश्वररसः । मरि-च्यादिचूर्णं । रङ्गराजरसः । योगराजघृतं । कैशराजघृतं । रत्नेश्वरघृतं । सिंहेश्वरघृतं । पञ्च-रत्नघृतं । अमृतार्णवघृतं । सर्व्वेश्वरघृतं । विष्णुतैलं । बृहद्विष्णुतैलं । कुब्जप्रसारणीतैलं । बृह-न्माषतैलं । निरामिषमांसतैलं । बृहद्बीजतैलं । पारिजाततैलं । योगराजगुग्गुलुः । रससुन्दरं । रसकज्जली । मानायोगाः । चिन्तामणिरसः । बदरीरात्रियोगः । प्रलावनियागः । पुष्परसतैलं । बृहदेरण्डतैलं । सैन्धवादितैलं । बृहत्सैन्धवादितैलं ।

उन्मादरोगे,—शिवाघृतं । नारायणघृत । छागलादिघृतं । बृहत्कल्याणमोदकं । बृहत्-शिवाघृतं । बृहत्क्षीरघृतं । उडुम्बरघृतं । मध्यमनारायणतैलं । बृहत्हिमसागरतैलं । बृहत्पुक-मलपारिजाततैलं । वाय्वालादिमोदकं । मथीश्वरमोदकं । बृहत्शतमूल्यादिमोदकं ।

मूत्रकृच्छ्राधिकारे,—मूत्रकृच्छ्रान्तकमोदकं । कौमुदेश्वररस । बृहत्कल्याणसिन्धुः । इन्द्रेश्वर-मोदकं । बृहत्पाणिभद्रमोदकं । बृहद्वङ्गेश्वरघृतं ।

प्रमेहाधिकारे,—रससारचूर्णं । कैशोरेश्वरतैलं । बृहत्तरुणेश्वरतैलं । बृहत्कदल्यादिघृतं । बृहद्धात्रीघृतं । बृहत्हरीतकीश्वरः । बृहत्तरुणेश्वरः । कल्पतरुमोदकः । बदरेश्वरयोगः । कर्पूरमोदकं । मेरुमन्दरमोदकं । सुरेश्वरीयोगः । कैशोरचूर्णं । ईशावलेहः । इन्द्रेश्वरघृतं । बृहन्मकरध्वजः । लक्ष्मीनारायणतैलं । वङ्गेश्वरघृतं ।

प्रदराधिकारे,—हरीतकीयोगः । माधवेन्द्रयोगः । रामदन्तिमूलयोगः । वज्रपुष्पकलियो-गः । कुमुद्योगः । रक्तपङ्कजबीजयोगः । श्वेतपङ्कजबीजयोगः । बृहत्कमलाद्यतैलं ।

सूतिकारोगाधिकारे,—दार्व्यादियोगः । शिवाधात्रीघृतपिष्टं । शतावरीप्रलेपः । धन्या दिपाचनं । सूतिकाभरणवटिका । शुण्ठीखण्डः । तालमूल्यादिमोदकं । बृहत्पुनर्नवादितैलं । दूर्व्वादियोगः । पिङ्गलादियोगः । पिप्पल्यादिपाचनं ।

गर्भस्रावाधिकारे,—गर्भस्थापनोपायकथनं । मेथियोगः । पुरातनपञ्चयोगः । बन्ध्यादोष-प्रतीकारकथनं । बाधकचिकित्सा । लक्ष्मणादिकं । तुलस्यादियोगः । मेथिकादियोगः । कार्पा-सादियोगः । योगेश्वरमोदकं ।

मृतवत्सादिचिकित्सा,—कर्णामृतयोगः । जीवितयोगभारणं । गन्धपुष्पकं । कुमारेश्वरमो-दकं ।

स्वरभेदे—वाजिगन्धादिप्रलेपः।

रक्तपित्ताधिकारे,—हरीतकीयोगमस्थं। नागरादियोगः। वासादिक्वाथः। कुष्माण्डखण्डः। हृद्वासादितैलं। योगेन्द्रमोदकं। हरीतक्यवलेहः।

भगन्दराधिकारे,—गुग्गुलेश्वररसः। प्रलेपयोगः। फणिफेनतैलं। जम्बीरेश्वररसः।

दाहरोगाधिकारे,—ताम्बूलेश्वररसः। मुस्तकादिक्वाथः। अमृताक्वाथः। धान्यादिमोदकं। प्राणवल्लभमोदकं। बृहत्प्राणेश्वरमोदकं। धन्यादिघृतं। बृहद्गुडूचीतैलं।

अम्लवाताधिकारे,—अम्लपित्ताधिकारे च—पटोलादिचूर्णं। अजमोदादिमोदकं। शङ्खेश्वरवटिका।

दन्तरोगाधिकारे,—दामीपत्रादियोगः। तुलस्यादियोगः।

गुल्मरोगाधिकारे,—श्रीहगुल्मान्तकरसः। बृहत्ताम्रेश्वररसः। बृहत्रसकुमारीरसः। निर्गुण्डियोगः। बृहच्चतुर्मुखरसः। बृहत्हिङ्गुलेश्वररसः। अलम्बुषामूलयोगः। अपामार्गक्षारचूर्णं। स्फटिकेश्वरवटिका। अमृतार्णवरसः। द्रावकः। योगरत्नचूर्णं। सर्व्वजयचूर्णं। राजेश्वरवटिका।

कामलाहलीमकाधिकारे,—कामलारिरसः। लोहेश्वररसः। बृहद्रसमण्डूर्यं। बृहत्त्रिकटादिलौहः। हरीतकीरसः। बृहद्भूनिम्बादिरसः। नस्ययोगाः। मूलकक्कयोगः। पुरन्दरतैलं।

पाण्डुरोगाधिकारे,—पाण्डवान्तकरसः। अङ्कुरत्वग्योगः। सौभद्रवटिका। पञ्चस्वररसः। रसहिङ्गुलवटिका। मण्डूकेश्वररसः।

तृष्णाधिकारे,—सैन्धवादिवटिका। नानायोगाः।

विस्फोटाधिकारे,—खदिरादियोगः। सोमराजादिक्वाथः। दधिगुड़ाम्लयोगः। विडङ्गादिमोदकं। भार्ग्यादियोगः।

विषाधिकारे,—यष्ट्याह्वयोगः। शेपालयोगः। समर्थ्यादिमूलयोगः। क्षुद्रमूलादियोगः। कुमुद्योगः। श्रौष्ट्यादियोगः। चिन्तामणिवटिका। महामूलयोगः। अपामार्गपत्रयोगः। कर्णमलयोगः। लौहजङ्घादियोगः।

हिक्काधिकारे,—होमदानादिक्रिया। विभीतकावलेहः। पञ्चरत्नघृतं।

छर्द्दीरोगाधिकारे,—पिप्पल्यादिप्रलेपः। मरिचादिचूर्णं। बृहद्रसामृतवटिका। पुष्करादिवटिका।

दद्रुरोगाधिकारे, गजकण्टकादिघृतं। दधिमस्तुयोगः। विविधलेपनानि। चक्रदधिकर्दमादियोगाः। कलकुटवटिका। शिंसपामोदकं। अपामार्गवटिका।

मानगन्धचिकित्सायां,—विल्वादिप्रलेपः। पुष्पयोगः। यमानीयोगः। आर्द्रकयोगः। उशीरादियोगः। हरीतक्यादियोगः।

विषमज्वरचिकित्सायां,—पानभक्षणादियोगः। चौरादियोगः। पुनर्णवायोगः। त्रिदि-ग्धिकायोगः। जयन्तीयोगः।

राजयक्ष्मचिकित्सायां,—विभीतककफलादियोगः। रोगाणामुत्पत्तिदृष्टान्तकीर्त्तनं। कलिकाल-माहात्म्यकथनं।

वाजीकरणाधिकारे, - श्वेतार्कादियोगः। शतमूल्यादियोगः। पारिभद्रयोगः। कामेश्वर-वटिका। शाल्मलयोगः। अर्केश्वररसहायागः। त्वक्मिश्रयोगः। वृहद्रस्नवीजमोदकं। वृहत्स्वर्ण-गुटिका। दरिद्रदोषापायचिकित्सा।

पुष्टाधिकारे,—वृहत्कामेश्वरः। वृहदिन्द्रेश्वरः। वृहत्लोहेश्वरमोदकं। वृहद्भुवनेश्वर-मोदकं। हैमवतीमोदक। त्रिफलामोदक। पारिभद्रमोदकं। कुष्माण्डमोदकं। श्रीफलादिमो-दकं। धात्रीमोदक। वृहत्कमलेश्वरतैलं। कामरूपेश्वरतैलं। वृहन्नारायणतैलं। वृहच्चन्द्रप्रभा-तैलं। त्रैलोक्यमोहनतैलं। वहत्पुष्पेश्वरतैलं। वहत्श्रीगोपालतैलं। जीवनारायणतैलं। अमृतार्णवमोदकं। ग्रन्थेऽस्मिन् सर्व्वेच रोगाणां कर्म्मविपाकादिकथनपूर्व्वकमुत्पत्तिप्रकारादि-कीर्त्तनञ्च।

---

No. 2941. मानससेवासंक्षेपः। Substance, country-made yellow paper, 12 × 6 inches. Folia, 2. Lines, 16 on a page. Extent, 72 ślokas. Character, Bengali. Date ? Place of deposit, Zillá Vírbhúma, Gráma Podo, Vinoda-vihárí Kavirája. Appearance, new. Prose. Correct.

**Mánasasevá-saṅkshepa.** Intellectual worship of Rádhá and Krishṇa, by imagining oneself as a serving-maid to them, no ritual or offering of any kind being resorted to. Anonymous.

अथ मानससेवा।

**Beginning.** आत्मानं प्राणसखीसमनुगां तत्परिचारिकां सखीं मत्वा ब्राह्मे मुहूर्त्ते तदाज्ञया वासन्तीकुञ्जमध्यकेलिशय्यास्थितौ श्रीराधाकृष्णौ प्राक्शिक्षितशुकशारिकावाक्येन विनिद्रौ कृत्वा—इत्यादि।

**End.** तदनन्तरं वहिर्निर्गत्य कुञ्जद्वारि स्थित्वा तयोः गुणलीलाप्रेमकथनं कृतव-तीति।

**Colophon.** इति मानससेवासंक्षेपः।

विषयः। वाह्यपूजोपकरणादिकं विना मनोराज्यविजृम्भणमात्रेण सखीभावमवलम्ब्य राधाकृष्णयोः सेवनादिप्रकारकीर्त्तनं।

---

**No 2842.** साधनपद्धतिः। Substance, country-made yellow paper, 12 × 6 inches. Folia, 2. Lines, 16 on a page. Extent, 100 Ślokas, Character, Bengali. Date, ? Place of deposit, Zillá Vírbhúma, Gráma Podo, Vinodavihári Kavirája. Appearance, new. Prose and verse Correct.

**Sádhana-paddhati** Directions for the worship and service of Rádhá and Kṛishṇa—a Vaishnavite manual, as ordained by Rúpa Gosvámí.

**Beginning** ध्यायेत् श्रीगुरुमेवमनुगं श्रीमच्छचीनन्दनं
प्रेष्ठं दासमथ प्रकाशमपि तद्धामैकदेशस्थितं।
संसेव्यैतदनुज्ञया परपरादीन्साद्दशान् भावयन्
श्रीचैतन्यकृपागुरुक्तिपद्धपौनाम्ना व्रजं प्रव्रजेत्॥

**End.** धमरालिदुकूलधारिणौ मुदिता मेऽस्तु विलासमञ्जरी॥

**Colophon.** इति श्रीरूपगोस्वाम्युक्तसाधनपद्धतिः।

विषयः। राधाकृष्णयोः साधनप्रकारकथनं।

---

**No. 2943** स्तवमालाभूषणम्। Substance, country-made paper, 11 × 5 inches. Folia, 97. Lines, 16 on a page Extent, 4,311 Ślokas. Character, Bengali. Date, ? Place of deposit, Zillá Vírbhúma, Gopalpura, Rámamohana Kavirája Appearance, old. Prose. Correct.

**Stava-mábá-bhúshaṇa.** A gloss on certain hymns composed by Rúpa Gosvámí, and compiled by Jíva Gosvámí. By Vanamálí Vidyábhushaṇa.

**Beginning.** विभिविरक्तिश्रीहरिकथानकीर्त्तनकृतात्युग्मात्।
युक्कमूर्द्ध्यं मम्मः तं स्तवमालार्थदेशिकं वन्दे॥
पुष्पमिति। उदारं मामद्विकोक्तिः।

**End.** श्रीरूपदेवः कवर्णैकसिन्धुस्तवालिमेतां यदि नाकरिष्यत्।
भक्ता यथावद्व्रजराजसूनोर्नावा गमिष्यन् गुणरूपलीलाः॥
विद्याभूषणरचिते स्तवमालाभूषने भाष्ये।
परितुष्यतु वनमाली वररुचिमाली-रते तस्मिन्॥

**Colophon.** इति स्तवमालाव्याख्या समाप्ता।

विषयः। रूपगोस्वामिकृताया जीवगोस्वामिसंग्रहीतायाः स्तवमालाया व्याख्यानं।

**No 2944.** पदामृतसमुद्रटीका । Substance, country-made paper, 14 × 5 inches. Folia, 95. Lines, 4 on a page. Extent, 4,370 ślokas. Character, Bengali Date, Sk. 1704. Place of deposit, Zillá Vírbhúma, Gopálapura, Rámmohana Kaviràja. Appearance, old. Prose. Correct.

**Padámrita-samudra.** An anthology of Vaishṇavite hymns, some in Sanskrit, others in Bengali, together with glossorial and explanatory notes in Sanskrit. Anonymous.

श्रीश्रीराधाकृष्णः ।

**Beginning.** ग्रन्थारम्भे निजेष्टदेवतानिष्ठाभीष्टसिद्धाकाङ्क्षी कोऽपि श्रीयुक्तमित्यादिना प्रणमति ।

**End.** अत्र 'तोमार' इति यदस्ति तदभेदेनेति बोध्यं । विषयविशेषस्य भोगकाले स्वादुविशेषात् परकाले महापीड़ादायकत्वात् । खेदारपूर्व्वकं प्रेमयाच्ञा स्पष्टास्ति ।

**Colophon.** समाप्तोऽयं ग्रन्थः । शकाब्दाः १७०४ ।

विषयः । जयदेव सनातन-चण्डिदास-विद्यापतिप्रभृतीनां संस्कृतवाङ्गलोभयविधपद्यानि संगृह्य गुम्फितस्य पदामृतसमुद्रस्य संस्कृतभाषया रागादिलक्षणप्रदर्शनपूर्व्वकं व्याख्यानं ।

---

**No. 2945.** युगलकिशोरसहस्रनामस्तोत्रम् । Substance, country-made yellow paper, 16 × 5½ inches. Folia, 13. Lines, 6 on a page. Extent, 146 ślokas. Character, Bengali. Date, ? Place of deposit, Jayadeva, Zilá Vírbhúma, Brajavásír Maṭha. Appearanco, old. Verse. Correct.

**Yugalakiśora-sahasranáma stotra.** A hymn in which a thousand epithets in praise of Rádhá and Krishṇa are strung together. Each epithet is accepted as a name. The hymn is attributed to the saint Nárada.

श्रीराधाकृष्णाभ्यां नमः ।

**Beginning.** अस्य श्रीयुगलकिशोरसहस्रनामस्तोत्रस्य श्रीनारद ऋषिः श्रीराधावल्लभो देवता श्रीराधावल्लभचरणकमलप्राप्तये जपे विनियोगः । इत्यादि ।

**End.** तस्माद्वृन्दावने गोप्यो गोविन्दनिकटे स्थिताः ।
यथापूर्व्वं विक्रीड़न्त्यो ज्ञातपूर्व्वा मया मुने ॥

**Colophon.** इति श्रीयुगलकिशोरसहस्रनाम समाप्तं ।

विषयः । श्रीराधाकृष्णयोर्युगलनामस्तोत्रं ।

---

**No 2946** संक्षिप्तसारपरिशिष्टम्। Substance, palm-leaf, 16 × 2 inches. Folia, 16. Lines, 4 on a page. Extent, 1,219 ślokas. Character, Bengali. Date, ? Place of deposit, Jayadeva Gráma, Zillá Vírabhúma, Brajavásís' Maṭha. Appearance, old. Prose. Correct.

**Sańkshiptasára-pariśishṭa.** A supplement to the *Sańkshiptasára* grammar. It supplies such rules as are not given in the original text. By Goyichandra, revised by Jumaranandi.

**Beginning.** जुमरनन्दिपरिशोधितभागात् परिशिष्टमस्ति यत्किञ्चित् ।
तत् सम्पूर्णं कुरुते गोयीचन्द्रः प्रकाशिया इत्था ॥
स्त्री पुं । तद्वन्द्वाद्यो यावन्त त्वार्था प्रागुक्ता इत्यादि ।

**End.** आकारस्य स्थाने इति कृते विकल्पः स्यात् नित्यमखट्टेति ॥

**Colophon.** इत्यौत्थासनिकश्रीगोयीचन्द्रविरचितं जुमरनन्दिपरिशोधितं परिशिष्टं समाप्तं ।

विषयः । संक्षिप्तसारव्याकरणमूलानुक्तानां प्रक्रियाणां प्रदर्शनं ।

---

**No 2947** हंसदूतटीका। Substance, country-made paper, 15 × 8½ inches. Folia, 30. Lines, 5 on a page. Extent, 787 ślokas. Character, Bengali. Date, ? Place of deposit, Jayadeva Gráma, Zillá Vírabhúma, Brajavásís' Maṭha. Appearance, old. Prose. Correct.

**Hańsadúta-ṭíká.** A commentary on a poem called *Hańsadúta* or "messenger drake," an imitation of the *Meghadúta* of Kalidása. Its subject is a message from Nala, king of *Vidarbha*, to his long-separated wife, Damayantí. By Viśvanátha Chakravartí.

**Beginning.** वन्दे गौरं कृपासिन्धुं स्वगुणैर्ग्रथितं स्वयं ।
सामचिन्तामणेर्हारं योऽजिप्रहदिदं जगत् ॥
वन्दे श्रीराधिकापादान् श्रीकृष्णप्रेमदर्शकान् ।
भवसिन्धुमिमं मन्ये गोष्पदं यत्समाश्रयः ॥
अथ नानाप्रकारश्रीभगवल्लीलावर्णनं प्रारिप्सुः श्रीरूपगोस्वामी हंसदूताख्यं कुर्व्वाणो विहिताचारपरम्पराप्राप्तं मङ्गलं स्वेष्टदेवतास्मरणरूपमित्यादि ।

**End.** सान्द्रां घनीभूतां प्रमदस्रवरीमानन्दधारां प्रथयतु जनयत्वित्यर्थः ।
एतेनास्याचिन्त्यमहिमत्वं सूचितं ।

Colophon. इति श्रीविश्वनाथचक्रवर्त्तिविरचिता हंसदूतटीका समाप्ता ।

विषयः । रूपगोस्वामिकृतहंसदूतस्य व्याख्यानं ।

---

No. 2948. अभिसाराद्यष्टरसः । Substance, country-made paper, 14 × 5 inches. Folia, 21. Lines, 8 on a page. Extent, 100 Ślokas. Character, Bengali. Date, ? Place of deposit, Jayadeva Gráma, Zillá Vírabhúma, Brajavásis' Maṭha. Appearance, old. Prose and verse. Incorrect.

**Abhisárádyashṭarasa.** An amatory poem describing the eight conditions of women in love. By Gopáladása.

अथाभिसारिका ।

Beginning. कान्तार्थिनी तु या याति सङ्केतं साभिसारिका ।

इयं द्वादशविधा । तथाहि,—

ज्योत्स्नीतामसीवर्षादिवसाभिसारिका...

End. यदुनाथ भवन्तमागतं कथयिष्यन्ति कदा मदालये ।

युगपत्त्वरितः प्रधाविता विकसद्भिर्वदनेन्दुमण्डलैः ॥

Colophon. इति श्रीगोपालदासकृतोऽभिसाराद्यष्टरसः सम्पूर्णः ।

विषयः । अभिसारिकाद्यष्टविधनायिकानिरूपणं ।

---

No. 2949. प्रायश्चित्तसारकौमुदी । Substance, palm-leaf, 16 × $2\frac{1}{2}$ inches. Folia, 82. Lines, 4 on a page. Extent, 558 Ślokas. Character, Bengali. Date, ? Place of deposit, Jayadeva Gráma, Zillá Vírabhúma, Yádavachandra Gosvámí. Appearance, old. Prose. Correct.

**Práyaśchittasára-kaumudí.** A summary of the rules and rituals regarding expiations. Anonymous.

Beginning. सान्द्रानन्दमयं रामं प्रणम्य वनमालिना ।

वितन्यते प्रायश्चित्तसारकौमुदी सुन्दरी ॥

अथ प्रायश्चित्तनिरुक्तं ।

तत्र मान्याः । पापक्षयमात्रसाधनं कर्म प्रायश्चित्तमिति । तच्चिन्त्यं चान्द्रायणादीनां पापक्षयातिरिक्तस्वर्गादीनामपि जनकत्वासम्भवात् । इत्यादि ।

**End.** श्राद्धदिने स्त्रीगमने अहोरात्रमभोजनं दिवामैथुने दिनमेकं व्रती भवेदिति ॥

**Colophon.** इति प्रायश्चित्तसारकौमुदी सम्पूर्णा ॥

**विषयः ।** नानाविधवचनानां मीमांसापूर्व्वकं कृतोऽयं ग्रन्थः । प्रायश्चित्तलक्षणनिरूपणं । परिभाषाकथनं । प्रायश्चित्तपूर्व्वाङ्गकृत्यकीर्त्तनं । प्रायश्चित्तोपदेशः । गोवधप्रायश्चित्तनिरूपणं । गोवधापवादः । अज्ञानकृतरोधादिनिमित्तगोवधप्रायश्चित्तकथन । अपालनवधप्रायश्चित्तं । प्रायश्चित्ताभावनिरूपण । प्रतिलोमजातिवधप्रायश्चित्तकथनं । स्त्रीवधप्रायश्चित्तं । व्यभिचारिणीस्त्रीवधप्रायश्चित्तं । गर्भवधप्रायश्चित्तं । धेनुमङ्गलनादिनिरूपणं । भोजनलक्षणं । चाण्डालाद्यन्नभोजनप्रायश्चित्तं । तत्स्पृष्टान्नभोजनप्रायश्चित्तं । अन्त्यजस्त्रीगमनप्रतिग्रहादिप्रायश्चित्त । शूद्रान्नभोजनप्रायश्चित्तं । कापालिकान्नभोजनप्रायश्चित्तं । केशकीटोपहतान्नादिभोजनप्रायश्चित्तं । गोमांसभक्षणप्रायश्चित्तं । तदन्ते पुनरुपनयनविधानं । लशुनादिभक्षण प्रायश्चित्तं । रेतोमूत्रपुरीषादिभक्षणप्रायश्चित्तं । तद्दूषितफलादिभक्षणप्रायश्चित्तं । मृक्षोद्भभक्षणप्रायश्चित्तं । पर्य्युषितशुष्कद्रव्यभक्षणप्रायश्चित्तं । शूद्रभाजन-भग्नपात्रकांस्यपात्रे भोजनप्रायश्चित्तं । सूतकमृतकान्नभोजनप्रायश्चित्तं । हस्तदत्तशूद्रादत्तघृतादिभक्षणप्रायश्चित्तं । अकृताचमनस्य पानभोजनादिप्रायश्चित्तं । देवतातिथिभृत्यादिवर्ज्जनभोजनप्रायश्चित्तं । भोजनकाले पुरीषाद्युत्सर्गप्रायश्चित्तं । तैलाभ्यङ्गादिपूर्व्वक भोजनप्रायश्चित्तं । स्त्रीयोच्छिष्टभोजनप्रायश्चित्त । ब्राह्मणोच्छिष्टभोजनप्रायश्चित्तं । विडालकाकाद्युच्छिष्टभोजनप्रायश्चित्तं । कुत्सितपङ्क्तिशूद्रपङ्क्त्यादिभोजनप्रायश्चित्तं । पीतशेषजलदुग्धादिपानप्रायश्चित्तं । महापातकनिरूपणं । अतिपातकादिनिरूपणं । ब्राह्मणवधप्रायश्चित्तं । गोब्राह्मणवर्ज्जमाततायिवधे प्रायश्चित्ताभावकथनं । सुरापानादिप्रायश्चित्तकथनं । गुरुलघुसंसर्गकालनिरूपणं । शत्रुस्त्रीणामप्यवध्यत्वकथनं । संसर्गप्रायश्चित्तं । व्रात्यप्रायश्चित्तं । सन्ध्यावन्दनादिनित्यकर्म्माकरणप्रायश्चित्तं । शूद्रप्रतिग्रहप्रायश्चित्तं । असत्यभाषणप्रायश्चित्तं । स्वभार्य्यायां मातृ-भगिन्यादिवचनप्रायश्चित्तं । उच्छिष्टस्य चाण्डालादिदर्शनप्रायश्चित्तं । एवं सूर्य्यादिदर्शनस्य प्रायश्चित्तं । विप्रादिमध्यगमनप्रायश्चित्तं । अग्नौ पादप्रतापनस्य कुशे पादमार्ज्जनस्य च प्रायश्चित्तं । गुरु-ब्राह्मणतिरस्कारे प्रायश्चित्तं । मिथ्याशपनादिप्रायश्चित्त । जलादिभ्रष्टप्रायश्चित्तं । जलाग्न्यादावशुचिप्रक्षेपप्रायश्चित्तं । शक्रधनुः-पलाशाग्न्यादिदर्शनप्रायश्चित्तं । देवागारादिकृतपृष्ठकादिना खट्टकरणप्रायश्चित्तं । ष्ठीवनादिप्रायश्चित्तं । व्रतभङ्गप्रायश्चित्तं । चाण्डालादिस्पर्शनप्रायश्चित्तं । उच्छिष्टविप्रेण सह विप्रादिस्पर्शनप्रायश्चित्तं । उच्छिष्टस्य मानुषादिपुरीषस्पर्शप्रायश्चित्तं । रजस्वलास्पर्शप्रायश्चित्तं । रजस्वलायाः शूद्रीकुक्कुरशूकरादिस्पर्शनप्रायश्चित्तं । सामान्यतः स्पर्शप्रायश्चित्तापवादः । सर्व्वेषां प्रायश्चित्तानां संक्षेपतो व्यवस्थाकथनञ्च ।

---

**No. 2950.** यमुनाष्टकम्। Substance, country-made paper, 14¼ × 4½ inches. Folium, 1. Lines, 10. Extent, 17 ślokas. Character, Bengali. Date, ? Place of deposit, Jayadeva Gráma, Zillá Vírabhúma, Jádavachandra Gośvámí; another copy at S'onapura-grám, Post Boyáliyá, Zillá Rájasáhí, Sáhá Bábu. Appearance, very old. Verse. Correct.

**Yamunáshṭaka** A hymn in eight stanzas in praise of the river Yamuná. By Rúpa Gośvámí.

**Beginning.** भ्रातुरन्तकस्य पत्तने विपत्तिहारिणी
प्रेक्षयातिपापिनोऽपि तापसिन्धुतारिणी।
नीरमाधुरीभिरप्यशेषचित्तबन्धिनी
मां पुनातु सर्व्वदारविन्दबन्धुनन्दिनी॥

**End.** तुष्टबुद्धिरष्टकेन निर्म्मलोर्म्मिचेष्टितां
त्वामनेन भानुपुत्रि सर्व्वदेववेष्टितां।
यः स्तवीति वर्द्धयस्व सर्व्वतापमोचने
भक्तिपूरमस्य देवि पुण्डरीकलोचने॥

**Colophon.** इति श्रीरूपगोस्वामिना विरचितं श्रीयमुनाष्टकं समाप्तं।

विषयः। यमुनायाः स्तवनं।

---

**No. 2951.** कृष्णाह्निककौमुदी। Substance, country-made paper, 10 × 4 inches. Folia, 52. Lines, 9 on a page. Extent, 1,101 ślokas. Character, Bengali. Date, ? Place of deposit, Jayadeva Gráma, Zillá Vírabhúma, Jádavachandra Gośvámí. Appearance, very old. Verse. Correct.

**Kṛishṇáhnika-kaumudí.** Poetical descriptions of Kṛishṇa's amatory career in Vṛindávana By Vilvamañgala Ṭhákura.

**Beginning.** रजनिचरमयामे स्तोकताराभिरामे
किमपि किमपि वृन्दादेव्यजाताभिनन्दा।
विततिरकृत राधाकृष्णयोः स्वापबाधा-
मतिमृदुवचनानां शारिकाणां शुकानां॥
प्रथममनुरोधा बोधयामास राधा-
मसकृदसमकल्पैः शारिकालिः सुजल्पैः।
अथ कृतसुखदोहः कृष्णमुद्धृतमोहः
किमपि शुकसमूहः प्रेमदृप्तापगूहः॥ इत्यादि।

**End.** तन्त्रास्मिन्नष्टे सति मधुमदे किञ्चिदुद्वावशिष्टे
प्रत्यासन्नः समदनमदो यः समस्तः परीष्टे।
तस्मात्सम्यो समजनि जनीमण्डले माधुरीया
सा वाग्देवी + + + + + + + + + ॥

**Colophon.** इति श्रीविल्वमङ्गलविरचितायां श्रीकृष्णाह्निककौमुद्यां षष्ठः प्रकाशः।

विषयः। १ प्रथमप्रकाशे,—शारिकाशुकाभ्यां राधाकृष्णयोर्निकुञ्जमधितिष्ठतोः प्रबोधादिवर्णनं। प्रबोधितयोस्तयोश्चेष्टादिवर्णनं। २य प्रकाशे,—स्वगृहमागतयोः कपटनिद्रयोस्तयोः पुनः प्रबोधनादिवर्णनं। बाल्यभोगभोजनादिवर्णनं। गोचारणवर्णनं। जलविहारवर्णनं। वनविहारवर्णनं। अभिषेकादिवर्णनं। ३ये,—नन्दगृहे पाकक्रियापारिपाट्यकथनं। तत्र व्यञ्जनलड्डुकादीनां नामादिकथनं। भोजनादिवर्णनं। निकुञ्जवर्णनं। तत्र षड्तुवर्णनं। कृष्णस्य तत्र गोपीभिः सह साक्षात्कारादिवर्णनं। ४ र्थे,—श्रीकृष्णस्य रूपभूषादिवर्णनं। मुरलीनिनादेन आकृष्टाया सवयस्याया राधायाः कुसुमचयनव्याजेन निकुञ्जप्रवेशादिवर्णनं। राधाया वेशविन्यासादिवर्णनं। राधाकृष्णयोर्विलासादिवर्णनं। तत्र अक्षक्रीड़ादिकथनं। ५ मे,—६ ष्ठे च,—श्रीकृष्णस्य वृन्दावनप्रवेशवर्णनं। गृहप्रत्यागमनपूर्व्वकं वेशभूषापरिवर्त्तनादिवर्णनं। गोदोहनवर्णनं। गोष्ठशोभावर्णनं। शयनवर्णनं। राधाया अभिसारादिवर्णनं। मधुपानादिवर्णनं। रासलीलादिवर्णनञ्च।

---

**No. 2952.** गौरचन्द्राष्टकम्। Substance, country-made paper, 10 × 3½ inches. Folium, 1. Lines, 16. Extent, 25 ślokas. Character, Bengali. Date, ? Place of deposit, Jayadeva Gráma, Zillá Vírabhúma, Vinodavihári Chaṭṭarája. Appearance, old. Verse. Incorrect.

**Gaurachandráshṭaka.** A hymn in eight stanzas in praise of Gaurachandra *alias* Chaitanya. Anonymous.

**Beginning.** स्वर्धुन्याश्चारुतीरे स्फुरितमतिबृहत्कूर्म्मपृष्ठाभगात्रं रम्यं रामावृतं सन्मणिकनकमहासद्मसंघैः परीतं।
नित्यं प्रत्यालयोद्यत्प्रणयभरलसत्कृष्णसंकीर्त्तनाढ्यं श्रीवृन्दाटव्यभिन्नं त्रिजगदनपश्रीनवद्वीपमीड़े॥ इत्यादि।

**End.** श्रीमत्स्वीयाङ्गभासोज्ज्वलितदशदिशः स्फीतसद्वस्त्रवीतान्, श्रीमत्कण्ठीसुमालासुतिलकभगवन्नाममुद्राङ्किताङ्गान्।

प्रेम्ना सखेद्वाच्योत्पुलकमुखतनूक्तीर्त्तनानन्दमत्तान्, श्रीवासाद्दीन् स्मरामि प्रभवरसमितः संस्थितान् सर्व्वभक्तान् ॥

Colophon इति गौरचन्द्राष्टकं सम्पूर्णं ।

विषयः । गौराङ्गमहिम्न तत्परिकरादिवर्णनरूपं स्तोत्रं ।

---

No 2953 अष्टकालसेवानिरूपणम् । Substance, country-made paper, 12 × 4 inches Folia, 3. Lines, 5 on a page. Extent, 56 slokas. Character, Bengali. Date, ? Place of deposit, Jayadeva Gráma, Zilla Vírabhúma, Vinodavihári Chaṭṭarája. Appearance, old. Prose. Generally correct.

Ashṭakála-sevá-nirúpaṇa. The service due to Krishṇa from his female associates at the eight watches of the day and night. Anonymous.

Beginning. अथ सेवापरायणसखीनां क्रिया ।

वस्त्रालङ्कारपाचादिनीरताम्बूलभङ्क्रिया ॥ इत्यादि ।

End. कृष्णपचे नीलमणिचूड़ा-नीलपट्टवस्त्रकस्तूरीचर्च्चा-नीलमणिहारेत्यादि समयानुरूपवेशकरणेन सेवापरायणा सखीति ।

Colophon. इति अष्टकालसेवानिरूपणं ॥

विषयः । सामान्यतः-सखीलक्षणकथनपूर्व्वकं प्रातः-सङ्गव-मध्याह्नाद्यष्टसमयेषु श्रीकृष्णसेवनरूपसखीकार्य्यनिरूपणं ।

---

No. 2954. विलापकुसुमाञ्जलिः । Substance, country-made paper, 10 × $3\frac{1}{2}$ inches. Folia, 12. Lines, 8 on a page. Extent, 216 slokas. Character, Bengali. Date, ? Place of deposit, Jayadeva Gráma, Zillá Vírabhúma, Brahmacháris' Maṭha. Appearance, fresh. Verse. Incorrect.

Vilápa-kusumáñjali. A poem describing the laments of a devotee for his not being able to offer his services to Krishṇa personally. By Rúpa Gosvámí.

Beginning. त्वं रूपमञ्जरि सखि प्रथिता पुरेऽस्मिन्

पुंसः परस्य वदनं न हि पश्यसीति ।

बिम्बाधरे चतमनागतभर्त्तृकाया

यत्ते व्यधायि किमु तत् शुकपुङ्गवेन ॥ इत्यादि ।

End. अयि प्रणयशालिनि प्रणयपुष्टदास्याश्रये
प्रकाममतिरोदनैः प्र+र दुःखदग्धात्मना ।
विलापकुसुमाञ्जलिर्हृदि निधाय पादाम्बुजे
मया तव समर्पितस्तव तनोतु तुष्टिं मनाक् ॥

Colophon. इति श्रीमद्रूपगोस्वामिना विरचितो विलापकुसुमाञ्जलिः सम्पूर्णः ।

विषयः । साक्षात् श्रीकृष्णसेवनार्थंमया कस्यचिद् भक्तस्य मनोराज्यविजृम्भनमिदं ।

---

**No. 2955.** कृष्णकर्णामृतव्याख्या । Substance, country-made paper, 14 × 5 inches. Folia, 26. Lines, 9 on a page. Extent, 1,228 ślokas. Character, Bengali. Date, ? Place of deposit, Jayadeva Gráma, Zillá Virabhúma, Brahmacháris' Matha. Appearance, fresh. Prose. Correct.

**Krishṇakarṇámrita-vyákhyá.** A gloss on Liláśuka's poem entitled *Krishṇakarṇámrita*. By Vrindabanadása.

Beginning. यद्भवे भावितधियः प्रणयोऽथ वाचां
मुद्रापि दुर्गमतमा मुनिपुङ्गवानां ।
रामोत्सुकं मदनमोहनमच्युतं तं
राधासमेधितरसोल्लसितं नतोस्मि ॥
कृपासुधासरिद्यस्य विश्वमाप्लावयत्यपि ।
नीचगेव सदा भाति तं श्रीचैतन्यमाश्रये ॥
वसन्ती कृष्णमाधुर्य्यकेलिसौन्दर्य्यसम्पदं ।
केश्चिन्न भावज्ञा सम्यग्ज्ञेया लीला शुकस्य गीः ॥
मन्दोऽपि कश्चित् श्रीरूपपदाम्भोजमधुव्रतः ।
कृष्णकर्णामृतव्याख्यां विदधाति यथामति ॥ इत्यादि ।

End. अतस्त्रिभुवनकमनीयं तदिदं यन्नेत्रगोचरमित्यहो भाग्यमिति भाव इति ।

Colophon. इति श्रीवृन्दावनदासकृता कृष्णकर्णामृतव्याख्या ।

विषयः । लीलाशुककृतकृष्णकर्णामृताभिधानकाव्यस्य व्याख्यानं ।

---

**No. 2956.** कालीतत्त्वसुधासिन्धुः । Substance, country-made yellow paper, 21 × 5 inches. Folia, 230. Lines, 12 on a page. Extent, 13,972 ślokas. Character, Bengali. Date, Sk. 1774. Place of deposit, Siuḍi, Zillá Vírabhúma, Kuladánanda Mukhopádhyáya. Appearance, fresh. Prose and verse. Correct.

**Kálítattva-sudhásindhu.** An elaborate work on the worship of Kálí, compiled from the Tantras. By Káliprasáda Kávyachanchu.

Beginning. गुरुकृष्णभवानीशगणेशब्रह्मभास्करान् ।
अभेदरूपान् वन्देऽहं धर्मकामार्थमोक्षदान् ॥
या वृन्दारकवृन्दवन्द्यजननी काली करालानना ।
भक्ताभीष्टविधायिनी हरहृदम्भोजे सदाह्लादिनी ॥
भक्तानां भवभीमभीतिहरणी दैत्येन्द्रसंहारिणी ।
तत्पादाब्जयुगामृतं पिबतु मच्चेतश्चकोरः सदा ॥
नत्वा कालीपदं कालीप्रसादेन द्विजन्मना ।
कालीतत्त्वसुधासिन्धुस्तन्यते ज्ञानहेतवे ॥
कालीतत्त्वसुधाम्बुधाविह सदा योगीन्द्रवृन्दारकैः ।
सान्द्रानन्दसुधारसः स्वहृदयैरास्वाद्य सम्पीयतां ॥
ये केचित् पिशुना विदूषणपराः कल्माषबुद्ध्यापि चेत् ।
दृष्ट्वैनीममहो तथापि सुखदास्तेषां स्वशक्तेरसौ ॥ इत्यादि ।

End. व्योमस्थं तालजङ्घास्थं विन्दुनादविभूषितं । ह्रूँ० ।
ॐ तत्सत् ॐ अन्नपूर्णायै नमः ।

Colophon. इति स्फूर्जीयमाघ्यकुलोद्भवविरचिताचिन्त्यश्रीचण्डीचरणाश्रितश्रीचण्डीचरणाम्बुजमधुमधुपायितचेत-श्रीकालीप्रसादकाव्यचञ्चुविरचिते कालीतत्त्वसुधासिन्धौ द्वात्रिंशत्तरङ्गः समाप्तः ॥

वेदाब्धिसिन्धुचन्द्राङ्के माघे दिनचतुष्टये ।
समाप्तिमगमद्ग्रन्थः कालीतत्त्वसुधार्णवः ॥
व्यलेखि वहुयत्नेन पद्मलोचनशर्म्मणा ।
काश्यां सुरधुनीतीरे स्थित्वा सूर्य्यजवासरे ॥

विषयः। १प्रथमतरङ्गे,—भूमिकाकथनं। तरङ्गनियमः। पशुलक्षणं। आस्यालक्षणादिकं। दीक्षाशब्दनिर्व्वचनं। गुरुं विना पुस्तकस्थमन्त्रग्रहणे दोषः। दीक्षाया अभावे दोषः। स्वगुर्वादिभ्यो मन्त्रग्रहणे दोषः। सिद्धमन्त्रे दोषाभावः। सिद्धमन्त्रनिरूपणं। निषिद्धगुरोर्मन्त्रग्रहणे मन्त्रत्यागः प्रायश्चित्तञ्च। स्वप्नलब्धमन्त्रसंस्कारः। निषिद्धप्रसिद्धलक्षणादियुक्तगुरुनिरूपणं। मन्त्रविशेषे गुरुविशेषः। पश्वादिमन्त्रभेदे गुरुगोचरमाहात्म्यं। गुरुमाहात्म्यादिकथनं। गुरुशब्दार्थकथनं। शिष्यलक्षणादिकं। ब्राह्मणस्य शूद्रशिष्यकरणे शूद्रादिमन्त्रग्रहणे च दोषकथनं। स्त्रीशूद्रयोः प्रणवस्वाहायुक्तमन्त्रदानविचारः। कलावागमोक्तदीक्षावश्यकता। तन्त्रादिशास्त्रे हेतुवाद-संशय—निन्दादिकरणे दोषकथनं। तन्त्रतद्वक्तृप्रशंसा। तन्त्रागमशब्दयोर्व्युत्पत्तिकथनं। १, २, ४र्थं

तरङ्गे,—निराकारस्य ब्रह्मणः साकारत्वनिरूपणं। शक्त्यादीनामभेदनिरूपणं। द्वाविंशदक्षरनामार्थकथनं। दक्षिणापदव्युत्पत्तिः। कालीमन्त्रप्रशंसा। दक्षिणकाली सिद्धकालीप्रभृतीनां मन्त्रकथनं। वीरभावलक्षणं। पशुभावलक्षणं। दिव्यादिभावनिरूपणं। सप्तविधाचारनिरूपणं। कलौ पशुभावप्राशस्त्यं। प्रतिनिधिद्रव्यनिरूपणं। पशुभावादौ पूजाकालव्यवस्था। पूजाधिकारिनिरूपणं। पुरोहितप्रतिनिधिनिषेधः। पशुभावेऽपि बलिदानप्राशस्त्यं। विष्णवे मांसदानविधानं। अवैधहिंसायां दोषः। पूजाधारप्रतिमादिनिरूपणं। पुष्पचन्द्रयोः पूजने प्राणप्रतिष्ठानिषेधः। ५, ६, ७, ८, ९म तरङ्गे,—कालीतारादिविषये चक्रादिविचाराभावकथनं। अकथह—ऋणिधनि—नक्षत्रराशि कुलाकुल-हर-अकडम-षट्पद-वर्गचक्रनिरूपणं। दीक्षाकालस्थानादिकथनं। सप्तपरिधानप्रकारः। मन्त्रशब्दव्युत्पत्तिः। षट्चक्रविधिः। दीक्षाप्रयोगः। कलसप्रमाणं। कलसशब्दनिरुक्तिः। सर्वौषधिः। नवरत्नानि। पञ्चपल्लवाः। उपदेशः। विशेषकुलदीक्षा। स्वकुलदीक्षा। मन्त्रस्य षट्साधनप्रकाराः। मन्त्रस्य दशसंस्काराः। मातृकायन्त्रं। कुलीनानां संस्कारप्रयोगः। मालाविधानं। अक्षमालोत्पत्तिः। वर्णमालोत्पत्तिः। तज्जपप्रकारः। करमालाविधानं। विष्णुविषये विशेषादिकथनं। गुटिकानिर्म्माणं। अक्षतादिना संख्यानिषेधः। महाशङ्खमालाविधिः। मणिनियमः। मुखपुच्छनियमः। शोधनविधिः। गन्धाष्टकप्रभेदः। जपप्रकारः। मालासंस्कारः। पञ्चगव्यकथनं। पुरश्चरणलक्षणं। तत्स्थानं। कूर्म्मचक्रं। भक्ष्यादिनियमः। पुरश्चरणे भोजनपरिमाणं। भोजनपात्रं। जपस्थानादिनियमः। तर्पणहोमाद्यनुकल्पकथनं। सावित्री गायत्री। तज्जपप्रकारः। वैदिकगायत्रीजपे मालाविधानं। घटस्थापनप्रयोगः। १०; ११, १२, १३, १४श तरङ्गे,—वीरपुरश्चरणविधिः। तत्प्रयोगः। ग्रहपूजाविधिः। ग्रहाणां वर्णभेदः। नवग्रहहोमकाष्ठनिरूपणं। ग्रहकवचं। कुमारीपूजास्थानक्रमोपचारदानक्रमनिरूपणं। तत्प्रयोगः। ग्रहणपुरश्चरणविधिः। ग्रस्तास्त ग्रस्तोदये वा दीक्षापुरश्चरणयोर्निषेधः। सूर्य्योदयास्तपुरश्चरणविधिः। एवं चन्द्रस्य। राशि-वार-तिथि-नक्षत्र-योग-करणपुरश्चरणविधिः। संक्रान्तिपुरश्चरणं। शरत्कालपुरश्चरणं। जपरहस्यं। मुखशोधनं। कुल्लुकामन्त्रादिकथनं। सेतुप्रकरणं। तत्साधनादिप्रयोगः। महासेतुसाधनादिप्रकरणं। निर्व्वाणसाधन-तत्प्रयोगः। मन्त्रार्थचैतन्यं। प्राणयोगः। दीपनी। अशौचभङ्गमन्त्रकथनं। मन्त्रशिखा। षड़ध्वमतार्णकथनं। मन्त्रस्य अमृतीकरणं। सप्तच्छदाप्रयोगः। मन्त्रस्य निद्राभङ्गः। आद्याया एकाक्षरमन्त्रप्रयोगः। रहस्यान्तरप्रयोगः। मन्त्रसिद्ध्युपायः। अकारादिवर्णानां ध्यानं। मन्त्रशुद्धिप्रयोगः। योनिमण्डलध्यानं। ककारतत्त्वभावना। प्रफुल्लबीजध्यानं। मन्त्रस्थानध्यानं। मन्त्रध्यानं। कालीबीजध्यानं। श्यामाया द्वाविंशाक्षरमन्त्रध्यानं। एवं तारायाः। पञ्चोपचारदानादिमुद्रा। कुलवृक्षनिरूपणं। १५, १६, १७, १८, १९, २०श तरङ्गे,—प्रातः कृत्यं। शौचविधिः। दन्तकाष्ठपरिमाणकथनादिकं। गुरुध्यान-स्तोत्र-कवचादिकथनं। चौरमन्त्रकथनं। स्नानविधिः। गङ्गामाहात्म्यादिकं। तान्त्रिके कर्म्मणि सौरोल्लेखः। तिलकविधिः। रुद्राक्षधा-

रणं। वट्टाचसंस्कार । सन्ध्याप्रयोगादिकथनं। पार्थिवशिवपूजाविधिः। मृत्तिकाप्रमाणं। विल्वपत्रदानादिक्रमः। विल्वपत्रचयननिषिद्धदिनकथनं। प्रणाममन्त्रः। पुष्पादिदानफलं। मुखवाद्यविधानं। प्रदक्षिणफलं। निर्म्माल्यधारणफलं। पूजाप्रयोगः। विल्ववृक्षस्य उत्पत्तिः। विल्वमूले भृत्युफलं। पुष्पप्रतिनिधिः। वासुदेवविषये रक्तचन्दनदानफलं। तुलसीचयननिषिद्धदिनं। वीरकल्पे विशेषपुष्पकथनं। २१, २२, २३श तरङ्गे,—श्यामाया नित्यपूजाविधिः। पूजास्थाननिरूपणं। आसननिरूपणं। भूतशुद्ध्यादिनिरूपणं। प्राणप्रतिष्ठा। मातृकादिन्यासाः। प्राणायामः। ध्यानान्तरकथनं। अन्तर्यजनविधिः। यन्त्रनिर्म्माणाधारादिकथनं। शोचक्रनाशे प्रायश्चित्तं। अर्घ्यपात्रपरिमाणं। तत्र क्रमः। कामकलानिरूपणं। लेलिहानमुद्रादिकथनं। अष्टादशोपचारादिकथनं। तत्तन्मन्त्राः। गन्धदाने अङ्गुलिनियम। पाद्यादिनिर्म्माणक्रमः। निर्व्विकल्पकमर्घ्यं। मधुपर्कपरिमाणादिकथनं। षोड़शाङ्गादिधूपनिर्म्माणं। नैवेद्यपात्रादिनिरूपणं। ब्राह्म्यादिमातृकाणां ध्यानं। लोकपालमन्त्राः। अस्त्रमन्त्राः। महाकालध्यानं। तर्पणविधानं। नवदीपविधिः। आरात्रिकविधिः। नित्यहोमविधिः। विष्णुविषये नित्यहोमः। माषभक्तबलिविधिः। नित्यजपविधानं। प्रणामविधिः। आत्मसमर्पणं। संहारमुद्रा। प्रार्थनामुद्रा। नैवेद्यमाहात्म्यं। पादोदकमाहात्म्यं। श्यामापूजाप्रयोगः। बलिदानप्रकरणं। शिरोदानविधिः। रुधिरदानविधिः। स्वगात्ररुधिरदानं। कुण्डविधिः। स्रुकस्रुवविधिः। २४, २५, २६, २७, २८, २९, ३०, ३१, ३२श तरङ्गे,—होमविधिः। स्थण्डिलनिर्म्माणं। होमद्रव्यप्रमाणं। अभिषेकविधिः। तत्फलं। पूर्णाभिषेके विशेषकथनं। संविदासाधनपरिपाटी। शक्तिं विना अर्च्चनपाने दोषः। शक्तयः। वर्ज्जनीयाः शक्तयः। विजयापाने कालनियमः। वीराणां स्नानसन्ध्योपासनतर्पणादिनिरूपणं। युवतीवेशधारणविधिः। सुधाघटस्थापनं। कारणस्य चैविध्यकथनं। वह्न्यादीनां कलानिरूपणं। द्रव्यशोधनं। शापविमोचनं। हंसमन्त्रः। पात्रपरिमाणं। असंस्कृतकारणे दोषः। कर्पूराद्यस्तोत्रं। अन्यविधस्तोत्रं। कवचं। सहस्रनाम-शतनामादिस्तोत्रं। भूतलिपिः। अस्याः प्राणप्रतिष्ठादिप्रयोगः। लतासाधनप्रयोगः। शक्तिशुद्धिः। पञ्चतत्त्वानि। कुण्डगोलग्रहणादिविधिः। दूतीयजनं। कुलनायिकाः। चितासाधनं। शवसाधनं। तत्र स्थानासनादिनिरूपणं। एतत्प्रयोगः। दुर्गानाममाहात्म्यं। वर्णकोषः। वीजकोषकीर्त्तनञ्च।

---

**No. 2957. ज्ञानसङ्कुली।** Substance, country-made paper, 19 × 4 inches. Folia, 12. Lines, 9 on a page. Extent, 297 ślokas. Character, Bengali. Date, ? Place of deposit, Siudi, Zillá Vírabhúma, Kuladánanda Mukhopádhyáya. Appearance, old. Verse. Correct.

**Jnána-sankulí.** A treatise on essoteric Yoga. Apparently a Tantra.

Beginning नमोऽस्त्वाद्यन्तपुरुषं परं ब्रह्म च सर्व्वदा ।
शब्दस्पर्शरूपरसगन्धाकाशविवर्ज्जितं ॥
सात्त्विकानाञ्च विज्ञानामेतद्वेदञ्च तत्त्वतः ।
सृष्टिपालनसंहारं तत्कृतं त्रितयात्मकं ॥
प्रथमं सर्व्वलोकानां सर्व्वराज्यसुखप्रदं ।
प्राचीनावस्थमव्यक्तं शिवाकारन्तनामयं ॥
कैलासशिखरासीनं देवदेवं जगद्गुरुं ।
इच्छत्यस्मिन्नमा देवी शृणु ज्ञानं महेश्वर ॥ इत्यादि ।

End. वदन्ति सारसर्व्वस्वमुमाये शिवभाषितं ।
सिद्ध्यन्ति सर्व्वयोगीनां नात्र कार्य्या विचारणा ।

Colophon. इति योगशास्त्रे उमामाहेश्वरसंवादे ज्ञानसङ्कुलोग्रन्थः समाप्तः ।

विषयः । चतुर्द्दशविद्यानिरूपणं । अध्यात्मविद्यानिरूपणं । शाम्भवीविद्याप्रशंसा । खेचरीमुद्राकथनं । शाम्भवीमुद्राकथनं । बिदण्डि-बौद्ध-चार्व्वाकाणां मतकीर्त्तनं । क्षित्यादिपञ्चभूतानां प्रत्येकं पञ्चगुणनिरूपणं । पञ्चतत्त्वेभ्यः सृष्टिप्रक्रिया । निराकारभजनावश्यकता । पञ्चशारीरधातुकथनं । शिव-शक्तिनिरूपणं । त्रिधाशक्तिस्थानकथनं । षट्चक्रस्थानं । देहस्थदशविधवायुकथनं । नाड़ीभेदनिरूपणं । त्रिदेव-त्रिभाव-त्रिगुणकारणकथनं । ज्ञान-दयादीनां पितृप्रसूत्वादिना उल्लेखनं । ब्रह्मज्ञानस्वरूपनिरूपण । यतिधर्म्मकीर्त्तनं । योगनियमकथनं ।

---

**No. 2958.** दायभागव्यवस्था । Substance, country-made paper, 14 × 4 inches. Folia, 10. Lines, 7 on a page. Extent, 258 ślokas. Character, Bengali. Date, ? Place of deposit, Siuḍi, Zillá Vírabhúma, Kuladánanda Mukhopádhyáya. Appearance, old. Prose. Correct.

**Dáyabhága-vyavasthá.** A *Responsa prudentum* on the Dáyabhága or the law of inheritance. By Sárvabhauma.

**Beginning.** अथ दायभागव्यवस्था । पित्राद्यनन्तरं तद्धने पुत्रादिभिः सम्बन्धाधीनो विभागः क्रियते । इत्यादि ।

**End.** शाकेऽग्निमङ्गलहरास्यकलानिधाने
श्रीराघवावनिपतेर्भुवनमुलस्य ।
प्रीत्यर्थमाशु रचिते + + दायभाग
+ + व्यवस्थितिमयोऽष्टम उत्तरङ्गः ॥

भिन्नदेशागमानामित्यविरुद्धमिति ।
धीरेषु साञ्जलिपुटं विनिवेदनं मे
युष्मादृशोऽत्र गुणतां प्रथयन्तु दोषे ।
यन्निर्णयात्मतन्त्रतः पथि मे प्रयाणं
तस्मादियं चपलतापि न दूषणीया ॥
ये ग्रन्थनिर्मितिपरिश्रमदूनचित्ता
नाहङ्मणोपिजनकर्मणि चानुरक्ताः ।
तेषाममत्सरहृदां मधुरेशतर्क-
पञ्चाननात्मककृतिर्मुदमातनोतु ॥

Colophon. इति सकलहितार्थं वन्द्यवंशावतंसः
कृतवसतिरमुष्मिन् विश्वतोल्लासमार्जे ।
सकलमनिमतेर्थं निर्मर्म सार्वभौमः
स खलु रुचिरबन्धो ग्रन्थराजः समाप्तः ।

विषयः । पितृकृतविभागव्यवस्था । उपरते पितरि भागव्यवस्था । विभागानधिकारिणः । विभाज्याविभाज्ययोर्व्यवस्था । वित्तविभागः । चिरप्रोषितवंशस्यागतस्य विभागः । स्त्रीधनादिनिरूपणञ्च ।

---

**No 2959** कालीसहस्रनामस्तोत्रम् । Substance, country-made yellow paper, 15 × 5 inches. Folia, 11. Lines, 8 on a page. Extent, 220 ślokas. Character, Bengali. Date, ? Place of deposit, Sindi, Zillá Vírabhúma, Kuladánanda Mukhopádhyáya. Appearance, fresh. Verse. Correct.

**Kálí-sahasranáma-stotra.** A complete copy of the hymn noticed under No. 409 (Vol. I, p. 233). It is a part of the Kálíkula-sarvasva Tantra.

श्रीशिव उवाच ।

**Beginning.** कथितोऽयं महामन्त्रः सर्वमन्त्रोत्तमोत्तमः ।
यमासाद्य मया प्राप्तमैश्वर्यपदमुत्तमं ॥
कथितेयं महाविद्या सर्वविद्यास्वनुत्तमा । इत्यादि ।

**End.** स्तोत्रं पठेदेतदनन्तपुण्यं कालीपदाम्भोजपरो मनुष्यः ।
विधानपूजाफलमस्य सम्यक् प्राप्नोति सम्पूर्णमनोरथोऽसौ ॥
भक्ताः श्रीचरणारविन्दविमुखाः स्वर्गामिनो भोगिनो
ब्रह्मोपेन्द्रशिवाम्बिकार्चनसुखं नो केऽपि संलेभिरे ।

श्रीमत्यद्गुरुभक्तिपूर्व्वकमहाकालीपदाध्यायिनो
मुक्तिर्मुक्तिमतो स्वयं स्तुतिपरा भक्तिः करस्थायिनी ॥

Colophon. इति कालीकुलसर्व्वस्वे शिवरामसंवादे कालीसहस्रनामस्तोत्रं समाप्तं ।

विषयः । कालिकायाः स्तुतिः ।

---

**No. 2960.** उत्पत्तितन्त्रम् । Substance, country-made paper, 14 × 3 inches. Folia, 57. Lines, 7 on a page. Extent, 612 slokas. Character, Bengali. Date, ? Place of deposit, Siudi, Zillá Vírabhúma, Kuladánanda Mukhopádhyáya. Appearance, old Verse. Correct.

**Utpatti-tantra.** An original Tantra treating both of the S'ákta and the Vaishnava rituals.

Beginning. अघो + मायां जगतां विधात्रीं
कालीं महाकालकृतालताङ्गीं ।
ध्यायेच्छिवां शङ्करमेव नित्यं
गौरीघृताङ्गार्द्धमहेशमाद्यं ॥
श्रीदेव्युवाच ।
यदुक्तं शाम्भवीतन्त्रे उत्पत्तौ यन्मया श्रुतं ।
इदानीं वद देवेश साधनं कलिसम्मतं ॥ इत्यादि ।

End. एतत्ते कथितं तुभ्यं लिङ्गचिह्नं महेशितुः ।
एकेनैव कृतार्थः स्याद्बहुभिः किम् सुव्रते ।

Colophon. इति उत्पत्तितन्त्रे चित्वारिंशत्तमः पटलः समाप्तः ।

विषयः । दिव्यवीरभावप्रशंसा । बलियोग्यपशुनिरूपणं । तत्र नर-छाग-महिष-मेष-शूकर-शशक शल्लकि गोधा-खड्गि-कूर्म्म-वानर-खराश्व-गज-विहङ्गमादिविधानं । असंस्कृत-सुरापाने दोषकथनं । मातृयोनिं विना यवनाद्यादियोनिगमनेऽपि कौलिकस्य न दोष इति कथनं । भावलक्षणं । कलौ सुरापानेन भारतवर्षे वर्णभ्रंशकथनं ।

म्लेच्छराजाधिकारे कलिस्वभावकथनं । कलौ पशुभावविधानं । मद्यपानादिनिषेधः । एतदनुकल्पोऽपि निषिद्ध इति कीर्त्तनं । करमालाप्रशंसा । कामरूपे विष्णोः शवसाधनवृत्तान्त-कथनं । साधारणकलिधर्म्मकथनं । महाकालमहाकाल्योरेकात्मभावकथनं । शिवपूजाविधिः । शिवस्य परब्रह्मत्वकथनं । आत्मसमर्पणप्रकारः । बाणलिङ्गे आवाहनादिकं नास्तीतिकथनं । शिवनिर्म्माल्यजलपानादिफलश्रुतिः । प्रातःकृत्यादिनिरूपणं । शिवनिन्दादिकरणे दोषकथनं । दुर्गापूजामाहात्म्यं । अर्घ्यदानविधिः । गङ्गाजले देवतावाहनं नास्तीतिकथनं । ध्यानतत्त्वक-

थनं। विष्णुतत्त्वकथनं। दशावतारवर्णनं। म्लेच्छराज्यकालवर्णनं। गौड़देशे गर्गपुरे कलक्षय-नारकथनं। तस्य विवाहादिवर्णनञ्च। शिवतत्त्वकथनं। वाञ्छासिद्धिनिरूपणं। जगन्नाथप्रसा-दमाहात्म्यं। परब्रह्मस्वरूपवर्णनं। ब्रह्माण्डोत्पत्तिकथनं। गङ्गामाहात्म्यादिकथनं। ब्रह्मादीनां जन्मविवाहादिकथनं। पञ्चविधमुक्तिनिरूपणं। गोलोकवर्णनं। शिवलोकमत्यलोकादिवर्णनं। कालिकाया निर्व्वाणदातृत्वकथनं। वाणलिङ्गप्रमाणं। इति (तत्र पटलसंख्याया वैषम्यतया तदुल्लेखो न कृतः।)

---

**No. 2961.** कुलोड्डीशमहातन्त्रम्। Substance, country-made paper, 16 × 4½ inches. Folia, 50. Lines, 6 on a page. Extent, 1,237 Ślokas. Character, Bengali. Date, ? Place of deposit, Siuḍi, Zillá Vírabhúma, Kuladánanda Mukhopádhyáya. Appearance, fresh. Prose and verse. Correct.

**Kuloḍḍíśa-mahátantra.** An original Tantra, treating of the usual Sákta rituals, observances and incantations.

देव्युवाच।

**Beginning.** चतुःषष्टिश्च तन्त्राणि त्वद्वक्त्रान्निःसृतानि च।
अन्यान्यपि च तन्त्राणि श्रुतानि विविधानि च॥
जामलानि च सर्व्वाणि संहिता विविधास्तथा।
श्रुता हि देवदेवेश श्रीविद्या या मया प्रभो॥
भाव+ब्रह्मणो नाथ तन्त्राण्यपि च संहिताः।
तापनीयानि कल्पानि शिवादीनां तथैव च॥ इत्यादि।

**End.** कर्म्मयोगमिमं देवि ज्ञात्वा कर्म्माणि साधयेत्।
एतदभ्यासतो योगी सिद्धो भवति नान्यथा॥

**Colophon.** इति श्रीकुलोड्डीशे महातन्त्रे चतुर्थः पटलः समाप्तः। समाप्तमिदं महातन्त्रं।

विषयः। १प्रथमपटले,—पञ्चभूताधिष्ठातृदेवताकथनं। पञ्चमशक्तिनिरूपणं। पञ्च-मशक्तेर्दीक्षाभेदतो वैष्णवशैवादिभेदकथनं। तस्या ब्रह्मरूपत्वकथनं। तदुपासनाप्रकारः। पञ्चकूटनिरूपणं। स्वप्नावतीविद्याकथनं। तत्साधनं। गन्धर्व्वविद्या। ब्रह्मविद्यायाः स्वरूपादि-कथनं। नटी-कापालिक्याद्यष्टविधनायिकानिरूपणं। तत्र आकर्षणादिसाधनप्रकारः। कुण्डो-द्भवद्रव्यलक्षणं। गोलोद्भवद्रव्यलक्षणञ्च। ब्रह्माण्डस्य शिवशक्त्यात्मकत्वकथनं। उपभोगेन मुक्ति-लाभनिरूपणं। सुखमात्रस्य मोक्षत्वं। दुःखमात्रस्य नरकत्वकथनञ्च। समयाचारकथनं। कुलाचारकथनं। सुराशापविमोचनं। २,३ये,—पञ्चपञ्चाक्षरीविद्या। पञ्चमविद्या-गायत्र्या-दिकथनं। भौतिकमनोमयादिविविधशरीरकथनं। मुद्रानामनिरुक्तिः। मुद्रालक्षणादिकथनं।

षोड़शमहाविद्यानिरूपणं। कर्म्मसिद्धिकथनं। पीठनिरूपणं। ध्यानयोगकथनं। कर्म्मयोगकथनं। ४र्थे,—मन्त्रग्रामादिसाधनप्रकारः। आकर्षणवशीकरणादौ कलादिनियमकीर्त्तनं। सर्व्वकर्म्मसु होमावश्यकता। होमद्रव्यादिनिरूपणं। वशीकरणादौ पुष्पविशेषनियमकथनं। मानपरिभाषा। गुरुतोषणविधानं।

---

No 2962. कालीतत्त्वामृतम्। Substance, country-made yellow paper, 22 × 5¾ inches Folia, 64. Lines, 7 on a page. Extent, 1,680 Ślokas. Character, Bengali Date, ? Place of deposit, Siuḍi, Zillá Vírabhúma, Kuladánanda Mukhopádhyáya. Appearance, new. Prose and verse. Correct.

**Kálítattvámṛita**. Tantric rituals. The codex is incomplete.

**Beginning.** नत्वा गुरुपदद्वन्द्वं बलभद्रेण धीमता।
कालीतत्त्वामृतं नाम तन्यते ज्ञानहेतवे॥
सहस्रारे पद्मे परमशिववंशेऽतिकुहरे
मनोहंसस्थिचान्तरविवरमार्गे गतिवशात्।
तमःशान्ते कान्ते परिणतशरच्चन्द्रनिलये
परे हंसद्वन्द्वे गुरुचरणपद्मे विहरतु॥ इत्यादि।

**End.** आदौ व्याहृतिभिः पश्चाद्वह्निमन्त्रञ्च वर्त्तुलं। चित्पिङ्गल हन हन दह दह——

**Colophon.** इतः परं खण्डितं।

विषयः। पशोरग्रे एततन्त्रशास्त्रप्रसङ्गादिनिषेधः। प्रतिमादौ शिलाबुद्धौ दोषनिरूपणं। श्रवणमननिदिध्यासननिरूपणं। अदीक्षितस्य तन्त्रशास्त्रे नाधिकार इति निरूपणं। अत्र दोषनिर्द्देशः। विहिताविहितगुरुनिरूपणं। संस्कारकथनं। दिव्यवीरपशुभेदैर्गुरोर्दीक्षाविधानं। कौलिकानां पशुमन्त्रग्रहणे प्रायश्चित्तकथनं। कुलस्वरूपलक्षणं। वैष्णवादिमन्त्रं विहाय शक्तिमन्त्रग्रहणावश्यकता। तत्र कारणकथनं। विरुद्धवादनिरसनञ्च। कलौ कालीउपासनाकर्त्तव्यता। आगमोक्तदीक्षाग्रहणानन्तरं पुराणविधिना कर्म्मानुष्ठाने फलाभावकथनं। गुरुशिष्यलक्षणं। स्त्रीशूद्रेभ्यो मन्त्रदानविधिः। गुरौ शिष्यभक्तिः। दीक्षाविधानं। इति १मलहरी। चक्रविचारः। अकथह-ऋणिधनिचक्रादीनां संस्थाननिरूपणं। नक्षत्रचक्रं। नाड़ीनक्षत्रचक्रं। हरचक्रं। अकडमचक्रं। वर्गचक्रं। षट्पदचक्रं। अष्टवर्गचक्रं। दीक्षाकालः। वारतिथ्यादिनियमः। महाविद्यासु कालादिनियमाभावः। दीक्षाप्रयोगः। स्वकुलदीक्षाविधिः। मन्त्रस्य सुप्तजागरादिषड्विधसाधनप्रकारः। २या लहरी। जननजीवनादिदशविधमन्त्रसंस्काराः। कुली

नानां संस्कारे विशेषकथनं। यन्त्रसंस्कारः। मालासंस्कारः। मालानां परिमाणनियमः। ग्रथनादिक्रमः। शोधनप्रयोगः। निर्व्विकारचित्तानां धीराणां तत्र तत्र विशेषः। महाशङ्खमालाविधानादिकं। करमालानिरूपणं। ३या लहरी। पुरश्चरणावश्यकता। पुरश्चरणक्रमः। तत्र भक्ष्यादिनियमः। स्नानादिनियमः। मन्त्रस्य सूतकादिदोषनिरूपणं। दीपनीनिरूपणं। मन्त्रशिखा। षड़ध्वषड्वर्णभावनं। मानसोपांशुवाचिकानां लक्षणं। होमादिविधिः। अभिषेककथनं। पुरश्चरणपद्धतिः। इति ४र्थी लहरी। स्वतन्त्रतन्त्रादिमतमाधनं। सिद्धिप्रकारः। कुण्डविधिः। वास्तुनागविचारः। कुण्डदोषादिनिरूपणं। होमनियमकथनञ्च।

---

**No. 2963.** कालीविलासतन्त्रम्। Substance, country-made paper, 15 × 3½ inches. Folia, 37. Lines, 7—8 on a page. Extent, 925 ślokas. Character, Bengali Date, ? Place of deposit, Sudi, Zillá Vírabhúma, Kuladánanda Mukhopádhyáya. Appearance, old. Verse. Correct.

**Kálívilása-tantra.** A modern Tantra treating of the usual S'ákta Tantric rites and ceremonies.

**Beginning.** श्रीदेव्युवाच।

देवदेव महादेव संसारार्णवतारक।
इच्छाम्येकं महाभाग कृपया कथय प्रभो॥
कानि कानि महाभाग जम्बुद्वीपस्य भारते।
शूद्रस्य सम्मतं तन्त्रं कृपया वद साम्प्रतं॥
सद्योजात उवाच।
साधु पृष्टं सुराराध्ये धन्यासि प्राणवल्लभे। इत्यादि।

**End.** इत्युक्त्वा प्रययौ शीघ्रं कैलासं शिवनन्दनः।

**Colophon** इति शिवभाषितं कालीविलासतन्त्रं चिंशत्पटलेन समाप्तं।

विषयः। १प्रथमपटले,—शिवाशिवसंवादः। तन्त्रनामनिर्व्वचनं। शूद्रस्य प्रणवस्वाहोच्चारणादिनिषेधः। २ये,— शूद्रजातिषु प्रशस्तमन्त्रादिनिरूपणं। ३ये,—स्वाहाप्रणवयुक्तकवचपाठादौ शूद्रस्याधिकारः। तस्य वैश्यत्वप्राप्तिकथनञ्च। ४र्थे,- कलौ पशुभावकर्त्तव्यता। दिव्यवीरभावादिनिषेधः। ५मे,- कालीशतनामस्तोत्रं। त्रैलोक्यमोहनाभिधानकालीकवचं। ६ष्ठे,—दीक्षाकालकथनं। दिव्यादिभावलक्षणं। परशुराम-रावणादीनां क्रमेण वीरपश्वादिभावकथनं। ७मे,—कलौ सच्चिदापाननियमः। कांस्यपात्रस्थनारिकेलोदकादीनां मद्यतुल्यत्वकथनं। कलौ अन्तःशाक्तत्वबहिःशैवत्वादिकथनं। तत्र वैष्णवाचारयुक्तेन मन्त्राभ्यासे सिद्धिकथनादि-

कं। ८,—प्राणायामलक्षणादिकथनं। ९,—सङ्केतस्तोत्रं। शिवविष्णोरभेदः। तयोर्भेदज्ञाने दोषः। १०,—भुवनेश्वरीशतनामस्तोत्रं। पीत्वा पीत्वा पुनः पीत्वा पुनः पतति भूतले इत्यादिवचनानां कलीतरपरत्वं। ११,—त्रिपुरासुन्दरीशतनामस्तोत्रं। १२,—ताराशतनामस्तोत्रं। १३—भैरवीशतनामस्तोत्रं। १४,—कलिसम्मतसामान्यपूजाविधानं। १५,—कलिसम्मतमोहनवशीकरणकथनं। अपभ्रंशभाषा (वङ्गभाषा) विद्यानिरूपणं। १६,—बगलाशतनामस्तोत्रं। १७,—मातङ्गीशतनामस्तोत्रं। १८,—कार्त्तिकध्यानमन्त्रादिकथनं। जयाविजयादीनां ध्यानादिकथनं। सिंह-मयूर-मूषिकध्यानादिकथनं। १९,—महिषमन्त्रकथनादिकं। गणेशमन्त्रकथनं। २०,—लक्ष्मीपूजाविधानं। सरस्वतीपूजाविधिः। ब्रह्मपूजा। सावित्रीपूजा। महिषमर्द्दिनीपूजाविधिः। २१,—जम्बूद्वीपे महिषमर्द्दिन्या अस्त्रादिनिरूपणं। अन्यद्वीपीयास्त्रनिरूपणं। महिषमर्द्दिन्या ध्यानादिकं। २२,—अस्याः स्वगणनिरूपणं। २३,—कालिकायाः कृष्णमातृत्ववृत्तान्तकथनं। तस्या ध्यानादिकं। २४,—कृष्णस्य कालिकास्तनपानवृत्तान्तकथनं। कृष्णसमीपे कालिकायाः कामवीजादिकथनं। २५,—ध्यानकथनं। मन्मथसाधनं। पञ्चवीजनिर्णयः। २६,—मायावीजादिसाधनं। रमावीजादिनिरूपणं। २७,—कूर्चध्यानादिकथनं। स्वाहापदादिनिरूपणं। शिञ्जिनीध्यानादिकं। २८,—शब्दब्रह्मनिरूपणं। कृष्णस्य कालिकां प्रति राधापरिचयजिज्ञासा। तत्कृतकालिकास्तोत्रं। २९,—कामवीजादिलेखनक्रमः। ३०,—स्त्रीवीजलेखनक्रमः। शारदीयपूजाया बोधननिरूपणं। ३१,—दुर्गाया ध्यानभेदकथनं। प्रणवादिस्वरूपकथनं। ३२,—भावनाप्रकारकथनं। ३३,—यन्त्रस्वरूपकथनं। वीजानां कोणादिनिरूपणं। ३४,—अनुलोमविलोमाभ्यामकारादिचकारान्तजपप्रकारकीर्त्तनं। शिवकृतकालिकास्तोत्रं। ३५,—कृष्णस्य मुरलीधारणविवरणं। कलौ पुरश्चरण-होमादिकरणप्रतिषेधः। गुरुपूजनेन सर्व्वसिद्धिर्भवतीतिकथनञ्च।

---

**No.** **2964.** **व्यवस्थासंग्रहः।** Substance, country-made paper, 13 × 3 inches. Folia, 84. Lines, 6 on a page. Extent, 1,764 ślokas. Character, Bengali. Date, ? Place of deposit, Duvarájapura, Zillá Vírabhúma, Rámasadaya A'chárya. Appearance, old. Prose and verse. Correct.

**Vyavasthá-sangraha.** *Responsa prudentum* on diverse questions regarding Hindu law and usage. By Maheśa.

**Beginning.** प्रणम्य गोपालपदारविन्दं
विलोक्य मन्वादिकृतञ्च शास्त्रं।
अवश्यकर्त्तव्यविधानहेतुं
ग्रन्थं महेशो वितनोति धीरः॥

विहितस्य निषिद्धस्य कर्म्मणो ज्ञानकारकः ।
व्यवस्थासंग्रहः सर्व्वैः पण्डितैः परिलिख्यतां ॥ इत्यादि ।

**End.** ध्यानेन सदृशं नास्ति शोधकं पापकर्म्मणां ।
श्वपाकेनापि भुञ्जानो ध्यायी नैव तु लिप्यते ॥

**Colophon.** इति व्यवस्थासंग्रहः ।

विषयः । अशौचनिरूपणं । तद्व्यवस्था । यथाकथञ्चिद्दाहे पुनर्दाहनिषेधः । प्रेततर्पण-विधिः । अशौचान्तदिनकृत्यनिरूपणं । मासिकसपिण्डीकरणविधानं । श्राद्धाधिकारिनिरूपणं । द्रव्यशुद्धिनिरूपणं । त्रिविधमासलक्षणादिनिरूपणं । युग्मादिव्यवस्था । एकोद्दिष्टश्राद्धविधिः । संक्रान्तिनिरूपणादिकं । महाज्यैष्ठ्यादिनिरूपणं । जन्माष्टम्यादिव्यवस्था । दुर्गोत्सवविधिः । नवान्नश्राद्धादिनिरूपणं । अर्द्धोदययोगादिनिरूपणं । युगाद्याव्यवस्था । प्रातःकृत्यादिनिरूपणं । आचमनस्नानतर्पणादिविधानं । पार्थिवशिवपूजनविधानं । तुलसीपत्रचयनादिनियमक-थनं । चरणामृतव्यवहारप्रकारकीर्त्तनं । भोजनविधिः । कीदृशी कन्या उद्वाह्या तन्निरूपणा-दिकं । कन्याविक्रयादिदोषनिरूपणं । देवादिप्रतिष्ठाविधिः । दिव्यव्यवस्था । चौर्य्यादिदण्डवि-धानं । दायव्यवस्था । प्रायश्चित्तव्यवस्थादिनिरूपणञ्च ।

---

**No. 2965** ज्योतिःसारः । Substance, palm-leaf, 11 × 1½ inches. Folia, 108. Lines, 4 on a page. Extent, 2,184 ślokas. Character, Bengali. Date, Sk. 1556. Place of deposit, Duvarájapura, Zillá Vírabhúma, Rámasadaya Áchárya. Appearance, old. Prose and verse. Correct.

**Jyotihsára.** Astronomy and astrology bearing on Hindu rites, beliefs and domestic ceremonies. By Raghunátha Paṇḍit, son of Kavírája Miśra. There are several works current of this name.

**Beginning** तमोनिचयविध्वंसमशीतकिरणत्विषं ।
कमलोदयमानन्दाद्वन्दे + त्रकरं हरिं ॥
मिश्रश्रीकविराजराजपदवीविख्यातकीर्त्तिः पिता
यस्यासीद्गुणवान् गुणाकर इति प्रज्ञावतामग्रणीः ।
सोऽयं श्रीरघुनाथ इत्यभिहितो निर्म्माति यत्नादमुं
ज्योतिःसारमुपायवर्णमनगे १४४४ वर्षे शतन्नाभुजः ॥
शास्त्राणामुत्तमं शास्त्रं ज्योतिषं नापरं भुवि ।
यत्र यत्नादविज्ञोऽपि सर्व्वज्ञः सुमतिर्भवेत् ॥

**Párśva-prabhu-stavana.** A hymn in praise of Párśvanátha. By Samayasundara Súri. The peculiarity of this hymn is, that the first half of every foot of it is in vernacular and the other half in Sanskrit.

**Beginning.** भले आज भेट्यां प्रभोः पादपद्मं। फली आस मोरी नितान्तं विपद्मं(?)।
गयूं दुःखनाशी पुनः सौम्यदृष्ट्या खयूं सुखजाउं यथा मेघदृष्ट्या॥
जिकेयास केरी करिष्यन्ति भक्तिं तिके धन्यवाक्रमनुष्याः प्रसक्तिं।
भली आज वेला मया वीतरागाः खुसीमां हि भेट्या नमद्देवनागाः।
तुम्हे विश्वमाहे महाकल्पवृक्षाः तुम्हे भव्यलोकां मनोभीष्टदक्षाः।
तुम्हे मायवापप्रियास्वामिरूपाः तुम्हे देवमाढा स्वयम्भूस्वरूपाः॥ इत्यादि।

**End.** इति स्तुतिं सज्जनसत्कृताभ्यां तव प्रभो वार्त्तिकसंस्कृताभ्यां।
त्वत्पादपद्मप्रणमत्पुरन्दरः श्रीपार्श्व चक्रे समयादिसुन्दरः॥

**Colophon.** इति पार्श्वप्रभुस्तवनं समाप्तं।

विषयः। अर्द्धप्राकृतार्द्धसंस्कृतश्लोकेन भगवतः पार्श्वनाथजिनेन्द्रस्य स्तोत्रव्याजात् माहात्म्यकथनं।

---

**No. 3001.** प्रतिष्ठाविधिः। Substance, country-made paper, 12 × 4 inches. Folia, 91. Lines, 9 on a page. Extent, 2,126 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose and verse. Incorrect. Sanskrit and Mágadhí.

**Pratishṭhá-vidhi.** On the consecration of Jain images and temples, and the rituals appropriate for a variety of Jain rites.

**Beginning.** प्रणम्य श्रीमहावीरं लक्ष्मासमश्रीभंयुतं।
जिनबिम्बस्य प्रतिष्ठापूजां वक्ष्ये प्रधानतः॥
विनीतो बुद्धिमान् प्रीतो न्यायोपात्तधनो महान्।
शीलादिगुणसम्पन्नः श्राद्धो ह्यत्र प्रशस्यते॥
देशकालादिभावज्ञो निर्म्ममः शुद्धमानसः।
श्रद्धानादिगुणोपेत + + कः सोऽत्र शस्यते॥ इत्यादि।

**End.** इत्येवं खेचरेन्द्रप्रबलबलयुते दोषमुक्तेऽवलग्ने
शास्त्रोद्देशानुसारिस्फुटशकुनबलेत्युत् + कजागरूके॥
पीयूषांशुप्रवाहे चितिसलिलगतो कार्य्यमाचर्य्य ते ये-

क्षेषामक्षीणलक्ष्मी परिचयरुचिदा यामराः सम्भवन्ति ॥
अर्पितमनर्पितवस्तु तत्त्वमुदितं नयद्वयादेकं ।
यैस्ते सङ्गतगिरां कृताभिषेका जयन्ति जिनाः ॥

इति प्रतिष्ठादीक्षामुहूर्त्तविधिः । — — — — — — — — —

**Colophon.** इति श्रीप्रतिष्ठाविधिः सम्पूर्णः ॥

विषयः । जिनप्रतिमादिप्रतिष्ठाविधिकथनं । तत्र श्राद्ध (गृहस्थ) लक्षणकथनं । आचार्य्यलक्षणकथनं । जिनविम्बनिर्म्माणादिफलकथनं । ऋषभनामादिचतुर्व्विंशतिसंख्यकजिनानां मध्ये गृहस्थस्य कस्यचित् जिनविम्बस्य निजवास्तव्यगृहस्थापने दोषकथनं । विम्बप्रतिष्ठाप्रकारकथनं । तत्र अभिषेकविधिकथनं । वेदिकानिर्म्माणादिविधिकथनं । कुम्भस्थापनादिविधिकथनं । जलयात्राकरणविधिकथनं । प्रतिष्ठायोग्योपकरणविधिकथनं । नन्द्यावर्त्तादिनिर्म्माण-तत्पूजनादिविधिकथनं । मरुदेवी-विजयाप्रभृतीनां जिनजननीनां पूजाविधिकथनं । रोहिण्यादिषोड़शविद्यादेवीनां पूजाविधिकथनं । आदित्यादिलोकान्तिकदेवपूजाकथनं । इन्द्रादीनां दिक्पालानां पूजाविधिकथनं । नवग्रहपूजाविधिकथनं । एवं व्यन्तरलोकवैमानिकलोकदेवादिपूजाकथनं । क्षेत्रपालादिपूजाविधिकथनं । ब्रह्मलोकदिक्पालपूजाविधिकथनं । भूतबलिविधिकथनं । अङ्गन्यासादिविधिकथनं । अष्टदलपद्मे पूजाविधिकथनं । शान्तिघोषणस्तुतिकथनं । षोड़शाभरणदानेन पूजाविधिकथनं । करन्यासादिविधिकथनं । धर्म्माचार्य्यपूजनविधिकथनं । सकलीकरणादिविधिकथनं । दिक्कुमार्य्युत्सवविधिकथनं । इन्द्रमहोत्सवविधिकथनं । जिनविम्बस्नपनविधिकथनं । तत्र अष्टादशविधस्नानप्रकारकथनञ्च । जिनविम्बस्य पुरतः लेखनीमस्याधारणादिदानविधिकथनं । विवाहदीक्षाग्रहणादिविधिकथनं । एवं दशाहं यावत् यथोक्तविधानेन जिनविम्बप्रतिष्ठा भवतीतिनिरूपणं । अथ देवीप्रतिष्ठाविधिकथनं । तत्र देव्यस्त्रिधा । ग्रामादेव्यः, सम्प्रदायदेव्यः कुलदेव्यश्चेति । तत्र प्रत्येकं प्रतिष्ठाविधिकथनं : अथ जैनमन्त्रदीक्षाविधिकथनं । अथ सिद्धचक्राराधनविधिकथनं । अथ ज्ञानपञ्चम्यां चैत्यवन्दनविधिकथनं । प्रतिक्रमणादिविधिकथनं । ब्रह्मचर्य्यादिव्रतविधिकथनं । सङ्घमालारोपणविधिकथनं । सामान्यतः प्रतिष्ठालग्नादिनिरूपणञ्च ।

---

**No. 3002.** पिण्डविशुद्धिबालावबोधः । Substance, country-made paper. 12 × 4 inches. Folia, 29. Lines, 13 on a page. Extent, 1,158 ślokas, Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect. Gujaráṭi.

**Piṇḍa-visuddhi-bálávabodha.** A Guzraṭi paraphrase of Jinavallabha Súri's treatise on the purity of food *Piṇḍavisuddhi.*

Beginning. श्रीमद्वीरजिनेशं नत्वा श्रीसोमसुन्दरगुरुंश्च।
पिण्डविशुद्धिबालावबोधरूपं तनोम्यर्थं ॥
देविं दवं दवं वंदिय पयारविंदेभि वन्दिश्च जिणिंदे।
वच्छामि सुविहिय हियं पिंडविसोहिं समासेणं ॥

देवताना इंद स्वामी। तेहना इंद। समूह। ते देकरी। वंदित। यादिश्चो पादारविन्द। पदकमल। इत्यादि।

End. आचार्य्य एयन्न गोषिवश्चो। इम श्रीजिनवल्लभसूरिसिद्धान्तनाजाण + + + + पणइ बोलइ कर। इस्यूजाणिवश्चो।

Colophon. इति तपागच्छनायकश्रीसोमसुन्दरसूरिशिष्यविजयमानभट्टारकप्रभुश्रीरत्नशेखरसूरिशिष्येण संवेगदेवगणिना समर्थितः पिण्डविशुद्धिबालावबोधः सम्पूर्णः।

विषयः। जिनवल्लभसूरिविरचितस्य पिण्डविशुद्धिनामकप्रकरणस्य गुर्ज्जरभाषया व्याख्यानम्।

---

No. 3003 सूत्रकृताङ्गटीका, (द्वितीयश्रुतस्कन्धस्य।) Substance, country-made paper, 12 × 4 inches. Folia, 288. Lines, 12 on a page. Extent, 10,146 slokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Correct. Sanskrit.

**Sútrakritáñga-ṭíká.** A commentary on the Sútrakritáñga Sútra. By S'íláchárya, assisted by Kaharí Gaṇi. The MS. includes only the second part of the work.

Beginning. प्रथमश्रुतस्कन्धानन्तरं द्वितीयः समारभ्यते। अस्य चायमभिसम्बन्धः। इहानन्तरश्रुतस्कन्धे योऽर्थः समासतोऽभिहितोऽसावेवानेन श्रुतस्कन्धेन सोपपत्तिको व्यासेनाभिधीयते। त एव विधयः सुसंग्रहीता भवन्ति। येषां समासव्यासाभ्यामभिधानमिति। यदि पूर्व्वश्रुतस्कन्धोक्त एवार्थोऽनेन दृष्टान्तद्वारेण सुखावगमार्थं प्रतिपाद्यते - इत्यनेन सम्बन्धेनायातस्यास्य श्रुतस्कन्धस्य सम्बन्धीनि सप्त महाध्ययनानि प्रतिपाद्यन्ते। इत्यादि।

End. एतदुभययुक्त एव साधुरभिप्रेतमर्थं साधयत्यतश्च। सव्वेसिं पिणयार्णं बहुविह वत्तव्वयं णिसामेत्ता। तं सव्वणयविसुद्धं जं चरणगुणट्ठिश्रो साहू ॥

समाप्तमिदं नालन्दाख्यं सप्तममध्ययनं।

Colophon. इति समाप्तेयं सूत्रकृतद्वितीयाङ्गस्य टीका। कृता चेयं शीलाचार्य्येण वाहरिगणिसहायेन ॥

विषयः। सूत्रकृताङ्गाभिधानजैनसूत्रस्य द्वितीयश्रुतस्कन्धीयव्याख्यानम्।

**No. 3004.** उद्वाहचन्द्रिका । Substance, country-made paper, 14 × 5 inches. Folia, 28. Lines, 9 on a page. Extent, 692 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Paṇḍit S'yámalála Duve. Appearance, decayed. Prose and verse. Correct.

**Udváha-chandriká.** On the laws relating to marriage. By Govardhana Upádhyáya.

**Beginning.** नवीननीरदश्यामं रामं राजीवलोचनं ।

प्रणम्य क्रियते रम्या पाणिपीड़नचन्द्रिका ॥

तत्र गौतमः । गृहस्थः सदृशीं भार्य्यां विन्देतानन्यपूर्व्वां यवीयसीं ।

याज्ञवल्क्यः । अविप्लुतब्रह्मचर्य्यो + लक्षण्यां स्त्रियमुद्वहेत् । अनन्यपूर्व्विकां कान्तामसमानार्षगोत्रजां ।

अरोगिणीं भ्रातृमतीमसपिण्डां यवीयसीं । इत्यादि ।

**End.** गर्भाधानविहीनानां स्त्रीणां कर्म्माधिकारिता ।

भर्त्तॄणां विषये नैव विद्यमानेषु तेष्वपि ॥

इति शौनकोक्तेरिति शम् ।

**Colophon.** इत्युपाध्याय श्रीगोवर्द्धनविरचिता उद्वाहचन्द्रिका समाप्ता ।

विषयः । ब्रह्मचर्य्यानन्तरं दारपरिग्रहविधिकथनं । विवाहस्य नित्यत्वादिनिरूपणं । विवाहलक्षणादिविवेचनं । अष्टविधविवाहभेदनिरूपणं । ब्राह्मेतराणां विवाहानां कलौ वर्ज्जनीयत्वादिकथनं । विवाहयोग्यकन्यालक्षणादिनिरूपणं । अधिवेदनादिविधिविवेचनं । वरलक्षणादिनिरूपणं । कन्यादानादिविधिकथनं । कुशण्डिकादिविधिकथनं । दाम्पत्यधर्म्मकथनं । विशेषेण स्त्रीधर्म्मकथनं । सापिण्ड्यादिनिरूपणञ्च ।

---

**No. 3005.** जीवाभिगमटीका । Substance, country-made paper, 12 × 4 inches. Folia, 224. Lines, 19 on a page. Extent, 8,299 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Jívábhigama-ṭíká.** A gloss on the Jain sútra entitled Jívábhigama. By Malayagiri.

**Beginning.** नमः श्रीसर्व्वज्ञाय ।

प्रणमत पदनखतेजःप्रतिहतनिःशेषनम्रजनतिमिरं ।

वीरं परतीर्थियशोद्विरदघटाध्वंसकेशरिणं ॥

प्रणिपत्य गुरून् जीवा जीवाभिगमस्य वृत्तिमहमनर्घां ।
विदधे गुरुपादवशात् विशेषमातुमणधियां (?) ॥

इह रागद्वेषाद्यभिभूतेन सांसारिकेण सत्वेनाविसह्यशारीरमानसिकदुःखोपनिपातनि-पीड़ितेन तदपनोदाय हेयोपादेयपदार्थपरिज्ञाने यत्न आस्थेयः । स च विशिष्टविवेकप्रति-पत्तिमन्तरेण न भवति । इत्यादि—

**End.**
जयति प्रस्फुटविमलज्ञानविभावितसमस्तवस्तुगणः ।
प्रतिहतपरतीर्थमतः श्रीवीरजिनेश्वरो भगवान् ॥
सरस्वती तमोहन्दमिन्दुज्योत्स्नेव निघ्नती ।
नित्यं वो मङ्गलं दिश्यान्मुनिभिः पर्य्युपासिता ॥
जीवाभिगमं सूत्रं विवृण्वता + पि मलयगिरिणेह ।
कुशलं तेन लभन्तां मनयः सिद्धान्तसम्बोधं ॥

**Colophon.** इति श्रीमलयगिरिविरचिता जीवाभिगमटीका सम्पूर्णा ।

विषयः । जीवाभिगमनामधेयजैनसूत्रस्य व्याख्यानम् ।

---

**No. 3006.** आवश्यकसूत्रम् । Substance, country-made paper, 12 × 4 inches. Folia, 145. Lines, 11 on a page. Extent, 3,576 ślokas. Character, Nágara. Date, ? Place of deposit. A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Generally correct. Mágadhí.

**A'vaśyaka-sútra.** A compilation from the leading Sútra texts treating of the principles of the Jain faith and rituals. By Sudharmá Svámí. The work is highly prized on account of its fullness.

**Beginning.** जयइ जगजीवजोणी वियाणओ जगगुरुजगाणंदो ।
जगणाहो जगबन्धु जयइ जगपियामहो भयवं ॥
जयइ सुआणं पभवो तित्थयराणं अपच्छिमो जयइ ।
जयइ गुरुलोगाणं जयइ महप्पा महावीरो ॥ इत्यादि ।

**End.**
सब्वेसिं पिनयाणं वहुविहव+ध्वं निसामेत्ता ।
तं सव्वनयविसुद्धं जं चरणगुणट्ठिओ साहू ॥

पच्चक्खाणनिज्जुत्ती समत्ता ।

**Colophon.** इति श्रीआवश्यकसूत्रं समाप्तं ॥

विषयः । सामादिस्वरूपनिरूपणं । कायिकवाचिकादियोगनिरूपणं । तत्र औदारिक-वैक्रिय-आहारक-तैजस-कार्मणभेदेन कायिकस्य पञ्चविधत्वादिनिरूपणं । जीवस्वरूपकथनम्-

श्चैव जीवात्मप्रदेशादिनिरूपणं। क्षेत्रस्वरूपादिनिरूपणं। अवगाहनादिस्वरूपनिरूपणं। अथ मतिश्रुत्यवधिमनःपर्य्यायभेदेन पञ्चविधज्ञानकथनं। वर्गणास्वरूपादिकथनं। ज्ञानद्वारनिरूपणं। अवधिभेदनिरूपणं। बलद्वारादिनिरूपणं। एवं प्रतिपात-क्षेत्रादिद्वारनिरूपणं। अनुयोगभेदनिरूपणं। वक्तव्यतादिभेदनिरूपणं। निर्य्युक्त्यनुगम-सूत्रानुगमरूपद्विविधानुगमस्वरूपादिनिरूपणं। अथ सामायिकनिर्य्युक्तिनिरूपणं। तत्र विनेयस्य मा भूदेकान्तेनैव ज्ञाने अनादरः क्रियायाञ्च तच्छून्यायामपि पक्षपात इत्यतो द्वयोरपि केवलयोरभीष्टफलसाधकत्वनिरूपणं। आचार्य्यशिष्ययोर्गुणदोषनिरूपणं। निर्व्वाणगमनविधिप्रतिपादनं। नवगणधरविवरणादिकथनं। विशेषेण जन्मद्वार-गोत्रद्वार-कालद्वारादिनिरूपणं। तत्र तत्र मन्त्रसिद्ध-यात्रासिद्ध-तपःसिद्धादिनिरूपणं। अथ जीवहितकथनमुखेन संयमादिनिरूपणं। तत्र समग्रसंयमभारोद्वहनात् वृषभ इत्यादिक्रमेण चतुर्व्विंशतिजिनानां नामनिर्व्वचनादिकथनं। जिनवन्दनादिविधिनिरूपणं। साधुवन्दनादिविधिनिरूपणं। प्रतिक्रमणविधिकथनं। कायोत्सर्गविधिकथनं। प्रत्याख्यानविधिकथनं। दशविधगुणव्रतविधानकथनं। प्रत्याख्यातादिशुद्धिनिरूपणञ्च।

---

**No. 3007.** शिष्यहिता। Substance, country-made paper, 12 × 4 inches. Folia, 441. Lines, 15 on a page. Extent, 24,088 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose. Incorrect. Sanskrit.

**Síshyahitá.** An elaborate commentary on the work noticed under the next preceding No. By Haribhadra. The work is commonly called Avaśyskaṭiká.

**Beginning.** प्रणिपत्य जिनवरेन्द्रं वीरं श्रुतदेवतां गुरून् साधून्।
आवश्यकविवृत्तिर्गुरूपदेशादहं वक्ष्ये॥
यद्यपि मया तथान्यैः कृतास्य विवृतिस्तथापि संक्षेपात्।
त+ चि सत्वानुग्राहहेतोः क्रियते प्रयासोऽयम्॥

इहावश्यकप्रारम्भोऽयुक्तः। प्रयोजनादिरहितत्वात् कण्टकशाखामर्द्दनादिवत्। इत्येवमाद्याशङ्कापनोदाय प्रयोजनादि पूर्व्वं प्रदर्श्यत इत्युक्तञ्च प्रेक्षावतां प्रवृत्त्यर्थं फलादित्रितयं स्फुटं— इत्यादि।

**End.** भावनिःक्षेपमिच्छन्तीतिगाथार्थः। शिष्यहितायां प्रत्याख्यानविवरणं समाप्तमिति॥

आख्यायाध्ययनमिदं यदवाप्तं मया शुभं मया पुण्यम्
शुभं प्रत्याख्यानं लभतां भव्यो जनस्तेन॥

Colophon. समाप्ता चेयं शिष्यहिता नामावश्यकटीका।

विषयः। आवश्यकाभिधानजैनसूत्रग्रन्थस्य व्याख्यानम्।

---

**No. 3008** मुद्राराक्षसटीका। Substance, country-made paper, 11 × 5 inches. Folia 50. Lines, 6 on a page. Extent, 863 ślokas. Character, Nágara. Date, ? Place of deposit, Singura, Zillá Vírabhúma, Pratápachandra Bhattáchárya. Appearance, fresh. Prose and verse. Correct.

**Mudrá-rákshasa-ṭíká.** This is a two-fold work, first, a metrical paraphrase of the story of Viśákhadatta's drama, entitled Mudrárákshasa, second, gloss on the text of Viśákhadattra. By Dhuṇḍhivyása.

Beginning. सिन्दूरारुणगण्डमण्डलमदामोदभ्रमद्भृङ्गिका-
झङ्कारेण कलेन कर्णमुरजध्वानेन मन्द्रेण च।
तत्तौर्य्यत्रिकरीतिमेति शिरसः शश्वन्मदान्दोलनं
यस्य श्रीगणनायकः स दिशतु श्रेयांसि भूयांसि वः।
षड्भिरङ्गैरुपेताय प्रमथामरभूरुहे।
शङ्कराय नमस्कृत्य निगमाय नयाय च॥
ढुण्ढिनाम्ना बुधेनेदं मुद्राराक्षसनाटकं।
साङ्गमङ्गलवृत्तं तत् स्फुटं व्याख्यायतेऽधुना॥
श्रीमद्विशाखदत्तीये मुद्राराक्षसनाटके।
कथोपोद्घातमाचक्षे संविधानाववुद्धये॥
नन्दान्तं क्षत्रियकुलमिति पौराणशासनात्।
कल्यादौ नन्दनामानः केचिदासन् महीभुजः॥
सर्व्वार्थसिद्धिनामासीत् तेषु विख्यातपौरुषः। इत्यादि।

End. अखिलश्रेयःप्राप्तिसाधनत्वेन श्रुतिस्मृतीतिहासपुराणप्रसिद्धमिति ज्ञेयं॥
बुधो ढुण्ढिर्नाम्ना जगति विदितो लक्ष्मणसुधी-
मणेः श्रीमद्व्यासान्वयजलधिचन्द्रस्य तनयः।
स्फुटं साङ्गं व्याख्यन्नयगुणविदक्लाखकविभो-
र्नियोगात् प्रौढार्थं बुधवरमुदे नाटकमिदं॥

Colophon. इति श्रीढुण्ढिव्यासविरचितायां मुद्राराक्षसटीकायां सप्तमोऽङ्कः।

अथ चतुर्थेऽङ्के कविः अद्भुततरचाणक्यनीतिविषयस्वसंविधानकोशमनभाव्य प्रमोदभर-

सम्भवन्तः सरसाः सहृदया जगति दुर्लभा इति मन्वानः स्वयमेव स्वीयनाटकसंविधानक्लेशं राक्षसवचनव्याजेन प्रख्यौति स्म ।

कार्य्योपक्षेपमादौ तनुमपि रचयंस्तस्य विस्तारमिच्छन्
वीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयंश्च ।
कुर्व्वन् बुद्ध्याविमर्शप्रसृतमपि पुनः संहरन् कार्य्यजातं
कर्त्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा ॥

एवं नाटकीय + + नः षट्याङ्गलक्षणानुसरणकविहृदयाभिमतार्थाविष्करणप्रयासोऽपि व्याख्यातुरनुमांद्यितव्यः सहृदयैरिति प्रार्थयामः ॥

कर्त्तैतन्नाटकस्याद्भुतरसविलसत्संविधानप्रवीणः क्लेशं चाणक्यनीतौ वक्रविषमतनोक्षच-णाख्यैर्वचोभिः । तत्तच्छ्ये तदज्ञानुसरणविविधक्लेशमस्मद्विधानां राजश्रीचाम्बकार्य्यानुमतिसुविहितं वीक्ष्य तुष्यन्तु सन्तः ॥

विषयः । विशाखदत्तप्रणीतमुद्राराक्षसस्य व्याख्यानं । तत्र प्रथमतः संक्षेपात् पद्येन एतन्नाटकीयेतिवृत्तकीर्त्तनञ्च ।

---

**No. 3009.** ज्ञानदीपिका । Substance, country-made yellow paper, 13 × 4¾ inches. Folia, 42. Lines, 11 on a page. Extent, 5,605 ślokas. Character, Bengali. Date, ? Place of deposit, Sińgura, Zillá Vírabhúma, Pratápachandra Bhaṭṭáchárya. Appearance, fresh. Prose. Correct.

**Jnána-dípiká** ALIAS **Mahábháratatátparya-ṭíká.** A gloss on the Mahábhárata. By Devabodha. The codex contains only the A'raṇyaka-parva.

**Beginning.** श्रीभर्त्तुः पादशाखानखतुहिनकराः पञ्च पान्तु त्रिलोकीं
+ ग्रद्दैत्येन्द्रकान्तावदनकमलिनी + + नं मुद्रयन्तः ।
येर्मन्ये सैंहिकेयः खरशिशिरकरग्रासवैरं स्मरद्भि-
र्ग्रस्तः पीयूषधाम्नः शरणगततया भाति लक्ष्मच्छलेन ॥
उत्फुल्ल (उत्सन्नः) त्रिजगन्मोहो यद्वाङ्मयहुताशने ।
पारेतमःप्रकाशाय तस्मै द्वैपभवे नमः ॥
चरणे देवबोधस्य वाङ्मदौषधिव + यः ः
जयन्ति सज्जीवोद्योतद्दर्शिताव्यक्तभूमयः ॥

वनवासप्रतिज्ञासत्यपाशनं तीर्थयात्रा इन्द्रादिलोकपालेभ्यः शिवाच्च दिव्यास्त्रप्राप्तिः धर्मो-

हनूमत्प्रभृतिभ्यो वरप्राप्तिश्च इहवनं पाण्डवानां ताभ्यां द्वाद्दवनाभ्यामुपलक्षिता धर्म्मार्थ-कामसोचाः सोपाया आरण्यकपर्व्वतात्पर्य्यार्थः। इत्यादि।

End. प्राचां गुरूणां पदपरिचयप्राप्तसिद्धीनि कामं निर्व्वाणं प्रालेयप्रकृतिविस-दृशाकारभास्वत्पुमांसि॥

Colophon. इति परमहंसपरिव्राजकाचार्य्यभट्टारकश्रीमद्देवबोधस्य कृतौ महाभार ततात्पर्य्यटीकायां ज्ञानदीपिकायामारण्यकं पर्व्व समाप्तमिति।

विषयः। महाभारतीयारण्यकपर्व्वव्याख्यानं।

---

No. 3010. ज्ञानदीपिका। Substance, country-made paper, 10 × 2½ inches. Folia, 9. Lines, 7 on a page. Extent, 259 ślokas. Character, Bengali. Date, ? Place of deposit, Siṅgura, Zillá Vírabhúma, Pratápachandra Bhaṭṭácharya. Appearance, old. Prose. Correct.

**Jnánadípiká** ALIAS **Mahábháratatátparya-ṭíká.** Another volume of the work noticed under the next preceding No. It contains the Viraṭa-parva.

Beginning. अज्ञानतिमिराम्भोदमुक्ताय व्यासभानवे।
नमो नवरसस्निग्धवाणीकिरणमालिने॥
पद्मपाणिपदाम्भोजमकरन्दाम्बुविन्दुभिः।
देवबोधवचोभृङ्गपीतवा+जैगज्जयेत्॥

कथं विराटनगरे इत्यादि। सभां विराटस्य ततोऽधिजग्मुरित्यन्तस्य विराटपर्व्वणः चतु र्व्वर्गफलसाधनीभूतं सत्यं कुलप्रयुक्तायामप्यज्ञातवासकर्त्तव्यताप्रतिज्ञायां न हातव्यमिति तात्प-र्य्यार्थः। तथा विराटेत्यादेः सर्व्वं द्वैतवनादित्यन्तस्य वननिर्व्वाहाय अज्ञातचर्य्यापरिग्रहः इत्यादि॥

End. अन्वतेन आचाराद्व्रतादारोपितादित्यर्थः। स्वस्रीयो भागिनेयः। कृतं सुकृतं। अन्वजानीत अनुमतवान्॥

Colophon. इति परमहंसपरिव्राजकाचार्य्यभट्टारकश्रीमद्देवबोधकृतौ भारततात्प-र्य्यदीपिकायां ज्ञानदीपिकायां विराटपर्व्व समाप्तं।

विषयः। महाभारतीयविराटपर्व्वव्याख्यानं।

---

**No. 3011.** दुर्बोधपदभञ्जिनी नाम महाभारतटीका । Substance, country-made paper, 13 × 4 inches. Folia, 62. Lines, 14 on a page. Extent, 2,769 ślokas. Character, Bengali. Date ? Place of deposit, Siṅgura, Zillá Vírabhúma, Pratápáchandra Bháṭṭacbárya. Appearance, old. Prose. Correct.

**Durbodha-padabhaṇjiní-ṭíká.** Glossarial notes on all the difficult passages in the Mahabhárata. By Vimalabodha.

**Beginning.** श्रीमहाभारताख्यानदुर्बोधपदभञ्जिनी ।

टीका विरच्यतेऽस्माभिरादिपर्व्वक्रमादियं ।

तत्रादिवाक्यं। ॐनमो भगवते वासुदेवाय । ॐनमः पितामहाय। ॐनमः प्रजापतिभ्यः। ॐनमः कृष्णद्वैपायनाय । ॐनमः सर्व्वविघ्नविनायकेभ्यः। लोमहर्षणसुत उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये शौनकस्य कुलपतेः द्वादशवार्षिके सत्रे। सुखासीनानभ्यगच्छद् ब्रह्मर्षीन् संशितव्रतान्। इति । नन्वेकेनैव भगवन्नमस्कारेण विघ्नहेतुसकलदुरितप्रशमसिद्धेः किमिति पञ्चनमस्काराः क्रियन्ते। उच्यते,—सत्यमेकस्यैव एते प्रयोजनभेदोपकल्पितमूर्त्तिभेदाः पञ्चैव नमस्काराः। तथाहि व्यापकगुरुत्वात् प्रथमतो भगवन्नमस्कारः। उक्तञ्च वासुदेवः सर्व्वमिति स महात्मातिदुर्लभ इति । ततश्च सृष्टिगुरुत्वेन पितामहस्य । इत्यादि ।

**End.** अथ वा अनः प्राणो पिपासुः काञ्जिकं पिबति, तथाहं सोमं पिबामि नापि कलिङ्गो धूल्यटः पक्षी यत्र धूमं पश्यति तत्रैव पिबति तदनुकारो सोममहं पिबामीत्यर्थः किन्तु आहृत्य उज्जितो भृत्यैः सह इति शेषः पूर्व्ववत् ।

**Colophon.** इति श्रीविमलबोधकृतमहाभारतीयसर्व्वपर्व्वदुष्करश्लोकार्थटीकेयं समाप्ता ।

विषयः । समग्रमहाभारतीयविषमपदव्याख्यानं ।

---

**No. 3012.** कृत्यरत्नावली। । Substance, country-made paper, 9 × 5 inches. Folia, 121. Lines, 9 on a page. Extent, 2,782 ślokas. Character, Nágara. Date, ? Place of deposit, Siṅgura, Zillá Vírbhúma, Pratápachandra Bhaṭṭácbárya. Appearance, fresh. Prose and verse. Correct.

**Kṛitya-ratnávalí.** Summary descriptions of all the modern Hindu rites and ceremonies together with their rituals. By Rámachandra Bhaṭṭa, son of Viṭṭhala, and grandson of Bálakṛishna Bhaṭṭa. This is distinct from the work noticed under No. 1112 (III, p. 73.)

**Beginning.** श्रीगणेशाय नमः ।

नमस्कृत्य रमानाथं भट्टविट्ठलसूनुना ।

कृत्यरत्नावली रम्या रामचन्द्रेण रच्यते ॥

तत्र । तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च । इति वचनात् चैत्रकृष्णप्रतिपदमारभ्य तिथिकृत्यान्युच्यन्ते । तत्र चैत्रकृष्णप्रतिपदि कृत्यविशेषः पद्मपुराणे,—

चैत्रे मासि महाबाहो पुण्या प्रतिपदापरा । इत्यादि ।

End. त्रयस्त्रिंशद्देवताश्च श्रुतावुक्ता· अष्टौ वसवः, एकादशरुद्राः द्वादशादित्याः प्रजापतिश्च वषट्कारश्चेति ॥

Colophon. इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सदुपाख्यबालकृष्णभट्टाङ्गजविट्ठलभट्टाभिधबुधवरसूनुधर्मशास्त्रपारावारीणश्रीमद्रामचन्द्रभट्टविरचिता कृत्यरत्नावली समाप्ता । ग्रन्थोऽयं समाप्तः ।

विषयः । चैत्रकृष्णप्रतिपदि स्नानविधानं । तत्र नारीनीराजनविधानञ्च । तिथिद्वैधे व्यवस्थानिरूपणं । वारुणीविधानं । चैत्रशुक्लप्रतिपदि संवत्सरारम्भकथनं । तत्र पूजादिविधानं । नवरात्रपूजारम्भकथनं । प्रपादिदानमाहात्म्यकीर्त्तनञ्च । घटोत्सर्गविधिकथनं । चैत्रशुक्लतृतीयां गिरिजागिरिशयोः दोलनविधानं । मन्वन्तरादौ पिण्डदानरहितश्राद्धकरणावश्यकता । चैत्रशुक्लपञ्चम्यां श्रीपूजनविधानं । तत्र अष्टम्यामशोककलिकापानादिविधिः । पुनर्वसौ लौहित्यस्नानविधानञ्च । रामनवमीव्रतविधिकीर्त्तनं । चैत्रशुक्लैकादश्यां दोलयात्राविधिः । तत्र द्वादश्यां दमनोत्सवकीर्त्तनं । चैत्रपौर्णमासीकृत्यकथनञ्च । वैशाखकृत्यनिरूपणं । तत्र स्नानविधिकथनं । अश्वत्थमूले जलदानादिविधानं । अक्षयतृतीयाविधिः । गौरीव्रतव्यवस्थादिकथनं । समुद्रस्नानविधिः । परशुरामजयन्तीविधानं । वैशाखशुक्लसप्तम्यां गङ्गाया उत्पत्तिकथनं । तत्पूजाविधिः । नृसिंहजयन्तीविधानं । नृसिंहपूजाविधिः । ज्यैष्ठकृत्यनिरूपणं । ज्यैष्ठशुक्लतृतीयां रम्भाव्रतविधानं । तत्र चतुर्थ्यामुमाया जन्मकथनं । तत्पूजाविधिः । दशहराविधिः । गङ्गाया अभावे अन्यस्यां सरिति तत्पूजाकर्त्तव्यता । पूर्णिमायां वटपूजनादिविधिः । तत्र तालवृन्तक्षत्रादिदानफलकथनञ्च । आषाढकृत्यनिरूपणं । रथयात्राविधिः । विष्णुशयनविधानं । चातुर्मास्यव्रतविधानं । तत्र गुडतैलफलादिवर्ज्जने प्रत्येकं फलश्रुतिकीर्त्तनं । श्रावणादिषु मासेषु प्रत्येकं व्रतकथनं । शाकव्रत-दधिव्रत-पयोव्रतादिनिरूपणं । चातुर्मास्ये वर्ज्जनीयशाकमूलफलादिनिरूपणं । दशविधशाककथनं । श्रावणकृष्णद्वितीयायामशून्यशयनव्रतविधानं । तत्र बहुलचतुर्थीविधानं । शुक्लचतुर्थ्यां दूर्व्वागणपतिव्रतविधिः । नागपञ्चमीविधिः । द्वादश्यां पवित्रारोपणविधानं । उपाकर्म्मविधिकथनं । भाद्रकृत्यनिरूपणं । तत्र कृष्णचतुर्थ्यां सङ्कटचतुर्थीव्रतविधानं । जन्माष्टमीव्यवस्थादिनिरूपणं । तत्र विधानकथनं । अमावस्यायां कुशग्रहणविधिः । शुक्लतृतीयायां हरितालिकाव्रतविधानं । चतुर्थ्यां सिद्धिविनायकव्रतविधानं । अत्र चन्द्रदर्शनादिनिषेधकथनं । पञ्चम्यामृषिपञ्चमीव्रतविधानं । षष्ठीव्रतविधिः । सप्तम्यां मुक्ताभरणव्रतविधानं । दूर्व्वाष्टमीव्रतविधानं । महालक्ष्मीव्रतविधानं । एकादश्यां वामनावतारकथनं । श्रावणद्वादशीकथनं । विष्णुशृङ्खलयोगविधिः । रात्रौ पारण-

निषेधः। अनन्तव्रतविधानं। अक्षयमावित्रीव्रतविधानं। भागवतलक्षणकथनपूर्व्वकं पौर्णमास्यां सद्दानमाहात्म्यकथनं। आश्विनकृत्यनिरूपणं। अपरपक्षश्राद्धविधिः। महालयाविधिः। तर्पणविधिः। चन्द्रषष्ठीव्रतविधानं। अपिण्डकश्राद्धनिरूपणादिकं। मघात्रयोदशीविधिः। नवरात्रपूजाविधानादिकीर्त्तनं। चण्डीपाठक्रमादिकीर्त्तनं। कुमारीपूजनविधिः। लौहाभिसारिकविधिकीर्त्तनं। देव्याः प्रतिपदादिपूजाप्रकारकथनं। उपवासविधिः। आश्विनशुक्लसप्तम्यामुपाङ्गललिताव्रतविधिः। षष्ठ्यां बोधनादिविधिः। बलिदानक्रमादिकथनं। दुर्गापूजानुष्ठानक्रमकीर्त्तनं। कोजागरव्रतविधानादिकं। कार्त्तिककृत्यनिरूपणं। तत्र स्नानविधिः। पञ्चनदस्नानादिविधिः। तुलस्यादिमालाधारणमाहात्म्यकथनं। वृन्ताकपूरणशिम्ब्यादिभक्षणनिषेधकथनं। कृष्णचतुर्थ्यां सलोकस्य दशरथस्य पूजाविधानकीर्त्तनं। गोवत्सद्वादशीव्रतविधानं। यमोद्देशेन सन्ध्याकाले दीपदानविधानकथनं। उल्कादानादिविधि। सुखरात्रिलक्ष्मीपूजाविधिः। द्यूतप्रतिपद्विधिः। बलिराजपूजनादिविधानं। गोक्रीड़नविधिः। भ्रातृद्वितीयायां यमपूजनादिविधिकथनं। चतुर्थ्यां नागव्रतविधानं। गोष्ठाष्टमीविधिः। जगद्धात्रीपूजाविधिकीर्त्तनं। विष्णुत्रिरात्रविधिः। विष्णूत्थानविधिः। चतुर्द्दश्यां विश्वेश्वरप्रतिष्ठाहात्म्यकथनपूर्व्वकं तत्पूजाविधानकीर्त्तनं। मार्गशीर्षकृत्यनिरूपणं। तत्र कृष्णाष्टम्यां भैरवस्य उत्पत्तिकथनपूर्व्वकमुपवासविधानं। शुक्लतृतीयायां रम्भाव्रतविधानं। पञ्चम्यां नागपूजाविधिः। षष्ठ्यां मल्लारिपूजनविधानं। स्कन्दषष्ठीपूजाविधिः। मार्गपौर्णमास्यां दत्तात्रेयपूजाविधानं। पौषकृत्यविधिः। तत्र अष्टकाश्राद्धविधिः। बुधपूजनादिविधानं। माघकृत्यनिरूपणं। तत्र स्नानविधिः। यमप्रीत्यर्थं तिलदानविधानकथनं। यमतर्पणविधिः। अर्द्धोदयमाहात्म्यादिनिरूपणं। कृष्णचतुर्थ्यां ढुण्ढिपूजनविधिः। वरदाचतुर्थीविधिः। पञ्चम्यां श्रीपूजनविधिः। माघीसप्तमीविधिः। भीष्मतर्पणविधिः। फाल्गुनकृत्यनिरूपणं। तत्र शिवरात्रिविधिकथनं। तत्र प्रयोगकथनं। गोविन्दद्वादशीविधानं। होलिकाविधिः। तत्र पूजादिकथनं। दोलयात्राविधिकथनं। मलमासकृत्यनिरूपणं। तत्र गुड़सर्पिरादिदानविधि।

---

**No. 3013** ज्योतिःसङ्ग्रहः। Substance, country-made paper, 14 × 4 inches. Folia, 55. Lines, 6, on a page. Extent, 1,266 ślokas. Character, Bengali. Date, ? Place of deposit, Siñgura, Zillá Vírabhúma, Pratápachandra Bhaṭṭácharya. Appearance, fresh. Prose and verse. Incorrect.

**Jyotihsañgraha**. A manual of astrology. By Shashṭhídása. This is distinct from No. 1826, (*ante* V, 134).

**Beginning**. यः पृथ्वीं शिरसा ससागरसरिद्द्वीपादिभिर्लीलया
धत्ते पङ्कजवत्सदा त्रिभुवनं यस्येच्छया जायते।
संस्थानं विलयश्च नोऽस्य सततं सर्व्वार्थसिद्धिप्रदं

हृत्पद्मे विलसत्वनन्तवपुषोऽनन्तस्य पादाम्बुजं ॥
अभ्यासार्थं बालकानां ज्योतिःसंक्षेप उच्यते ।
ज्योतिर्ग्रन्थात्तथान्यस्मादाहृत्य वचनानि च ॥
उपयुक्तानि लिख्यन्ते ग्रन्थेऽस्मिन् विविधं मतं ।
विवाहादीनि कर्म्माणि यात्रान्तानि ततः परं ॥

तत्र वारस्वरूपं लिख्यते,—सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा । इत्यादि ।

**End.** मैत्रे चैव दशाहानि चित्रायामर्द्धमासकं ।
मूलेन जायते मोक्षः पूर्व्वाषाढ़े त्रिपक्षकं ।
उत्तरे दिनविंशत्या रेवत्यान्तु दिनत्रयं ॥

**Colophon.** इति षष्ठीदासविरचितो ज्योतिःसङ्ग्रहः समाप्तः ।

विषयः । वारस्वरूपकथनं । कालवेलाकथनं । वारवेलाकथनं । तिथिनिरूपणं । दग्ध-तिथिनिर्णयः । करणानि । विष्टिभद्रा । नक्षत्रगणनिर्णयः । अधोमुखनक्षत्राणि । नक्षत्रमङ्गल-निर्णयः । योगनिर्णयः । राश्यादिनिर्णयः । मेषादीनां विशेषनामकथनं । तेषां क्रूरसौम्य-त्वादिविवेकः । ग्राम्यारण्यादिराशिकथनं । दिक्पतिकथनं । लग्नमाननिर्णयः । होराद्वादशांश-द्रेक्काणादिनिरूपणं । उच्चनीचकथनं । मूलत्रिकोणकथनं । केन्द्रादिकथनं । उपचयसंज्ञा-कथनं । त्रिकोणचतुरस्रकथनं । द्वादशभावविचारः । ग्रहाणां संज्ञावर्णादिनिरूपणं । तेषां शुभाशुभकथनं । दृष्टिनिरूपणञ्च । जात्यधिपवेदाधिपकथनं । चन्द्रशुद्ध्या ग्रहसञ्चारफलकथनं । नैसर्गिकमित्रशत्रुसमादिनिरूपणं । ग्रहाणां गोचरशुद्ध्यादिनिरूपणं । अष्टवर्गकथनं । ग्रहाणां शान्तिकथनं । नक्षत्रशुद्धिकथनं । जन्मतारादिविशेषकथनं । वेलानिर्णयः । अमृतादियोग-निर्णयः । सिद्धि-दग्ध पाप-यमघण्टादियोगकथनं । करकचादियोगकथनं । संक्रान्तिनिरू-पणादिकं । शनिचक्रादिनिरूपणं । तिथिषु द्रव्यविशेषभक्षणफलकथनं । कालाशुद्धिनिरूपणं । ग्रहणनिरूपणं । भूकम्पादिफलकथनं । अम्बुवाची । विवाहः । नववध्वागमनं । गर्भाधानादि-दशसंस्कारनिरूपणं । सन्ध्याकरणविधिः । परीक्षाविधिः । नववस्त्रादिपरिधानं । नवदोला-द्यारोहणं । पुष्करिण्यारम्भः । नौकागठनं । नौकायात्रा । राजदर्शनं । हलप्रवाहः । वीज-वपनं । धान्यच्छेदनं । वीजधारणं । धान्यादिसंस्थापनं । नवान्नं । देवतागठनं । तत्प्रतिष्ठा-दिकथनं । गृहारम्भादिकथनं । क्रयविक्रयादिनिरूपणं । ऋणदानादिकथनं । रोगिणां शुभा-शुभज्ञानकथनञ्च ।

---

**No. 3014. रसगङ्गाधरः** | Substance, country-made paper, 10 x 4 inches. Folia, 402. Lines, 7 on a page. Extent, 8,420 ślokas. Character, Nágara. Date, ? Place of deposit, Śántipura, Paṇḍit Kálidása Vidyávágíśa. Appearance, fresh. Prose and verse. Generally correct.

**Rasagaṅgádhara.** A treatise on rhetoric and literary criticism. By Jagannátha Bhaṭṭa, Paṇḍitarája.

**Beginning.** श्रीगणेशाय नमः ।

स्मृतापि तरुणातपं करुणया हरन्ती नृणा-
मभाङ्गुरतनुत्विषां वलयिता शतैर्विद्युतां ।
कलिन्दगिरिनन्दिनीतटसुरद्रुमालम्बिनी
मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी ॥
श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतनिखिलब्रह्मविद्याप्रपञ्चः
काणादीरक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् ।
दिव्यादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं
शेषाङ्कप्राप्तशेषामलभणितिरभूत्सर्व्वविद्याधरो यः ॥
पाषाणादपि पीयूषं स्यन्दते यस्य लीलया ।
तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुं ॥
— — — — — — — — ।
निर्म्माय नूतनमुदाहरणानुरूपं
काव्यं मयात्र निहितं न परस्य किञ्चित् ।
किं सेव्यते सुमनसां मनसापि गन्धः
कस्तूरिकाजननशक्तिभृता मृगेण ।
मननतरितीर्णविद्यार्णवो जगन्नाथपण्डितनरेन्द्र ।
रसगङ्गाधरनाम्नीं करोति कुतुकेन काव्यमीमांसां ॥ इत्यादि ।

**End.** शब्दशक्तिपर्य्यायत्वेन अनेकेषां प्रश्नानां एकपदनिवेदितोत्तरत्वेन प्रकारान्तरैश्च बहुप्रभेदत्वं दिङ्मात्रेण उदाह्रियते,—किं कुर्व्वते दरिद्राः का सारवती धरा मनोज्ञतरा, कः पावनस्त्रिलोक्यां । इति । श्रीकमलाकुचकस्तूरिकाकेलिपत्राङ्कुराय श्रीनन्दनन्दनाय नमः । शुभं भूयात् ।

**Colophon.** इति पण्डितराजाभिधानभट्टजगन्नाथकृतौ रसगङ्गाधरः ।

**विषयः ।** काव्यस्वरूपनिरूपणप्रसङ्गेन अन्यान्यमतखण्डनपुरःसरं काव्यस्य रमणीयार्थ-प्रतिपादकशब्दरूपत्वव्यवस्थापनं । रसात्मकादिवाक्यस्य काव्यत्वे गौश्चलति मृगो धावतीत्या-दावतिप्रसक्तिः स्यादिति निरूपणं । प्रतिभैव तत्कारणमिति निरूपणं । उत्तमोत्तम-उत्तम-मध्यम-अधमभेदेन काव्यस्य चतुर्व्विधत्वव्यवस्थापनं । व्यङ्ग्यार्थप्रदर्शनमुखेन चित्रमीमांसादिमतखण्डनं । चित्रकाव्यनिरूपणप्रसङ्गेन काव्यप्रकाशमतखण्डनं । द्विविधध्वनिनिरूपणं । रसस्वरूपनिरूपणं । भट्टनायकादिमतोत्थापनपूर्व्वकं रसस्वरूपविवेचनं । रसस्य आनन्दरूपत्वे करुणादौ शोकादि-

स्थायिभावत्वेन कथं तत्र सहृदयानां प्रवृत्तिरित्यत्र समाधानं। शृङ्गारादिभेदेन रसस्य नवविधत्व-कथनं। अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते इत्यादिमतखण्डनं। स्थायिभावादिस्वरूप-विवेचनं। रत्यादीनां लक्षणकथनं। आलम्बनादिनिरूपणं। संयोगविप्रलम्भभेदेन द्विविध-शृङ्गाररसकथनं। करुणरसः। शान्तरसः। रौद्ररसः। दान-दया-युद्ध-धर्म्मभेदात् वीररसस्य चातुर्व्विध्यकथनं। एतत्तु प्राचीनानामनुरोधेन स्वमते तु वीरस्य बहवः प्रकारा इति तन्निरू-पणं। अद्भुतरसः। हास्यरसः। स्मित-सित-विहसित-उपहसित-अपहसित-अतिहसितलक्षणं। भयानकरसः। वीभत्सरसः। रसानां प्राधान्ये ध्वनिव्यपदेशहेतुत्वं, गुणीभावेतु रसालङ्कारत्व-मितिकथनं। भगवद्भक्तादीनां भावत्वं न तु रसत्वमितिप्राचीनमतानुमोदनं। रसविरोधि-निरूपण। रसविशषे वर्णनीयकथनं। माधुर्य्य-ओजः-प्रसादभेदेन त्रिविधगुणनिरूपणं। तेषां रसविशषपोषकत्वकथनं। गुणानां रसधर्म्मत्ववादखण्डनं। तत्र प्राचीनमतेन श्लेषादिदशविध-गुणान लक्षणोदाहरणप्रदर्शनपूर्व्वकं तन्मध्ये केषाञ्चित् माधुर्य्यादिषु त्रिषु अन्तर्भावनं केषा-ञ्चित् खण्डनञ्च। अश्राव्यत्वनिरूपणं। सर्व्वे अश्राव्यभदाः काव्यसामान्ये वर्ज्जनीया इति कथनं। रसेषु वर्ज्जनीयव्यवस्थापनं। रीतिकथनं। भावध्वनिनिरूपणं। व्यभिचारिणः। वात्सल्यं रसान्तरमितिमतखण्डनं। निर्व्वेदादीनां स्वरूपनिरूपणं। अत्र सर्व्वत्र स्वोक्तौ समीचीनयुक्ति-प्रदर्शनं। एवं परत्र ज्ञेयं। रसाभासनिरूपणं। भावाभासनिरूपणं। भावशान्तिः। भावोदयः। भावसन्धिः। भावशबलता। अर्थशक्तिमूलध्वनेः द्वादशविधत्वमितिकथ्यते। नखटभट्टस्य मता-क्षेपः। शब्दशक्तिमूलध्वनेर्द्वैविध्यकथनं, एवमर्थशक्तिमूलस्य। अनेकार्थस्य शब्दस्य प्रकरणादिना एकार्थस्मरणे नानामतोपपादनं। व्यञ्जनाकथनं। शब्दशक्तिमूलध्वन्यादेरवान्तरभेदनिरूपणं। अभिधामूलध्वनिः। लक्षणामूलध्वनिः। शक्तिग्रहविचारः। लक्षणाविचारः। उपमारूपकादौ लक्षणाया उपयोगितादिनिरूपणं। सारोपासाध्यवसानादिविवेचनं। उपमालङ्कारनिरूपणं। अत्र काव्यप्रकाशचित्रमीमांसादिमतखण्डनं। उपमेयोपमाप्रकरणं। अनन्वयप्रकरणं। असमा-लङ्कारनिरूपणं। तत्र २ युक्तिकथनं। अन्यान्यमतखण्डनञ्च प्रायः सर्व्वत्र ज्ञेयं। स्मरणा-लङ्कारनिरूपणं। रूपकप्रकरणं। परिणामप्रकरणं। सन्देहालङ्कारनिरूपणं। भ्रान्तिमत्प्रक-रणं। उल्लेखप्रकरणं। अपह्नुतिप्रकरणं। अतिशयोक्तिप्रकरणं। तुल्ययोगिताप्रकरणं। दीपक-प्रकरणं। प्रतिवस्तूपमाप्रकरणं। दृष्टान्तालङ्कारनिरूपणं। निदर्शनाप्रकरणं। व्यतिरेका-लङ्कारनिरूपणं। सहोक्तिप्रकरणं। विनोक्तिः। समासोक्तिप्रकरणं। परिकरालङ्कारः। श्लेष-प्रकरणं। अप्रस्तुतप्रशंसाप्रकरणं। पर्य्यायोक्तिप्रकरणं। व्याजस्तुतिप्रकरणं। आक्षेपप्रकरणं। विरोधाभासप्रकरणं। विभावनाप्रकरणं। विशेषोक्तिप्रकरणं। असङ्गतिप्रकरणं। विषमा-लङ्कारनिरूपणं। समालङ्कारनिरूपणं। विचित्रालङ्कारनिरूपणं। अधिकालङ्कारः। अन्योन्या-लङ्कारः। विषमालङ्कारः। व्याघातप्रकरणं। शृङ्खलालङ्कारः। एकावल्यलङ्कारः। काव्यलिङ्गा-लङ्कारनिरूपणं। अर्थान्तरन्यासः। अनुमानप्रकरणं। यथासंख्यप्रकरणं। पर्य्यायप्रकरणं।

परिवृत्त्यलङ्कारः। परिसंख्यालङ्कारः। अर्थापत्तिः। विकल्पालङ्कारः। समुच्चयालङ्कारः। समाधिः। प्रतीपप्रकरणं। प्रौढोक्त्यलङ्कारः। ललितालङ्कारः। प्रहर्षणालङ्कारः। विषादनालङ्कारः। उल्लासालङ्कारः। अवज्ञालङ्कारः। लेशप्रकरणं। तद्गुणालङ्कारः। अतद्गुणालङ्कारः। मीलितालङ्कारः। सामान्यालङ्कारः। उत्तरालङ्कारनिरूपणञ्च।

---

**No. 3015.** अलङ्कारसर्व्वस्वं। Substance, country-made paper, 10 × 4 inches. Folia, 73. Lines, 9 on a page. Extent, 1,620 s'lokas. Character, Nágara. Date, Sm 1922. Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávágís'a. Appearance, new. Prose and verse. Generally correct.

**Alaṅkára-sarvasva.** A gloss on the author's aphorisms on rhetoric. By Rájánakaruchaka.

**Beginning.** ॐनमो गणेशाय।

नमस्कृत्य परां वाचं देवीं त्रिविधविग्रहां।
निजालङ्कारसूत्राणां वृत्त्या तात्पर्य्यमुच्यते॥

इह हि तावद्भामहोद्भटप्रभृतयः चिरन्तनालङ्कारकाराः प्रतीयमानमर्थं वाच्योपस्कारकतया अलङ्कारपक्षनिक्षिप्तं मन्यन्ते। तथाहि इत्यादि।

**End.** तस्मादाश्रयाश्रयिभावेन चिरन्तनमतानुवृत्तिरिति शिवम्।

समाप्तमिदमलङ्कारसर्व्वस्वम्।

**Colophon.** कृतिः श्रीमदाचार्य्यवर्य्यराजानकरुचकस्य। संवत्। १९२२।

**विषयः।** अलङ्कारस्वरूपविवेचनं। अत्र भामहोद्भटोद्भटादीनां प्राचीनालङ्कारिकाणां मतोपन्यासपुरःसरं अभ्यर्हिततमत्वनिर्व्वाचनं। गुणालङ्कारादीनां अन्योन्यमन्यत्वे हेतुप्रदर्शनं। व्यङ्ग एव वाक्यार्थीभूतः काव्यजीवितमितिनिरूपणं। अविवक्षितवाच्यादिव्यङ्गभेदकथनं। अर्थपौनरुक्त्य-शब्दपौनरुक्त्य-शब्दार्थपौनरुक्त्यभेदेन त्रिविधपुनरुक्तवदाभासनिरूपणं। अत्र अवान्तरविभागादिप्रदर्शनञ्च। एवं परत्र ज्ञेयं। अनुप्रासः। यमकं। उपमा। अनन्वयः। उपमेयोपमा। स्मरणं। रूपकं। परिणामः। सन्देहः। भ्रान्तिमान्। उल्लेखः। अपह्नुतिः। उत्प्रेक्षा। अतिशयोक्तिः। तुल्ययोगिता। दीपकं। प्रतिवस्तूपमा। दृष्टान्तः। निदर्शना। सहोक्तिः। विनोक्तिः। समासोक्तिः। परिकरः। श्लेषः। समासोक्तिश्लेषविचारे विविधमतोपपादनं। रसवत्। प्रेयः। ऊर्ज्जस्वी। अप्रस्तुतप्रशंसा। पर्य्यायोक्तं। अर्थान्तरन्यासः। व्याजस्तुतिः। आक्षेपः। विरोधः। विभावना। विशेषोक्तिः। अतिशयोक्तिः। असङ्गतिः। विषमं। समं। विचित्रं। अधिकं। अन्योन्यं। विशेषः। व्याघातः। कारणमाला। एकावली। मालादीपकं। सारः। काव्यलिङ्गं। अनुमानं। यथासंख्यं। पर्य्यायः। परिवृत्तिः। परिसंख्या। अर्थापत्तिः। विकल्पः।

समुच्चयः। समाधिः। प्रत्यनीकं। प्रतीपं। सामान्यं तद्गुणः। अतद्गुणः। उत्तरं। सूक्ष्मं। व्याजोक्तिः। वक्रोक्तिः। स्वभावोक्तिः। भाविकं। उदात्तं। भावसन्धिः भावोदयः। शबलता। संसृष्टिः। सङ्करः। सन्देहसङ्करादिविवेचनञ्च।

---

**No 3016** वेदान्तचिन्तामणिः। Substance, country-made paper, 9 × 4 inches. Folia, 48 Lines, 11 on a page. Extent 1,782 ślokas. Character, Nágara. Date, ? Place of deposit, Śántipura, Paṇḍit Kálidása Vidyávagíśa; another copy at Ulá, Post Ráṇágháṭa, Zillá Nadíyá, Dínanátha Bhaṭṭácharya. Appearance, new. Prose and verse. Correct.

**Vedánta-chintámaṇi.** Dissertations on the leading topics of the Vedánta doctrine. By Govardhana, son of Ghanaśyáma Bhaṭṭácharya, a native of the Punjab. This is distinct from No. 2200, (*ante*, VI, p. 262).

**Beginning** श्रीगणेशाय नमः।

यद्वाद्वैतं सर्व्वशक्तिं जड़जीवादिकारणं।
साकारं सच्चिदानन्दं वन्दे श्रीपुरुषोत्तमं॥
मायावादतमोनाशभक्तिमार्गप्रकाशयोः॥
सूर्य्याचन्द्रमसौ स्तौमि श्रीमद्वल्लभविट्ठलौ॥
भक्तो गुरुश्रीव्रजवल्लभस्य पितुर्घनश्यामत आप्तविद्यः।
गोवर्द्धनो बालनिबोधनाय वेदान्तचिन्तामणिमाननोति॥ इत्यादि।

**End.** यो गोवर्द्धनवाक्सुधोदधिभवः सद्वाञ्छितार्थप्रदः
स्वान्तध्वान्तनिवारको गुरुघनश्यामोक्तिशाणोज्ज्वलः।
विद्वद्भिः करुणापरैर्हृदि धृतः सोऽयं सतीमण्डले
यावच्चन्द्रदिवाकरं विजयतां वेदान्तचिन्तामणिः॥

**Colophon.** इति श्रीमद्वेदव्यासविष्णुस्वामिमतपुण्डरीकमण्डलमण्डनमार्त्तण्ड श्रीमद्वल्लभाचार्य्यचरणाब्जचञ्चरीकचित्तेन मोचगरुस्वमातामहगोस्वामिश्रीव्रजवल्लभचरणैकतानेन तैलङ्गवंशमाठीशाखीयतित्तिरिशाखीयापस्तम्बसूत्रसगोत्रोद्भवपञ्चनद्पुनामकघनश्यामभट्टात्मजेन स्वपितृसकाशात् लब्धविद्येन गोवर्द्धनाख्यकविना कृते वेदान्तचिन्तामणौ पञ्चदशं प्रकरणं सम्पूर्णं। पूर्णश्चायं वेदान्तचिन्तामणिः।

विषयः। जगत्कर्त्तृनिरूपणमुखेन सृष्टिप्रक्रियादिनिरूपणं। वेदान्तशास्त्रार्थसङ्ग्रहः। परोक्षब्रह्मविषये शब्दमेव प्रमाणमितिनिरूपणं। वेदस्य ब्रह्मवाक्यत्वकथनं। श्रीकृष्णस्य श्रीमद्भागवतरूपत्वकथनं। त्रिविधकार्य्यनिरूपणं। जगतो ब्रह्मोपादानत्वनिरूपणं। प्रपञ्च-

सत्यत्वनिरूपणं। आविर्भावतिरोभावावेव उत्पत्तिविनाशाविति निरूपणं। तार्किकाणामारम्भवादस्वरूपकथनपूर्व्वकं तदाक्षेपकथनं। विवर्त्तवादकथनपूर्व्वकं तन्निरसनं। अविकृतपरिणामवादस्थापनं। वह्नेः विस्फुलिङ्गवत् जीवानां ब्रह्मांशत्वनिरूपणं। ब्रह्मणः सच्चिदानन्दरूपत्वं आकाशवत् व्यापकत्वञ्चेतिकथनं। जीवोद्गमसंसारनिरूपणं। जीवान्तर्यामिस्वरूपविवेकपूर्व्वकं शुद्धाद्वैतार्थनिरूपणं। मायावादखण्डनं। ब्रह्मणो निर्व्विशेषत्ववादखण्डनं। ब्रह्मणः साकारत्वकथनं। शास्त्रे मायाशब्दस्य हरिसामर्थ्यादिवाचकत्वकथनं। शक्तिधर्म्माभेदनिरूपणपूर्व्वकं द्वैतवादनिराकरणं। विशिष्टाद्वैतविचारः। शैवशाक्तमतखण्डनं। चराचरस्वरूपपुरुषोत्तमस्वरूपनिरूपणं। प्रकृतिपुरुषतत्त्वकथनपूर्व्वकं भगवद्धामनिरूपणं। शुद्धाद्वैतमते आशङ्कानिराकरणं। भक्तिरेव हरितोषणोपाय इति निरूपणं। भक्तिस्वरूपादिविवेचनं। श्रीकृष्ण एव परब्रह्मेतिनिरूपणं। सद्गुरूपसदनस्यावश्यकता। भगवद्भजनप्रक्रियादिकथनं। मालाधारणावश्यकता। ऊर्द्धपुण्ड्रादिकर्त्तव्यता। मुक्त्यपेक्षया भक्तेर्दुर्लभत्वकीर्त्तनञ्च।

---

**No. 3017.** श्रीसूक्तभाष्यं। Substance, country-made paper, 8 × 3 inches. Folia, 6 Lines, 8 on a page. Extent, 107 ślokas. Character, Nágara. Date, Sm. 1885. Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávágíśa. Appearance, fresh. Prose. Correct.

**S'rísúkta-bháshya.** A commentary on the S'rísúkta hymn of the Ṛig Veda Sañhitá. By Rávaṇa.

**Beginning** श्रीगणेशाय नमः।

श्रीसूक्तस्यार्थः। तत्रेयमाद्या। जातानि विश्वानि भूवनानि धनानि वा वेद इति जातवेदा अग्निः तस्य सम्बोधनं। हे जातवेदः हे अग्ने गृहे कुले वा इत्यध्याहारः। मम गृहे लक्ष्मीं धनाधिष्ठात्रीं देवतां आवह। आ सम्यग्भावेन प्रापय। इत्यादि।

**End.** दीर्घं मेदोक्तं आयुः आयुष्यं लक्ष्मीप्रसादात् प्राप्नोतीति सम्बन्धः॥ २३॥

**Colophon.** इति श्रीरावणकृतं श्रीसूक्तस्य भाष्यं समाप्तं। संवत् १८८५।

विषयः। ऋग्वेदान्तर्गतश्रीसूक्तस्य व्याख्यानं।

---

**No. 3018.** भावार्थदीपिका। Substance, country-made paper, 9 × 4 inches. Folia, 100. Lines, 9 on a page. Extent, 1,684 ślokas. Character, Nágara, Date, ? Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávágíśa. Appearance, fresh. Prose. Correct.

**Bhávártha-dípiká.** A commentary on S'ankara A'chárya's A'nanda-laharí, a hymn in praise of S'iva. By Brahmánanda.

**Beginning** अलिकुलमण्डितगण्डं प्रत्यूहव्यूहतिमिरमार्त्तण्डं ।
सिन्दूरारुणशुण्डं देवं वेतण्डतुण्डमवलम्बे ॥
सत्सम्प्रदायप्रथनाय तिष्ये शिष्टैश्चतुर्भिः सह योऽवतीर्णः ।
उक्तो हरत्यक्रमतन्त्रराजे श्रीशङ्कराचार्य्यगुरुं तमीडे ॥
इह यद्यपि स्वर्गापवर्गसाधनतया विविधदेवताराधनक्रियाः——इत्यादि ।

**End.** पद्भ्यामित्यादि श्लोकत्रयमधिकं वर्त्तते । तत्तु भगवद्भाष्यकारशङ्कराचार्य्यकृतं न भवति । किन्तु केनचित् प्रक्षिप्तं भवति । अतो न व्याख्यातं । श्लोकशतकमेव व्याख्यातं ।

**Colophon.** इति श्रीब्रह्मानन्देन विदुषा कृता सौन्दर्य्यलहरी भावार्थदीपिका समाप्तिमगात् ।

विषयः । शङ्कराचार्य्यकृतानन्दलहर्य्या व्याख्यानं ।

---

**No 3019.** अवतारवादावली । Substance, country-made paper, 11 × 5 inches. Folia, 325 Lines, 6—7 on a page. Extent 4,212 slokas Character, Nágara Date, ? Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávágísa. Appearance, old. Prose and verse. Correct.

**Avatára-vádávalí.** Polemical dissertations on the non-dual theory as bearing upon incarnations. By Purushottama, son of Pitámbara. The object of the work is to refute all doctrines discussed in Sanskrit works, which are hostile to the unity of the divine and the human soul.

**Beginning** श्रीकृष्णाय नमः ।
अभवदतिरसालं जिह्म (?) विद्युज्जटालं
प्रलयजलदजालं यत्कृपालङ्कृतेषु ।
शिशिरमुखमयूखैर्भक्तसन्तापहालं
स विभुरखिलकालं मद्दृशां गोचरोऽस्तु ॥
नमामि श्रीमदाचार्य्यान् प्रभून् श्रीविट्ठलेश्वरान् ।
यद्दृशा करुणापूर्णा मादृशां सर्व्वसिद्धिदे ॥
— — — — — — — — — — ।
ये तत्त्वदीपभाष्यप्रभृतिषु सौक्ष्म्येण सुस्थिता वादाः ।
पद्ये तानवतार्य्य प्रकटीकुर्म्मोऽत्र युक्तिमद्वाक्यैः ॥ इत्यादि ।

End. एतं निधाय निकटे प्रणतिं विधाय
शिरेभ्यिदं सविनयं विनिवेदयामि ।
हेलोपहासविषयाण्यवलोक्य कश्चित्
कालं बुधाः करुणयैव कृतार्थनीयः ॥

Colophon. इति श्रीमद्वल्लभनन्दनचरणैकतानस्य पीताम्बरसूनोः पुरुषोत्तमस्य कृतौ अवतारवादावल्यामाद्यो वादः प्रहस्तनामा सम्पूर्णः । श्रीः ।

विषयः । विष्णुस्वामिमतोपपादनमुखेन वेदान्तपुराणादीनां संवादेन समन्वयेन च शैवादिमतनिरसनपूर्व्वकं शुद्धाद्वैतवादसंस्थापनं । एतन्मते जीवपरमेश्वरयोरंशांशिभाव इति विवेचनीयं । अत्र सर्व्वेषां वेदान्तानां भगवत्परत्वनिरूपणं । तेषां तत्प्रतिपादकत्व-कथनञ्च । वेदान्तवाक्यानां समन्वयकथनं । श्रीतदर्शनलक्षणं । ब्रह्मसूत्रतात्पर्य्यकथनं । सत्य-ज्ञानादिवाक्यानां लक्ष्यार्थत्ववादनिरसनं । तद्वाच्यत्वनिरूपणञ्च । प्रकाशाश्रयन्यायेन ब्रह्मणि धर्म्मधर्म्मिभावोपपत्तिकथनं । श्रुतीनां विरोधपरिहारकथनं । अस्थूलमित्यादिवाक्येषु पर्य्यु-दासादिविचारः । उपाधिपक्षखण्डनं । यद्वाचानभ्युदितमित्यादिश्रुतिव्याख्यानदूषणं । भग-वच्छरीरस्य अमायिकत्वव्यवस्थापनं । ब्रह्मणः केवलनिर्व्विशेषत्वकेवलसविशेषत्ववादखण्ड-नपुरःसरं उभयलिङ्गत्वनिरूपणं । ब्रह्मणः साकारत्वसंस्थापनं । भक्तिरेव तद्दर्शनोपाय इति-निरूपणं । अहिकुण्डलिन्यायेन तस्य विविधाकारत्वकथनञ्च । अनन्तरूपस्य भगवतः किं सर्व्वा-ण्येव रूपाणि तुल्यानि उतैकं मुख्यमितराणि गुणभूतानीतिविमर्शनं । अप्पयदीक्षितकृतशिव-तत्त्वविवेकमतखण्डनं । ब्रह्मोपनिषदीयनारायणकृतशङ्करानन्दकृतव्याख्यानयोराक्षेपः । प्रणव-स्वरूपनिरूपणादिकं । वासुदेव एव परब्रह्म इति निरूपणं । अत्र सर्व्वासामुपनिषदां संवादकथनञ्च । चन्द्रचन्द्रिकान्यायेन जगतो भगवच्छक्तिकत्वनिरूपणं । चतुर्व्यूहनिरूपणं । शिवशम्भुरुद्रेशानादिशब्दाः मुख्यया वृत्त्या वासुदेवे एव उपतिष्ठन्ति अन्यत्र तु शिवादौ गौणमि-तिनिरूपणं । अहङ्ग्रहोपासनास्वरूपकथनं । पुराणवाक्यानां समन्वयकथनं । विष्णुतत्त्वनिर्णय-कारमताक्षेपः । भगवन्महेश्वरादिशब्दनिर्व्वचनं । यज्ञेषु शेषिशब्दतात्पर्य्यकथनं । वियदधि-करणादिविमर्शनञ्च । उपक्रमोपसंहारयोः कुत्र प्राधान्यमितिविवेचनं । पुरुषशब्दवाच्य-निरूपणं । भगवानेव महापुरुषशब्दवाच्य इतिनिरूपणं । ब्रह्म किं निमित्तं उत उपादान-मित्यत्र नानावादकथनं । आत्मशक्तिनिरूपणं । जगतामादिकारणनिरूपणं । ऋतं सत्य-मित्यादिमन्त्राणामर्थकथनपूर्व्वकं विरोधपरीहारः । दहरोपासनानिरूपणं । अन्तर्यामिनिरू-पणं । सृष्टिप्रक्रियाकथनं । भगवद्गीताभागवतादिश्लोकानां विरुद्धत्वेन प्रतीयमानानां तात्-पर्य्यादिनिरूपणं । हरिहरयोरभेदकीर्त्तनं । भगवद्गीताया अनुवादत्ववादखण्डनं । तस्याः शिवपरत्वमतनिरसनञ्च । भगीरथेन विष्णुपादोद्भवा गङ्गा आनीता न तु हैमवतीतिनिरू-पणमुखेन गङ्गायाः द्वैविध्यकथनं । नीलकण्ठेन कण्ठे कालकूटधारणं न खलु स्वसामर्थ्यात्

किन्तु भगवन्मन्त्रप्रभावादेवेतिनिरूपणं। अत एव निर्व्व्याजं सर्व्वाधिपत्यं नमः शेषित्वादिकञ्च वासुदेव एव पर्य्यवस्यति, किञ्च निरुपाधिमहाविभूतिरानन्दाकारो भगवानेव सकलवेद-वेदान्तप्रतिपाद्यः, परमशिवस्तु तस्य मुख्यविभूतिरूपः सगुण एवेति राद्धान्तकथनं। श्रीमद्भाग-वतस्य निखिलवेदान्तार्थनिष्कर्षरूपत्वकथन। प्रत्युत्तरं भगवच्छब्दनिर्व्वचनं। भगवन्माहात्म्य-कीर्त्तनं। तदवतारनिरूपणं। भगवन्मूलरूपस्य अदृश्यत्वकथनं। नारायणादिशब्दनिर्व्वचनं। भगवन्मूर्त्तिनिरूपणं। पुराणेषु अर्थवादपरिकल्पनायां दोषकीर्त्तनं। पुराणेदेशभिर्विप्राः प्रोक्ता-स्तद्दस्तथैव च। चतुर्भिर्भगवान् विष्णुद्वाभ्यामम्बा प्रकीर्त्तिता। इत्यादिसूतसंहितावाक्यन्तु शिवांशभूतसगुणविष्णुपरमितिनिरूपणं। तामसादिपुराणनिरूपणं। सात्त्विकाद्यनुष्ठानफ-लकीर्त्तनं। अधोक्षजशब्दनिर्व्वचनप्रसङ्गेन निआण्टरूपणं। भगवत्पूजायामेकान्तिन एव अधि-कारिणो नान्ये इति निरूपणं। मनुष्येषु ये हि देवांशसम्भूतास्तेषां विष्णुपूजनमेव स्वधर्म्मः, इतरेषां दैत्यांशतया शिव एव भक्तिर्भवतीत्युपपादनं। गायत्र्यर्थविचारः। तस्याः शिवादि-परत्ववादखण्डनं। सन्ध्यानुष्ठाननित्यता। 'आग्नेयो वै ब्राह्मण' इत्यादि श्रुत्या अग्निसाध्यकर्म्म-भिरग्न्यन्तर्यामिणः शिवस्य यजनरूपमाराधनं ब्राह्मणकुलस्य प्रतिपादितमितिवादखण्डनं। भगवद्भजनाकरणे दोषकथनं। भगवत्कृतशिवाराधनबोधकवचनानां तात्पर्य्यकथनं। सर्व्व-भूताश्रयस्य भगवतो युधिष्ठिरसाहाय्यकरणमपि धर्म्मसंस्थापनार्थेतिरहस्यकीर्त्तनं। नैयायि-कादिमतनिन्दनं। अन्धहस्तिन्यायेन भगवानेव सर्व्वशास्त्रप्रतिपाद्य इतिनिरूपणं। पञ्चपाशु-पतादीनां मोहशास्त्रत्वकथनं। सात्त्वतशास्त्रनिरूपणप्रसङ्गेन सात्त्वतस्य जन्मादिवृत्तान्त-कीर्त्तनं। मोक्षोपायादिकीर्त्तनं। श्रीकृष्णरूपमेव भगवतो मुख्यमूर्त्तिरितिनिरूपणं। तद्ध्यानादि-कथनं। तत्परिकरनिरूपणं। निराकारवादखण्डनं। कृष्णाय देवकीपुत्राय इत्यादि छान्दोग्य-वाक्यतात्पर्य्यकथनं। प्रभासलीलायाः सङ्गतिकथनं। श्रीकृष्णेन असुरविनाशाय मत्यलीलो-पयिकं रूपं यद्गृहीतमासीत् तस्यैव नटवत् परित्यागोऽस्यां लीलायां न तु स्वरूपस्य इति तच्छरीरस्य असामयिकत्वनिरूपणं। उपसंहार।

---

**No. 3020.** व्यङ्गार्थकौमुदी। Substance, country-made paper, 10 × 4½ inches. Folia, 88. Lines, 12 on a page. Extent, 3,282 ślokas. Character, Nágara. Date, ? Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávágíśa. Appearance, fresh. Prose. Correct.

**Vyaṅgártha-kaumudí.** A commentary on Bhánudatta's Rasa-mañjarí, a treatise on rhetoric. By Vis'veves'vara Paṇḍit.

**Beginning** श्रीगणेशाय नमः।

हेरम्बमम्बुजाक्षं चाम्बकमम्बरमपि च जगदम्बां।

प्रणमामि प्रश्नतार्थप्रत्यूहसमूहहानाय ॥

प्रणम्य सम्यक्प्रतिपत्तिरम्यं लक्ष्मीधराख्यं विषमं धरायाः ।

विश्वेश्वरेण क्रियते समासात् समञ्जसार्थो रसमञ्जरीयं ॥

प्रारिप्सितसमाप्तिप्रतिबन्धकदुरितविदलनाय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति आत्मीयमिति ।

End. मञ्जरीत्येकदेशोपादानमिति शिवम् ।

श्रीमन्महीमहितनन्दकीमधीमन्मूर्द्धन्यताकलनमङ्गतधन्यतायाः ।

लक्ष्मीधरीयमद्भुत मदं प्रसूतं विश्वेश्वरस्य कृतिरस्य चिरस्य लोके ॥

Colophon. इति श्रीविश्वेश्वरपण्डितकृता रसमञ्जरीटीका व्यङ्गार्थकौमुदी समाप्ता ।

विषयः । भानुदत्तकृतरसमञ्जर्य्या व्याख्यानं ।

---

No 3021 अणुभाष्यम् । Substance, country-made paper, 10 × 5½ inches. Folia, 312 Lines, 8 on a page. Extent, 6 179 slokas. Character, Nágara. Date Sm 1909. Place of deposit, Sántipura Pandit Kálidása Vidyávágísa, Appearance, new. Prose. Generally correct.

Anubháshya. A commentary on the Vedánta Aphorisms of Vyása By Vallabha A'chárya. The standpoints of the commentator are the absolute unity of the divine and the human soul, and the supreme divinity of Krishna. His object in the work is the refutation of all Hindu doctrines hostile to his theory.

Beginning. श्रीगोवर्द्धननाथाय नमः ।

अथातो ब्रह्मजिज्ञासा । इदमत्र विचार्य्यते वेदान्तानां विचार आरम्भणीयो न वेति । किं तावत् प्राप्तं नारम्भणीय इति । कुतः ? इत्यादि ।

End. नानामतध्वान्तविनाशनक्षमो वेदान्तहृत्पद्मविकाशने पटुः ।

आविष्कृतोऽयं भुवि भाष्यभास्करो

मुधा + + + + + वत नान्यवर्त्मसु ॥

पुरन्दरमदोद्भवप्रचुरवृष्टिसंपीड़ित-

स्वकीयवरगोकुलावनपरायणो लीलया ।

स्मितामृतसुदृष्टिभिः परिपुपोष बालान् गिरिं

दधार च स एव हि श्रुतिशिरस्सु संराजते ॥

Colophon इति श्रीमद्वेदव्यासमतानुवर्त्तिश्रीवल्लभाचार्य्यविरचिते ब्रह्मसूत्राणुभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः । संवत् । १९०९ ।

विषयः। विष्णुस्वामिमतानुसारेण ब्रह्मसूत्रव्याख्यानं। तथा हि, रामानुजाचार्य्य विष्णुस्वामि-मध्वाचार्य्य-निम्बार्काचार्य्यप्रवर्त्तितानां क्रमेण श्री-रुद्र-माध्व-सनकोपपदानां यथाक्रमं विशिष्टाद्वैत-शुद्धाद्वैत-शुद्धद्वैत-द्वैताद्वैतमतसम्बन्धिनां सुप्रसिद्धानां चतुर्णां वैष्णवसम्प्रदायानां मध्ये वल्लभाचार्य्योऽयं विष्णुस्वामिमतप्रवर्त्तकतया वैष्णवैराचार्य्य इति कृतां पदवीमभिषेकपुरःसरं समधिजगाम। एतन्मते शुद्धाद्वैते जीवपरमेश्वरयोः सेव्यसेवकयोरंशांशिभावो जलबिन्दुजलाशययोरिव। सर्व्वञ्चेदं परिदृश्यमानं वस्तुजातं भगवत एव आविर्भवति लूतातन्तुरिव अप्येति च तमेव। तथा मायिकगुणसम्पर्कशून्यः परमेश्वरः श्रीकृष्ण एव उपास्यदेवः। किञ्च एतदुपासनयैव सर्व्वलोकोपरितनगोलोकप्राप्तौ आनन्दाविर्भावान्मोक्षः नान्यदेवोपासनया अन्यदेवोपासनाकर्त्तव्यताबोधनपरश्रुतयस्तु श्रीकृष्णविषयकपरमानुरागप्राप्तिद्वारा परम्परया मोक्षसाधिकाः।

---

**No. 3022.** काव्यप्रदीपः। Substance, country-made paper, 9 × 4 inches. Folia, 207. Lines, 10—11 on a page. Extent, 5,407 ślokas. Character, Nágara. Date, ? Place of deposit, S'ántipura, Paṇḍit Kálidása Vidyávágíśa. Appearance, fresh. Prose. Correct.

**Kávya-pradípa.** A commentary on Mammaṭha Bhaṭṭa's *Kávya-prakás'a*, a treatise on rhetoric. By Govinda Mahámahopá-dhyáya.

**Beginning.** श्रीगणेशाय नमः।

सीतादेव्याः प्रथमतनयः केशवस्यात्मजन्मा
श्रीगोविन्दो रुचिकरकवेः प्रेमपात्रं कनीयान्।
श्रीमन्नारायणचरणयोः सम्यगाधाय चित्तं
नत्वा सारस्वतमपि महः काव्यतत्त्वं व्यनक्ति॥

वचनसन्दर्भविशेषरूपस्य ग्रन्थस्य प्रारिप्सितत्वेन स्तोतुमुचितायाः सेव्यमानायाश्च वाग्देव्या अस्मदभूतां कविभारतीं तदभिन्नत्वेन अध्यवसितां प्रारिप्सितप्रतिबन्धकदुरितशान्तये ग्रन्थकृत् संस्तौति नियतिकृतेति। इत्यादि।

**End.** परिशीलयन्तु सन्तो मनसा सन्तोषशीलेन।
इममद्भुतं प्रदीपं प्रकाशमपि यः प्रकाशयति॥
दीपिकाद्वितयं काव्ये प्रदीपद्वितयं सुतौ।
समतौ सम्यगुत्पाद्य गोविन्दः शर्म्म विन्दति॥

**Colophon.** इति श्रीमहामहोपाध्यायश्रीगोविन्दविरचिते काव्यप्रदीपे अर्थालङ्कार-निर्णयो नाम दशम उल्लासः समाप्तः ।

विषयः । मम्मटभट्टकृतकाव्यप्रकाशस्य व्याख्यानं ।

---

**No. 3023** रत्नपालचरित्रम् । Substance, country-made paper, 13 × 4 inches. Folia, 48. Lines, 15 on a page. Extent, 558 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur Appearance, new. Verse. Incorrect Gujráṭi bhashá

**Ratnapála-charita.** A biographical account of Ratnapála, a Jain saint, and praise of Jain duties. By Kavimohan, or Mohan the poet. The work is in Guzrati verse.

**Beginning.** सकलश्रेणिमंदिरतणीदायक अनदिन जेह ।
तेजें कोइ रूपच्छे तेहथीधरीये नेह ॥
अविन्यासी अव्यय अरज अहयबली अलह ।
निराकार निरुपाधिगुण नवितमकारुपह ॥
आदि अनादिरूप ननन्यारी बली निरवेद ।
रूपा अरूपी जीवती+पदार्थीसकेभेद ॥ इत्यादि ।

**End.** होस्ये घरि घरि मंगलमालासांभलतां एरासजी ।
वनकणकंचणलीलालक्षीमोहन विजये विलासजी ॥

**Colophon.** इति श्रीरत्नपालचरित्रे कविमोहनविरचिते चतुर्थकाण्ड ।

विषयः । रत्नपालस्य ऋषेः सविस्तरजीवनवृत्तान्तकीर्त्तनमुखेन जैनधर्म्ममाहात्म्यकथनम् ॥

---

**No. 3024.** उपासकदशाङ्गबालबोधिनी । Substance, country-made paper, 10 × 5 inches. Folia, 53. Lines, 10 on a page. Extent, 1,524 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Correct.

**Bálabodhiní** ALIAS **Subodhiní** ALIAS **Upásaka-dasáñga-bálabodhini.** A Guzrati paraphrase of the Upásakadasáñga of the Jains.

**Beginning.** प्रणम्य श्रीमहावीरं जगदानन्ददायकं ।
उपासकदशाङ्गस्य वक्ष्ये व्याख्यां सुबोधिनीम् ॥

तेणं कालेणं तेणं समये चंपानामइं नगरी हुति। तेहणवणक पूर्णभद्रनामा चैत्यवन-तेहन उवाइथीजा। वर्णककहिवउ इहां चैत्यवाडी नुणिउ। इत्यादि।

End. इमे दिवाड्उ देसुउदेसो इति + रइ श्रुतस्कंधदशगुहिमइ। अनंजाइ अवइ दिवसे श्रुतांगतिमहीज॥

Colophon. इत्युपासकदशाङ्गबालबोधिनी समाप्ता।

विषयः। जैनोपासकदशाङ्गस्य गुर्ज्जरभाषया व्याख्यानम्।

---

No. 3025 विपाकाङ्गसूत्रवृत्तिः। Substance, country-made paper, 10 × 5 inches. Folia, 47. Lines, 8 on a page. Extent, 782 slokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Sanskrit.

**Vipákánga sútra-vritti.** A Sanskrit gloss on the Vipákánga Sútra, a Jain treatise on works and their retributions. By Abhayadeva A'chárya. The text has been noticed under No. 2887, (*ante*, VIII, 319).

Beginning प्रणम्य श्रीवर्द्धमानं वर्द्धमानश्रुताध्वना।
विपाकश्रुतशास्त्रस्य वृत्तिरेषं विधास्यते॥

अथ विपाकश्रुतमिति कः शब्दार्थः। उच्यते विपाकः पुण्यपापरूपं कर्मफलं। तत् प्रतिपादनपरं श्रुतमागमो विपाकश्रुतमिदं। इत्यादि।

End. यत्र येन जिनागमे भक्तिपरा इति।

Colophon. वृत्तिरियं संविग्नमुनिजनप्रधानश्रीजिनेश्वराचार्य्यचरणकमलचञ्चरीक-कल्पस्य श्रीमदभयदेवाचार्य्यस्य। इति समाप्तोऽयं ग्रन्थः।

विषयः। जैनकर्मविपाकसूत्रस्य व्याख्यनम्।

---

No. 3026. वर्द्धमानदेशना। Substance, country-made paper, 12 × 5 inches. Folia, 182 Lines, 12 on a page. Extent, 5 096 slokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Mágadhí interspersed with Sanskrit.

**Varddhamánadesaná.** A paraphrase, in Arddhamágadhi, of certain lectures and sermons of Varddhamána Jina, illustrated by a number of stories descriptive of Jain duties and moral precepts. By Rajakírti Gaṇi.

**Beginning.** नमः श्रीपार्श्वनाथाय वाञ्छितार्थप्रदायिने ।
करोमि गद्यबन्धेन श्रीवर्द्धमानदेशनां ॥

अस्मिन् जम्बूद्वीपे भरतनामक्षेत्रं वर्त्तते तस्मिन् भरते वाणियगनामनगरोऽस्ति । इत्यादि ।

**End** जम्बूस्वामी समभावभावितात्मा धर्म्मपरायणो जातः ।

अस्मिन् ग्रन्थे यत्किञ्चिदुत्सूत्रदूषणं भवति तत्सर्वं श्रुतधराः शोधयन्तु गतमत्सराः ॥

**Colophon.** इति श्रीवृहत्खरतरगच्छे श्रीजिनभद्रसूर्य्यान्तेवासिवाचनाचार्य्यश्रीपद्मसेरुगणितच्छिष्यश्रीमतिवर्द्धनगणितच्छिष्यश्रीमेरुतिलकगणितच्छिष्यश्रीदयाकलशगणितच्छिष्यामरमाणिक्यगणितच्छिष्यश्रीचमारङ्गगणितच्छिष्यवाचनाचार्य्यश्रीरत्नलाभगणिशिष्येण श्रीराजकीर्त्तिगणिना श्रीवर्द्धमानदेशनायां गद्यबन्धेन प्रणीतायां तेतलीपिताप्रतिबोधो नाम दशम उल्लासः समाप्तः । समाप्तोऽयं ग्रन्थः ।

विषयः । वर्द्धमानजिनोक्तार्द्धमागधीभाषामयदेशनाच्छायारूपोऽयं प्रबन्धः । तत्र एकदा-जम्बूद्वीपे भरताभिधानक्षेत्रे वाणियगनामनगरे भगवान् वर्द्धमानो गोष्ठीं चकार । तत्र धर्म्मदेशनाशुश्रूषया समागतानां मध्ये कश्चित् आनन्दनामा श्रेष्ठी भगवता "भो भव्यलोकाः जन्मजरामरणदुःखवियोगादिपूर्णोऽयं मनुष्यलोकः । अस्मिन संसारसागरे निमग्नानां जीवानां मानुषजन्मतावत् दुर्लभं । तत्रापि आर्य्यक्षेत्रे चोत्तमकुले प्रसूतिः दुर्लभः । दुर्लभ खलु उत्तमगुरुलाभः । दुर्लभश्च पुनः धर्म्मश्रवणं नाम । एवं ज्ञात्वा निद्राक्रोधादिकषायान विहाय विधाय च परमादरं धर्म्मानुष्ठाने सम्यक्त्वमधिगम्य आरामशोभावत् सुखमनुभवन्तिति" कथित तदारामशोभा-दृष्टान्तविवरणं जिज्ञासुरसौ भूय एव भगवन्तं पप्रच्छ । अथ भगवान् तद्विवरणमेवमाह स्म । तत्र स्थलाशयाभिधाननगरनिवासिनः अग्निशर्म्मनामधेयस्य विप्रवर्य्यस्य कन्याया वृत्तान्तकीर्त्तनं । अथ भगवान् पुनराह स्म । जीवदयादिव्रतानि । तत्र तत्र विविधोपाख्यानकथनञ्च । प्रथमतो जीवदयारूपाणुव्रतकथनपूर्वकं सत्यभाषणरूपद्वितीयाणुव्रतकथनं । तत्र १ विविधोपाख्यानकथनञ्च अदत्तादानग्रहणदानग्रहणविरतिरूपतृतीयाणुव्रतविधितद्विवरणादिकथनं । शीलरूपचतुर्थाणुव्रतविधितद्विवरणादिकथनं । परिग्रहपरिमाणरूपपञ्चमाणुव्रतविधितद्विवरणकथनं । अथ रात्रिभोजनाभावव्रतकथनं । तत्र विविधोपाख्यानकथनञ्च । अथ त्रिविधगुणव्रतविधिकथनादिकं । दिग्व्रतविधिकथनादिकं । भोगोपभोगव्रतविधिकथनादिकं । अनर्थदण्डविरतिव्रतविधिकथनादिकं । सामायकव्रतविधानादिकथनं । देशावशाधिकव्रतविधानादिकथनं । अथ कुव्यापारपोषध-आहारपोषध--ब्रह्मव्रतपोषध-शरीरसत्कारपोषधरूपचतुर्विधपोषधव्रतविधानादिकथनं । आनन्दस्य जैनधर्म्मादिग्रहणवृत्तान्तकथनं । अथ जम्बूस्वामिना सह सुधर्म्मस्वामिनः संवादेन कामदेवाभिधानश्रावकस्य चरितकीर्त्तनं । तत्र धर्म्मनिदेशक-पङ्क्तिभेदक-निद्राच्छेदक निरर्थकथक-हथापापिरूपपञ्चविधाततायिनिरूपणादिकथन । तत्र १ उपाख्यानकथनञ्च । अथ श्रावकस्य चुलणीपितुश्चरित्रवर्णनं । अथ सूरदेवनामधेयस्य श्रावकस्य चरित्रकीर्त्तनं ।

अथ चुल्लगशतनामकस्य श्रावकस्य चरितकथनं। अथ कुम्भकोलिकसंज्ञकश्रावकस्य चरित्रकथनं। अथ दामन्नकश्रावकचरित्रकथनं। अथ सद्दालपुत्रश्रावकस्य प्रतिबोधादिकथनं। अथ महाशतकनामधेयश्रावकस्य चरितकथनं। अथ नन्दनीप्रियनामकश्रावकस्य प्रतिबोधादिवर्णनं। अथ भविकानां प्रतिबोधार्थं तेतलीपितृनामधेयस्य श्रावकस्य चरित्रकथनं। अत्र सर्वत्र दृष्टान्ततया विविधोपाख्यानकीर्त्तनञ्चेति ज्ञेयम्।

---

No 3027. विक्रमसेनकुमारचउपई। Substance, country-made paper, 12 × 4 inches. Folia, 35. Lines, 14 on a page. Extent, 1,500 ślokas. Character, Nágara. Date, Sm. 1805. Place of deposit, Ájimganj, Ráya Dhanapat Siñh Bahádur. Appearance, fresh. Verse. Incorrect. Hindi.

**Vikramasena-kumára-chaupai.** A Hindi poem on the loves of Kumára Vikramasena and Lílávatí. Anonymous.

Beginning. सुदाता संघेसरोपूरण परम उल्लास।
सांनिधकरज्यो माहि+ अधिकफलेसूत+स॥
सारदचंदसमी व+वदन अनोपमजाय।
+रदसुपमप्रहोज्यो+मकवचनविलाय॥
चरणकमलमद्गु+तण+सेवु हित आण।
कि+योकुंजरकरै ते समव+कुणजाण॥ इत्यादि।

End विक्रमचरितनै चौपइ+दोग्रंथरच्योमैजो दूजो।
अधिको++भाष्योमोइ मिछादुक्व+होइजो॥
भावकरौनै येनरभणस्यै ते सेवरमणीवरस्यैजो।
एम वंधि सदा संभलस्यै तास मनोरथफलस्यैजो॥
ढालाभावनमौजैमै गाइमानमागरसुखदाइजो।
दिनदिन चढ़तै तेजसवाइ दिनदिन दौलति पाइजो॥

Colophon. इति श्रीविक्रमसेनकुमारचउपई समाप्त। संवत् १८०५।

विषयः। विक्रमादित्यकुमारस्य विक्रमसेनाभिधानस्य लीलावत्या सह परिणयादिवर्णनम्।

---

**No. 3028.** कयवन्नाचउपई । Substance, country-made paper, 12 × 4 inches. Folia, 22. Lines, 16 on a page. Extent, 262 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect.

**Kayavanná-chaupaí.** A Hindi poem giving the substance of a discourse between Varddhamána Jina and one Abhayakumára on religious benefactions. Anonymous.

**Beginning.** स्वस्तिश्रीसुखसम्पदादायक अरिहन्त देव ।
भेवकरु सूधे मने नाम जपूं नितमेव ॥
समभुं सरसति सांमणि प्रणमु सद्गुरुपाय ।
कयवन्नाचौपई क + दानधनमदौपाय ॥
प्रथमसंवंधचोमा + यो श्रीगौतमस्वांमिलब्धि ।
सुगुरश्रीअभयकुमरमन्त्रीसरणिबुद्धि ॥ इत्यादि ।

**End.** सरसदालनकांरप + तौ तौसज परर कचड़तीजौ ।
पुरीसूंणतांद्दौ यो वीकस्रो धरमकरणमन उलस्रोजौ ॥

**Colophon.** इति श्रीकयवन्नाचउपई समाप्त ।

विषयः । वर्द्धमानेन सह अभयकुमारस्य संवादेन दानधर्ममाहात्म्यकीर्त्तनम् ।

---

**No. 3029.** न्यायबोधिनी । Substance, country-made paper, 16 × 4 inches. Folia, 48. Lines, 9 on a page. Extent, 1,069 ślokas. Character, Nágara. Date, SK. 1702. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, decayed. Prose. Correct.

**Nyáya-bodhiní.** The elements of the Nyáya and the Vais'eshika systems of philosophy, in describing which the author refutes all adverse doctrines. By Durgádatta Sanmis'ra.

**Beginning.** प्रणम्य परमेशानं स्वर्गापवर्गकारणम् ।
क्रियते बालबोधाय सुबोधा न्यायबोधिनी ॥

तत्र प्रमाणादिषोड़शपदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानादात्यन्तिकदुःखनिवृत्तिरूपपरमपुरुषार्थाधिगम इति भगवानक्षपादः । तत्र प्रमाणस्वरूपं तावद्विवेचनीयं । इत्यादि ।

**End.** इति तत्तत्प्रकारतानिरूपकमेव तत्कार्य्यकारणभावविशेषत्वमिति ।

**Colophon**. इति सन्निश्रश्रीदुर्गादत्तविरचिता न्यायबोधिनी सम्पूर्णा। समाप्तोऽयं ग्रन्थः। शकाब्दाः १७०१।

विषयः। न्यायवैशेषिकमतनिरूपणम्। तत्र प्रमाणादिषोड़शपदार्थानामुद्देशक्रमेण प्रमाणपदार्थनिरूपणम्। प्रत्यक्षानुमानोपमानशब्दभेदात् तस्य चतुर्व्विधत्वनिरूपणमुखेन अर्थापत्त्यादीनां तदन्तर्गतत्वकथनं। प्रत्यक्षमात्रप्रमाणवादिनां चार्व्वाकादीनां मताक्षेपकथनम्। प्रमेयपदार्थनिरूपणं। तत्र कणादोक्तद्रव्यादिपदार्थानामन्तर्भावादिनिरूपणं। माध्यमिकादिमतखण्डनं। आत्मस्वरूपलक्षणपरीक्षादिनिरूपणं। परमात्मानुमानप्रकारकथनं। हेत्वाभासादिनिरूपणं। वादजल्पादिस्वरूपादिकथनं। अपवर्गसाधनादिकथनञ्च॥

---

**No. 3030**. नवपदप्रकरणम्। Substance, country-made paper, 12 × 4 inches. Folia, 64. Lines, 12 on a page. Extent, 1,632 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect. Arddha Mágadhí.

**Navapada-prakarana**. A metaphysical disquisition on truth and untruth and the modes of ascertaining them, from a Jain standpoint. By Jinachandra Gaṇi *alias* Devagupta A'chárya, disciple of Kakkácharya.

**Beginning**. नमिऊण वद्धमाणं मिच्छं सम्मवयाइं संखेवा।
नवभेयाइं वोच्छं सद्धाणमणुगाहट्ठाए॥
जारिसओ जइभेओ जहजायइ जहवइ च्छदोसगुणा।
जहगुणा जहचइ याए भंगोतह भावनाणेया॥ इत्यादि।

**End**. इइनवपयं चोएयं रइयं सीसेण कक्कसूरिस्स।
गणिणा जिणचंदेणं सरण+मणुग्गथं च॥

**Colophon**. इति श्रीमत्ककेशगच्छीयश्रीकक्काचार्य्यशिष्येण जिणचन्द्रगणिना श्रीदेवगुप्ताचार्य्य इत्युत्तरनाम्ना विरचितं नवपदप्रकरणं समाप्तं। इति।

विषयः। इह खलु सर्व्व एवायं जीवो नारकतिर्य्यङ्नरामरगतिरूपविविधविभीषिकादावदहने शब्दादिपञ्चविधविषयसुखलोलुपप्राणिगणोपदर्शितनानाविधाधिव्याधिमधुकरनिकराकीर्णसङ्कीर्णसुखमकरन्दे जननमरणप्रसुखदुःखश्वापदभयङ्करे संसारारण्ये नितरामसुन्दराचरणकरणेन मिथ्यात्वकुटिलसहचरेणैव भ्राम्यते। न च तदा कश्चिदेवं जानाति, यदुतैष एव ममैवंविभीषणस्थाननिवासजनितानन्तदुःखसम्पातहेतुरिति। एवं शारीरमानसाद्यनेकक्लेशायासशोषितस्य मिथ्यात्वादिनिबन्धनानन्तजननमरणपरिवर्त्तनात् निर्व्वेदितमगरीमिवा-

सार्थिनस्तस्य सकलसन्तापापनोदनदक्षनिरतिशयसुखस्वरूपापवर्गमार्गप्रदर्शकस्य कमपि कल्पा-प्रपुचपधोरेयं प्रपन्नस्य सम्यक्त्वसन्मार्गलाभः सम्पद्यते। सम्यक्त्वञ्च मिथ्यात्वादिपञ्चदशपदार्थानां परिज्ञानात् सम्पद्यते। तदत्र मिथ्यात्वादिकं प्रत्येकं नवविधद्वारेण निरूपितम्। तत्र द्वाराणि तावत् यादृशो यत्स्वरूपो मिथ्यात्वरूपो गुण इत्येको भेदः। यद्भेदे ये भेदा यस्यासौ यद्भेदो यावद्भेद इति द्वितीयो भेदः। येन प्रकारेण स उत्पद्यते इति तृतीयो भेदः। यथाच दोषा गुणाश्च यथा तद्विपक्षे दोषाः सम्भवन्तीति चतुर्थो भेदः। यथा च तदा सेवने गुणाः सम्भवन्तीति पञ्चमो भेदः। गुरुलघ्वालोचनरूपायतना यथैतेषु कर्त्तव्येति षष्ठो भेदः। यथा ऽतीचारास्तेषु सम्भवन्तीति सप्तमो भेद। यथा चैतेषामभावः सर्व्वथा सम्पद्यते इति अष्टमो भेदः। यथैतेषां गुणानां परिपोषार्थं भावना भाव्यते—इति नवमो भेदः। एतानि नवद्वाराणि प्रत्येकं मिथ्यात्वादिषु ज्ञेयानि। अत्र मिथ्यात्वं, सम्यक्त्वं, अणुव्रतानि पञ्च, त्रीणि गुणव्रतानि, शिक्षाव्रतानि चत्वारि, एतानि सर्व्वाणि द्वाराणि सम्यक्परीक्षितानीति ज्ञेयम्॥

---

**No. 3031.** नवपदप्रकरणविवृतिः। Substance, country-made paper, 14 x 6 inches. Folia, 219. Lines, 15 on a page. Extent, 60,106 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Correct. Sanskrit.

**Navapada-prakarana-vivriti.** A Sanskrit commentary on the work described under the next preceding number. By Dhanadeva Yaśodeva.

**Beginning** शुद्धध्यानधनप्राप्त्या कर्मदारिद्र्यविद्रुतौ॥
निर्वृतिः साधिता येन तं नमामि जिनप्रभुम्॥
जयति जितकर्मशत्रुर्लब्धातुलमहिमकेवलपताकः।
त्रिदशासुरकृतपूजः स तत्त्वनिवेदको वीरः॥
यस्याः प्रसादयानेन लीलया ज्ञानसागरं।
तरन्ति विबुधाः सा मे सन्निधत्तां सरस्वती॥
मम बुद्धिकुमुदिनीयं यत्सुकृतशशधरोदये सद्यः।
अलभत विकाससमसमं तान् भक्त्या निजगुरून् नौमि॥
श्रीदेवगुप्तसूरिर्विरचितवान् नवपदप्रकरणं यत्।
विवृतिं तस्य विधित्सुर्विज्ञापये सज्जनानेवं॥

— — — — — — —

इह चादावेव प्रकरणकाराऽभीष्टदेवतास्तवदेवतास्तवमभिधेयादिकच प्रतिपादयितुकामो गाथामाह । नमिऊण इति ।

End. किमर्थं सत्यं यदादावुक्तं तदेव पर्य्यन्ते निगदितमिति न दोष इति गाथार्थः ॥

इयच्च गाथा पूज्यपादैः स्वटीकायां न व्याख्याता । तत्रादर्शेषु पुनर्लिखिता दृश्यते इति मया व्याख्यातेति ॥

Colophon. इति श्रीमत्ककेशगच्छीयश्रीकक्काचार्य्यशिष्येण जिनचन्द्रगणिना श्रीदेवगुप्ताचार्य्योत्तरनाम्ना विरचितस्य नवपदप्रकरणस्य विवृतिः समाप्तेति ॥

— — — — — — — ।

उपाध्यायो यशोदेवो धनदेवाख्यनामकः ।
जड़ोऽपि धाष्ट्र्यतश्चक्रे वृत्तिमेतां सविस्तरां ॥
एकादशशतसंख्येष्वब्देष्वधिकेषु पञ्चषष्ट्यायं ।
श्रणहिल्लपाटकपुरे सिद्धा केशीयवीरजिनभवने ॥

विषयः । देवगुप्ताचार्य्यविरचितनवपदप्रकरणाभिधानजैनप्रकरणस्य विस्तरशो व्याख्यानम् ।

---

**No. 3032.** दण्डकबालाबोधः । Substance, country-made paper, 10 × 5 inches. Folia, 16. Lines, 9 on a page. Extent, 574 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Gujráti.

**Daṇḍaka-bálábodha.** A Gujráti translation of Devagupta A'chárya's *Daṇḍaka*, a collection of hymns in praise of Jina. As the name implies, it is intended for the use of girls.

Beginning. नमिऊं चणचोवीसजिणे । इति कहतां । रिषभादिक चउवीस तीर्थंकरा भते । नमस्कारकरीणै । तसुत्तविचारलेस देसनउं । ते तीर्थंकरे कह्यो । इत्यादि ।

End. श्रीजिनहंस चाचारजरेजराज्ये । श्रीधवलचंद्रनै सिष्येगजसारदूसानामे लिषीए । विचारस्तवनरूपविनती । आपरे चातमारे हितरीकरणहरेच्छै ॥

Colophon. इति श्रीदंडकबालाबोधः सम्पूर्णः ॥

विषयः । जिनहंससूरिष्ठतदण्डकाभिधानमागधीभाषामयस्तोत्रस्य गुर्ज्जरभाषया अवतारणम् ।

---

**No. 3033.** जीवविचारबालावोधः । Substance, country-made paper, 10 × 5 inches. Folia, 7. Lines, 8 on a page. Extent, 130 ślokas. Character, Nágara. Date, ? Place of deposit. Ájimganj Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Jívavichára-bálábodha.** A Gujráṭi translation of the *Jívavichára,* a treatise on animated creation. Anonymous.

**Beginning.** श्रीजिनाय नमः । तीने त्रिभुवनस्वर्गमृत्युपातालरैविषै दीवासमनजगट-मद्र विषद् प्रकाशमाकरणहारश्रीमहावीरस्वांमी भवि । नमिऊण कहता नमस्कारकरीनद् । दृत्यादि ।

**End.** संचेपकरिनद् उधस्यो कीयो । विस्तीर्णसिद्धान्तरूपीया समुद्रछंती ॥

**Colophon.** इति श्रीजीवविचारबालावोधः सम्पूर्णः ।

विषयः । अर्द्धमागधीभाषामयजीवविचारप्रकरणस्य गुर्ज्जरभाषया व्याख्यानम् ।

---

**No. 3034.** धनपालचरियम् । Substance, country-made paper, 13 × $3\frac{1}{2}$ inches. Folia, 132. Lines, 12 on a page. Extent, 494 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Generally correct.

**Dhanapála-chariya.** The history of Dhanapála, a banker, who obtained emancipation through the instruction of Neminátha, a former Jina. By Devendra Súri.

**Beginning.** वंदिश्रो सुव्वयजिणं सुंदरिसणाइं पुरंमि भवयच्छे ।
जह सामलिया विहारो कराविश्रो किंपितहवुच्छं ॥
जहतीइ पढमजम्मे विजयाखयरीइ मारिश्रो सम्मो ।
अवसासंति जिणगिहे ययं दयुं पुणइयं गां ॥
पत्तासुवोहि वीयं वेयावच्चं च कासु समणीणं ।
चरिउंच तेउरं + + जहभवमन्ने सवक्षियाजया । इत्यादि ।

**End.** परसत्था बहुरयणा दोगच्चहरा सुवम्नलंकारा ।
सुणिहिव्वकहाए+साम्नं इत्त विवुहस्सिया सुइरं ॥

**Colophon.** इति । ग्रन्थाग्र ४५०० ॥ श्रीः ।

विषयः । तत्र नेमिनाथाभिधानजिनवरस्य प्रसादेन रत्नपुरनिवासिनः धर्म्मपालसंज्ञकस्य कस्यचित् श्रेष्ठिनः सम्यक्त्वप्राप्तिपूर्व्वकनिर्व्वाणप्राप्तिविवरणकथनमुखेन तस्य सविस्तरजीवनवृत्तान्तकीर्त्तनम् ।

---

No. 3035 चित्रसेनचतुष्पदी । Substance, country-made paper, 12 × 3½ inches. Folia, 18. Lines, 16 on a page Extent, 680 ślokas. Character, Nágara. Date, Sm. 1849. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect. Hindi.

**Chittrasena-chatuspadí.** Anecdotes of Chitrasena, a king, illustrating the merits of almsgiving. Anonymous.

**Beginning.** श्रीरिसहेसरपयकमल पणमिय धरि आणंद ।
दानधरम मण्डणवरण सुंसुणो सभातरहंद ॥
सुगतिपंथच्यारे अच्छै दानशीलतपभाव ।
पिण जगगुरु पहिलौ कीयो दानतणो प्रस्ताव ॥ इत्यादि ।

**End.** तासचरणरजकणसुपसायं सरसति सुनिजरपाई ।
रामविजे उपकाय ए+चौपईविकानेरवणाई ॥
पंडित चउर साधुजनप्रेरणए उद्यम उपजायो ।
एसं बंधसुणावौ गावौ+सोभागसवायौ ।

**Colophon.** इति श्रीदानधर्म्मानुमोदनाधिकारे श्रीचित्रसेनचतुष्पदी । ग्रंथ सम्पूर्ण । संवत् १८४९ ।

विषयः । जैनशास्त्रोक्तदानविधितन्माहात्म्यादिकथनप्रसङ्गेन पद्मावत्या मन्त्रिणा च रत्न-सारेण सह चित्रसेनभूपालस्य संवादादिवर्णनम् ।

---

No. 3036. जम्बूकुमाररास । Substance, country-made paper, 12 × 3½ inches. Folia, 49. Lines, 11 on a page. Extent, 1,023 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect. Hindi.

**Jambukumára-rása.** A discourse between S'ántinátha, a Jina, and Jambukumára, on the merits of good conduct. By Nayavimala Gaṇi.

**Beginning.** प्रणमी पासजिणं इनाचरणकमलसुखकार ।
जम्बूस्वामी तणो कहुं सरसकथा अधिकार ॥
शीलव्रतपहिलां धरीकरपीड़णण जिणकीध ।
रागठामई वयरागीश्च अकहकहाणीकीध ॥ इत्यादि ।

**End.** एहनिसुणी ढढसीलजेथावई तासजनमसुप्रमाणवे ।
भणतां सुणतां मङ्गलमाला निउरकोड़िकल्याणवे ॥
धनर जम्बूमुनिवररायाजं प्रणमुं तसपायावे ।

**Colophon.** इति जम्बूकुमाररास सम्पूर्ण ।

विषयः । शान्तिनाथजिनस्य जम्बूकुमाराभिधानगणधरस्य च परस्परमालापवर्णनमुख न शीलधर्म्ममाहात्म्यादिकथनं ।

---

**No. 3037.** अम्बड़चरित्रम् । Substance, country-made paper, 12 × 4 inches. Folia, 42. Lines, 12 on a page. Extent, 1,043 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect. Sanskrit.

**Ambaḍa-charitra.** The story of Goraksha, a Yoginí,—one of the thirty-two stories related by the vivified images of Vikramadityá's throne. By Muniratna Súri.

**Beginning.** धर्म्मात् सम्पद्यते लक्ष्मीर्धर्म्मात् रूपमनिन्दितं ।
धर्म्मात् सौभाग्यदीर्घायुं धर्म्मात् सर्व्वसमीहितं ॥
धर्म+परि+बन्धः चक्रियस्यां (?) बलस्य च ।
द्वात्रिंशत्पुत्रिकोत्पत्तिर्विनोदाय वितन्यते ॥
जम्बूद्वीपेऽत्र भरते क्षेत्रे श्रीवासपुर्य्यपि ।
तत्र विक्रमसिंहो राट् सिंहवद्यस्य विक्रमः ॥
सभायामन्यदा + + समासीनोऽस्ति भूपतिः ।
पमानेकः समायातः प्रणमोवाच साञ्जलिः ॥
शृणु त्वं कौतुकं राजन् श्रोतव्यं सदृशं भवेत् ।
एषा गोरचयोगिन्या वर्त्तते ध्यानकुम्भिका ॥
अथवास्या मध्यनेको भण्डारो भवति श्रिया ।
अनेकविधमाणिक्यरत्नहेमसमन्वितः ॥ इत्यादि ।

End. इत्थं गोरक्षयोगिनीवचनतः सिद्धोऽम्बड़ः चविचः।
सम्राडेशवरा सुकौतुकभरा भूता न वा भाविनः ॥
द्वात्रिंशाग्निमपुत्रिकादिचरितं यद्गद्यपद्येन
मच्चक्रे श्रीमुनिरत्नसूरिविजयी तद्वाच्यमानं बुधैः ॥

Colophon. इति श्रीमदम्बड़चरित्रं समाप्तम् ॥

विषयः। विक्रमादित्यसिंहासनस्थद्वात्रिंशत्पुत्तलिकोत्पत्तिकथनप्रसङ्गेन गोरक्षयोगिन्या अम्बड़स्य च जीवनवृत्तात्मकोर्त्तनं जैनधर्म्मप्रभाववर्णनञ्च।

---

No. 3038 तात्पर्य्यदीपिका। Substance, country-made yellow paper, 14 × 4 inches. Folia, 115. Lines, 8 on a page. Extent, 3,380 ślokas. Character, Bengali. Date, ? Place of deposit, Bráhmaṇi Gráma, Zillá, Murshidábád, Rámánuja Maṭha. Appearance, fresh. Prose. Incorrect.

**Tátparya-dípiká.** A commentary or Murárí Mis'ra's *Anargha-rághava.* By Vishṇu Paṇḍita, son of Raṅga Bhaṭṭa.

Beginning. अनर्घराघवग्रन्थिमुद्ग्रन्थामि यथामति।
प्रायो दुर्घटशब्दार्थः प्रथमाङ्को विचार्य्यते ॥
सरामलक्ष्मणो यत्र कौशिको गतवान् गृहान् ॥
+ + + + + + + + ।

मङ्गलोपचारपरिप्राप्तमिष्टदेवतानमस्कारवदुपासनमपीष्टसाधनमिति शिक्षार्थं दर्शयति निष्प्रत्यूहमिति। भगवत ऐश्वर्य्यादिमाजस्ते लोचने उपास्महे सम्यक् भावयामः। किमर्थं। निष्प्रत्यूहं प्रत्यूहः विघ्न तदुभाय। अभावार्थे अव्ययमित्यादिना अव्ययीभावः। इत्यादि।

End. शष्कुलीशब्दः श्रवणविवरवाची देहावयवः।
यस्य श्रीरङ्गभट्टोऽभूज्जनको भूष्टहस्पतिः ॥
अविश्री यस्य साविश्री साविश्रीव पतिव्रता।
तेनेयं निर्मिता विष्णुपण्डितेनातिसुन्दरी ॥
टौका मुरारेभिंयतां विबुधा हृदि यत्नतः।
— — — — — — — ॥

Colophon. इति महामहोपाध्यायश्रीरङ्गभट्टात्मजश्रीविष्णुपण्डितकृतायां तात्पर्य्यदीपिकायां मुरारिटीकायां सप्तमाङ्कविवृतिः सम्पूर्णा।

विषयः। मुरारिमिश्रकृतानर्घराघवस्य व्याख्यानम्।

---

No. 3039. स्मृतिचन्द्रिका । Substance, country-made yellow paper, 19 × 3 inches. Folia, 68. Lines, 6 on a page. Extent, 1,886 ślokas. Character, Bengali. Date, ? Place of deposit, Lohágaṇja, Zillá Murshidábád, Rámánuja Maṭha. Appearance, decayed. Prose and verse. Correct.

**Smṛiti-chandriká.** Summaries of the leading topics of the Smṛiti. By Vámadeva Bhaṭṭácharya.

**Beginning.** प्रणम्य राधिकाकान्तं बर्हापीड़समुज्ज्वलं ।
क्रियते वामदेवेन रम्येयं स्मृतिचन्द्रिका ॥

तत्र प्रथमतो नामस्वरूपमभिधीयते । शर्म्मेति ब्राह्मणस्योक्तं वर्म्मेति चत्रसंश्रयं । गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः । इत्यादि ।

**End.** अतएव नित्यनैमित्तिक इत्यत्र नित्यमावश्यकं नैमित्तिकमुपरागादिनिमित्तकमिति शम् ।

**Colophon.** इति श्रीवामदेवभट्टाचार्य्यविरचिता स्मृतिचन्द्रिका समाप्ता ।

विषयः । ब्राह्मणादीनां नामनिरूपणं । सङ्कल्पवाक्यविवेचनं । देवपूजाविधिकथनं । दानलक्षणादिविवेचनं । तुलापुरुषादिमहादाननिरूपणं । वापीकूपतड़ागाद्युत्सर्गविधिकथनं । जलाशयकरणमाहात्म्यकथनं । तदुत्सर्गफलकीर्त्तनञ्च । स्नानविधिकथनं । तर्पणवाक्यादिविवेचनं । सन्ध्यादिविधिकथनं । बलिवैश्वदेवविधिकथनं । काम्यबलिविवेचनं । पितृयज्ञनिरूपणं । श्राद्धसपिण्डनादिकालनिरूपणं । अशौचनिरूपणं । शौचनिरूपणं । द्रव्यशुद्धिकथनं । वृषोत्सर्गविधिविवेचनं । मलमासादिनिरूपणं । कालाशुद्धिनिरूपणं । चूड़ोपनयनादिविधिनिरूपणं । अनध्यायनिरूपणं । विवाहविधिकथनं । सपिण्डतादिविवेचनं । स्त्रीधर्म्मनिनिरूपणं । नित्यनैमित्तिककृत्यनिरूपणञ्च ।

---

No. 3040. सन्दर्भचिन्तामणिः । Substance, country-made paper, 18 × 4 inches. Folia, 94. Lines, 8 on a page. Extent, 3,690 ślokas. Character, Bengali. Date, ? Place of deposit, Lohágaṇja, Zillá Mushidábád, Rámánuja Maṭha. Appearance, fresh. Prose. Incorrect.

**Sandarbha-chintámaṇi.** A commentary on Mágha's *S'iśupálabadha*. By Chandras'ekhara, son of Vishṇu Paṇḍita.

**Beginning.** यदनुध्यानमात्रेण तमोऽपसरति चणात् ।
तदेव परमाश्चर्य्यं परं ज्योतिरुपास्महे ॥

कर्मार्णवमिविहार्थप्रेषसंसन्नवर्मणे ।
महो + + सुकायास्मै विष्णवे गुरवे नमः ॥
रुद्राणामिव धूर्जटिः समजनि श्रेष्ठः पुरा यज्वनां
श्रीगोपाल इति श्रुतोऽतिविषदं साध्यायमध्यान्वितः ।
श्लाघामन्यगुणातिरेकभणितिर्लोकः स्वकान्ताधरं
यत्कौलिक्यकथामधुद्रवभरश्रीरोऽपि नापेक्षते ॥
भास्वानि + + धरतः सुधांशुः
क्षीराम्बुधेरिव विधोरिव रौहिणेयः ।
श्रीरङ्गभट्ट इति सूनुरभूच्च तुल्यः
+ + + + गणगणकल्पतरुस्ततोऽपि ॥
— — — — — — — ।
जातः समग्रकारणं + + + यथाभूत् शिवात् ॥
स्कन्दः श्रीयुतचन्द्रशेखर इति ख्यातः समासमण्डले ।
कण्ठे यं + + तस्य निर्भरमियं साहित्यविद्या सती ।
लब्ध्वा भूरिरसस्य भिन्नपुरुषान् भ्रान्त्यापि न प्रेक्षते ॥
— — — — — — — ।

आदौ महाकाव्यारम्भतं वस्तुनिर्देशं कुर्व्वन् कर्त्तव्यविघ्नविघातार्थं भगवतः कीर्त्तनमाच-रति । श्रिय इति ।

End. क्षितिधरपतिः श्रीपतिमसाविति पाठः श्रेयानिति महिमाचार्य्याः । शिख-रिणीच्छन्दः ॥

Colophon. इति महामहोपाध्यायश्रीविष्णुपण्डिततनूजन्मश्रीचन्द्रशेखरकृतौ सन्द-र्भचिन्तामणौ माघटीकायां पञ्चमः सर्गः ।

विषयः । माघकृतशिशुपालवधाभिधानमहाकाव्यस्य पञ्चसर्गान्तं व्याख्यानम् ।

---

**No. 3041.** पदचन्द्रिका । Substance, country-made paper, 14 × 4 inches. Folia, 64. Lines, 8—10 on a page. Extent, 1,368 ślokas. Character, Nágara. Date, ? Place of deposit, Lohágaṇja, Zillá Murshidábád, Rámánuja Maṭha. Appearance, decayed. Prose. Incorrect.

**Pada-chandriká.** A gloss on the *Das'a-kumára-charita* of Daṇḍí. By Kavindra A'chárya Sarasvatí.

**Beginning.** जटाजूटलसद्गङ्गं भुजङ्गपतिमण्डलं ।
नमामि यामिनीकान्तकान्तभालस्थलं शिवं ॥

भुत्वेति । भुवनहन्तान्तं चतुर्दशभुवनहन्तान्तं । पातालहन्तान्तमप्यर्थः । पिष्टपं भुवनं जगदि-
त्यमरः । वार्त्ता प्रहत्तिर्हन्तान्त इत्यपि । उत्तमाङ्गना नायिका ।

**End.** आकलय्य मनसि कृत्वा इत्यर्थः । योगान् विविधोपायान् । योगो युक्तौ च
सङ्गत्यां कर्म्मणा लभ्यलाभयोः । देहदार्ढ्य प्रयोगे च विष्कम्भादौ तथात्मनि । उपाये भेषजे शास्त्रे
हृष्टिसंहनने धने । विश्रब्धघातिनि ध्याने युक्तिन्याये च योजने ॥ इति मण्डीपः ।

**Colophon.** इति श्रीसकलशास्त्रार्थसार्थकौशलग्रेमुषीविलासरससान्द्रप्रवर्त्तिताशेषयशः-
समुद्रविद्वत्परिषच्चन्द्रयतीन्द्रसर्व्वविद्यानिधानश्रीमत्कवीन्द्राचार्य्यसरस्वतीकृतायां दशकुमारव्या-
ख्यायां पदचन्द्रिकाभिधानायां विश्रुतचरितं नाम अष्टम उच्छ्वासः ॥

विषयः । दण्डिकृतदशकुमारचरितस्य व्याख्यानम् ।

---

**No. 3042.** दशकुमारभूषणम् । Substance, country-made paper, Folia, 48. Lines, 8 on a page. Extent, 950 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Pandit S'yámalála Duve. Appearance, decayed. Prose. Incorrect.

**Daśakumára-bhúshana.** A gloss on the *Das'a-kumára-charita* of Dandí. By S'ivaráma, son of Krishnaráma, and grandson of Triloka-chandra.

**Beginning.** अपर्णया हैमवत्या युक्तः स्थाणुः प्रसीदतु ।
सर्व्वतापप्रशमनः सर्व्वाभीष्टफलप्रदः ॥
हृषभानुजया युक्तो देवो हलधरानुजः ।
भूतये भवतो भूयाद् योग्ययोगसुखान्वितः ॥
महेशपादाम्बुजसक्तचेता नरेशसम्पूजितपादपद्मः ।
महेशतेजा विरजा महौजास्त्रिलोकचन्द्रोऽजनि स द्विजाग्रः ॥
— = — — — — — ।
जातः सुतस्तस्य स कृष्णरामो मनोजवस्तस्य सुता बभूवन् ।
वेष्वग्रजः पूज्यपदारविन्दः प्रसादवित्तः शिवरामनामा ॥
गोविन्दरामोऽथमुकुन्दरामो जातः क्रमात् केशवरामसंज्ञः ।
करोमि टीकां निजबन्धवर्गमदे मनोज्ञां शिवरामसंज्ञः ॥

कृतेति । भुवनस्य जगतो हन्तान्तं वक्ष्मणादिभिः क्षणस्य इन्द्रस्य गुरोः पितामहस्य शकुन्तलादुष्मन्तादीनाञ्च । इत्यादि ।

End. दुर्गागृहे देवालये । भग्नपार्श्वं तिर्य्यकपार्श्वं । अथेति प्रकृतीः लोकान् ॥

Colophon. इति श्रीचिलोकचन्द्रात्मजकृष्णरामसूनुशिवरामकृतौ दशकुमारभूषणे अष्टम उच्छ्वासः । समाप्तोऽयं ग्रन्थः ॥

विषयः । दण्डिकृतदशकुमारचरितस्य व्याख्यानम् ।

---

No. 3043 आचारचन्द्रिका । Substance, country-made paper, 16 × 4 inches. Folia, 85. Lines, 6 on a page. Extent, 2,016 ślokas. Character, Bengali. Date, ? Place of deposit, Bráhmaṇí-gráma, Zillá Murshidábad, Rámánuja Maṭha. Appearance, new. Prose and verse. Incorrect.

A'chára-chandriká. A digest of the Smṛiti rules regarding daily religious duties. By Ramápati.

Beginning. आधाय हृदि विश्वेशं विश्वेशं तोषहेतवे ।
आचारचन्द्रिकां रम्यां वितनोति रमापतिः ॥

तत्र मनुः । ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थौ चानुचिन्तयन् । कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥ इत्यादि ।

End. तत्र स्नानेनापनीयते । येन रात्रावपि स्नानं न स्यात् । अत्र स्नानं प्रातरेवेति गुरुचरणा इति ।

Colophon. इत्युपाध्यायश्रीरमापतिविरचिताचारचन्द्रिका समाप्ता । समाप्तोऽयं ग्रन्थः ॥

विषयः । सुप्तोत्थितस्य प्रातःकृत्यादिनियमकथनं । तत्र मूत्रपुरीषाद्युत्सर्गविधिकथनं । आचमनस्वरूपकथनं । तद्विधिकथनञ्च । दानादौ प्रौढपादनिषेधकथनं । प्रौढलक्षणकथनञ्च । कर्णां द्वादशमलकथनं । आचमनानुकल्पादिविधिकथनं । फलादीनां दन्तलग्ने शौचादिकथनं । दन्तधावनादिविधिकथनं । प्रातःस्नानादिविधिकथनं । प्रातःसन्ध्यानियमादिकथनं । रुद्रनिर्म्माल्यस्पर्शादिनिषेधकथनं । कातीयस्नानप्रयोगकथनं । सन्ध्याकालपरिमाणादिकथनं । प्राणायामादिविधिकथनं । तर्पणविधिकथनं । कातीयतर्पणप्रयोगविधिकथनं । देवपूजादिप्रकारकथनं । पुष्पविवेकः । लिङ्गमाहात्म्यकीर्त्तनं । वैश्वदेवबलिकर्म्मविधिकथनं । महायज्ञप्रयोगादिकथनं । नित्यश्राद्धविधिः । भिक्षादानविधिकथनं । गोग्रासदानविधिकथनं । अतिथिपूजादिविधिकथनं । भोजनादिविधिकथनं । भक्ष्याभक्ष्यनिरूपणं । द्रव्यगुणादिकथनं । शयनविधिकथनञ्च ।

---

**No 3044.** **अमृतलहरी** | Substance, country-made paper, 12 × 4 inches. Folia, 4. Lines, 5 on a page. Extent, 41 ślokas. Character, Nágara. Date, ? Place of deposit, Bráhmaṇí-gráma, Zillá Murshidábád, Rámanuja Maṭha. Appearance, fresh. Verse. Correct.

**Amṛitalaharí.** A hymn in praise of the River Yamuná. By Jagannátha Paṇḍita.

**Beginning.** मातः पातकपातकारिणि तव प्रातः प्रयातस्तटं
यः कालिन्दि महेन्द्रनीलपटलस्निग्धां तनुं वीक्षते ।
तस्यारोहति किं न धन्यजनुषः स्वान्तं नितान्तोल्लस-
न्नीलाम्भोधरवृन्दवन्दितरुचिर्देवो रमावल्लभः ॥
नित्यं पातकभङ्गमङ्गलजुषां श्रीकण्ठकण्ठत्विषां ।
तोयानां यमुने तव स्तवविधौ को याति वाचालताम् ।
येषु द्रागवगाह्य मज्जति तरां रम्भाकराम्भोरुह-
स्फूर्ज्जच्चामरवीजितामरपदं जेतुं वराको नरः ॥ इत्यादि ।

**End.** संज्ञाकान्तसुते कृतान्तभगिनि श्रीकृष्णनित्यप्रिये
पापोन्मूलिनि पुण्यधात्रि यमुने कालिन्दि तुभ्यं नमः ।
एवं स्नानविधौ पठन्ति खलु ये नित्यं गृहीतव्रता
स्नानामन्त्रितसंख्यजन्मजनितं पापं क्षणाद्दुर्जहति ॥
अयं पण्डितराजेन श्रीजगन्नाथशर्मणा ।
स्तवः कलिन्दनन्दिन्या निर्मलो निरमीयत ॥

**Colophon.** इति श्रीजगन्नाथपण्डितराजकृतामृतलहरी समाप्ता ।

**विषयः ।** स्तोत्रव्याजेन यमुनाया जलमाहात्म्यादिवर्णनम् ।

---

**No. 3045** **अमरविवेकः** | Substance, palm-leaf, 17 × 2 inches. Folia, 162. Lines, 5 on a page. Extent, 3,924 ślokas. Character, Nágara. Date, ? Place of deposit, Lohágañja, Zillá Murshidábad, Rámánuja Maṭha. Appearance, decayed. Prose. Correct.

**Amara-viveka.** A gloss on the *Amarakosha.* By Mahes'vara.

**Beginning.** वन्दे तं परमानन्दं वामार्द्धेनोमया युतं ।
रज्जौ भुजङ्गवद्यत्र विवरीवृत्यते जगत् ॥

इह खलु श्रीमदमरसिंहविकीर्तितस्य नामलिङ्गानुशासनस्य निर्विघ्नपरिसमाप्त्यर्थं कृतं मङ्गलं ग्रन्थादौ शिष्यशिक्षार्थं निबध्नाति । यस्येति । भो धीराः अगाधस्य अतिगम्भीरस्य ज्ञानकरुणयोः समुद्रस्य यस्य —— इत्यादि ।

End. अङ्कैः चिह्नितः समर्थितः निरूपित इत्यर्थः ।

Colophon. इति श्रीमदमरविवेके महेश्वरेण विरचिते सामान्यकाण्डोऽन्तिमः समाप्तः । समाप्तोऽयं ग्रन्थः ॥

विषयः । अमरसिंहकृतनामलिङ्गानुशासनस्य व्याख्यानम् ।

---

No. 3046. प्रश्नोत्तरसमुच्चयप्रकाशः । Substance, country-made paper, 12 × 3½ inches. Folia, 40. Lines, 13 on a page. Extent, 1,646 ślokas. Character, Nágara, Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect. Sanskrit and Mágadhí.

Praśnottara-samuchchaya-prakáśa. A gloss on Hiravijaya-suri's *Pras nottara-samuchchaya*, a treatise on Jain duty. By Vijaya Gaṇi.

Beginning स्वस्ति श्रियो निदानं जन्तूनां धर्मकारिणां सम्यक् ।
श्रीवर्द्धमानतीर्थाधिराजमभिनम्य सद्भक्त्या ॥
गीतार्थसार्थनि + + इच्छन्तो मत्तराणि लिख्यन्ते ।
श्रीहीरविजयसूरिप्रसादितानि प्रबोधाय ॥ युग्मम् ॥

महोपाध्यायश्रीविमलहर्षगणिकृतप्रश्ना यथा । गच्छगच्छो अणुच्छो गौति । माथायां चतु-विंशतिभेदास्तत्रैव विंशतिभेदे द्विविचतुर्गुणसद्भावतः । इत्यादि ।

End. अथ यावदवस्थानाभावा इति सम्भाव्यते ननु + तत्त्वविद्भे+ मिति ।

Colophon. इति श्रीसकलसूरिपुरन्दरपरमगुरुतपागच्छाधिराजभट्टारकश्रीश्रीहीर-विजयसूरिप्रसादीकृतप्रश्नोत्तरसमुच्चये——शिष्यपण्डितकीर्तिविजयगणिसमुच्चिते चतुर्थः प्रकाशः । समाप्तोऽयं ग्रन्थः ॥

विषयः । प्रश्नोत्तरसमुच्चयस्य व्याख्यानम् ।

---

No. 3047. नाडीसमुच्चयम् । Substance, country-made paper, 10 × 5 inches. Folia, 4. Lines, 10 on a page. Extent, 85 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect.

**Nádí-samuchchaya**. Rules for the examination of the pulse, the eyes, the urine, and the tongue for the ascertainment of disease. Anonymous.

**Beginning** करस्याङ्गुष्ठमूले या धमनी जीवसाक्षिणी ।
तच्चेष्टया सुखं दुःखं ज्ञेयं कायस्य पण्डितैः ॥
एकचित्तः प्रसन्नात्मा शिरास्पन्दविशारदः ।
स्पृशेदङ्गुलिभिर्नाड़ीं त्रिवारं दक्षिणे भुजे ॥
आदौ च वहते पित्तं मध्ये श्लेष्मा प्रकीर्त्तितं ।
अन्ते प्रभञ्जनः प्रोक्तस्त्रिधा नाड़ीपरीक्षणं ॥ इत्यादि ।

**End.** टङ्कः स एव कथितस्तदद्वयं कोल उच्यते ।
साध्यासाध्यं विनिश्चीत कथितं पूर्व्वपण्डितैः ॥

**Colophon.** इति नाड़ीसमुच्चयं पूर्णतामगात् ।

विषयः । नाड़ीपरीक्षाविधिकथनं । पित्ताद्याधिक्ये नेत्रपरीक्षादिविधिकथनं । मूत्र-परीक्षादिविधिकथनं । जिह्वापरीक्षाविधिकथनं । संक्षेपेण मानप्रमाणकथनञ्च ।

---

**No. 3048.** नाड़ीपरीक्षा । Substance, country-made paper, 10 × 5 inches. Folia, 3. Lines, 9 on a page. Extent, 46 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect.

**Nádíparikshá**. Rules for the examination of the pulse and descriptions of the different character the pulse assumes under different diseases. By a Jain physician; name not given.

**Beginning.** प्रणम्य जगदुत्पत्तिस्थितिशाश्वतकारणं ।
स्वर्गापवर्गयोर्द्वारं त्रैलोक्यशरणं जिनं ॥
पूर्व्वं परीक्षयेन्नाड़ीं पश्चाद्रोगं परीक्षयेत् ।
नाड़ीरोगपरीक्षणव्यतीते नापि किञ्चन ॥ इत्यादि ।

**End.** मन्दं मन्दं शिथिलशिथिलं व्याकुलं व्याकुलं वा ।
स्थित्वा स्थित्वा वहति धमनीयाति नाशञ्च सूक्ष्मा ॥
नित्यस्पन्दे पुनरिति पुनः पिङ्गला या प्रसिद्धा ।
+ + देवं बहुविधि + राः सन्निपाता असाध्याः ॥

**Colophon.** इति नाड़ीपरीक्षा समाप्ता ॥

विषयः । ज्वरादौ नाड़ीपरीक्षणविधिकथनं ।

**No 3049.** कालतत्त्वविवेचनम्, वा कालतत्त्वविवेचनसारोद्धारः।
Substance, country-made paper, 14 × 4 inches. Folia, 158. Lines, 10—11 on a page. Extent, 4,278 ślokas. Character, Nágara. Date, ? Place of deposit, S'ántipur, Rámanátha Tarkaratna. Appearance, fresh. Prose and verse. Incorrect.

**Kála-tattva-vivechana.** On times meet for the performance of religious ceremonies and details of some of the principal ceremonies. By S'ambhu Bhaṭṭa, son of Bálakrishṇa, and disciple of Khaṇḍadeva.

**Beginning.** श्रीखण्डदेवः प्रणिपत्य सद्गुरुं
मीमांसकखान्तसरोजभास्करम्।
कर्म्मण्युपादेयनिषिद्धकालयोः
संक्षेपतोऽहं प्रकरोमि निर्णयम्॥
रघुनाथकृता + यात् कालतत्त्वविवेचनात्।
समुद्धरामि सारांशान् ग्रन्थान्तरकृतान्यपि॥

तत्र मासश्चान्द्रसौरसावननाक्षत्रभेदेन चतुर्विधः। इत्यादि।

**End.** अग्रे च पितृकर्मकालः प्रकीर्णककालश्च निरूपयिष्यते॥ इति शम्।
श्रीबालकृष्णकविमण्डलपञ्चशम्भो-
र्दार्षेयता कृतिरियं विदुषां न भोग्या।
द्रष्टुं तथापि परसूक्तिविबन्ध + +
+ + सर्पति महानपि दोषराशिः॥

**Colophon.** इति श्रीमत्पूर्व्वोत्तरमीमांसापारावारीणधुरीणश्रीखण्डदेवान्तेवासिकविमण्डलबालकृष्णसुतशम्भुभट्टकृते कालतत्त्वविवेचने मासादिनिर्णयः समाप्तः।

विषयः। तत्र चान्द्रसौरसावननाक्षत्रभेदेन चतुर्व्विधमासनिरूपणम्। चूडोपनयनविवाहादिषु मासविशेषनिरूपणं। संवत्सरनिरूपणम्। मलमासविवेचनम। भानुलङ्घितादिमासनिरूपणं। तत्र तत्र कृत्यविशेषनिरूपणम्। हेमाद्रिनन्दपण्डितादिमतविमर्शनञ्च। उपाकर्म्मविधिकथनं। शुक्रास्तादिलक्षणकथनं। अथ तिथिभेदनिरूपणं। तत्रोपवासक्रमप्राप्तत्वात् तत्प्रसङ्गेन अन्यत्रापि वार्षिककृत्येषु विशेषतः प्रतिपदादिनिर्णयः। विस्तरेण जन्माष्टमीव्रतनिरूपणं। दीपावलीविधिनिरूपणम्। विस्तरेण एकादशीव्रतनिरूपणं। अष्टमद्वादशीविधिकथनं। उपाकर्म्मविधिनिरूपणं। इष्टियागसत्रादिकालनिरूपणं। प्रकृतीष्टिकालनिरूपणं। विकृतीष्टिकालनिरूपणं। सोमयागादिकालनिरूपणं। एकभक्तकालनिरूपणं। नक्तव्रतकालनिरूपणं। अयाचितभक्ष्यभोजनकालनिरूपणं। सामान्यतो व्रतदानादिकालनिरूपणं। व्रतादिसन्निपातकालनिरूपणं। कार्त्तिकादिस्नानकालनिरूपणञ्च।

**No. 3050.** ईश्वरवादः । Substance, country-made paper, 12 × 5 inches. Folia, 18. Lines, 10 on a page. Extent, 440 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect.

**I'śvaravâda.** An essay on the existence of the Godhead, proved by pure reason, and the refutation of all atheistical doctrines. By Chitradhara S'armá.

**Beginning.** साकाङ्क्षानुक्रमेण स्फुटललितपदन्यासतः सन्निधानं
प्राप्ताऽसौ तत्पराऽपि प्रथितमततया योग्यतां द्योतयन्तौ ।
भूयो नेत्यालपन्तौ चकितमुपनिषन्मुग्धरामाभिरामा
यन्नोचे व्यक्तमुक्तं हरिरवतु स वो वाग्विलासानतीतः ॥

श्रोतव्यो मन्तव्य इति श्रुत्यात्मश्रवणं विधीयते । तच्च प्रमाणवाक्यमात्रादेव श्रवणं मननाङ्ग न तु वेदादेव । श्रोतव्य श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । इति स्मृतावपि श्रुतिपदं प्रमाणवाक्योपलक्षकमिति मिश्राः । तेषामयमाशयः श्रुतिवाक्यजश्रवणस्यैव मननाङ्गत्वे नियमादृष्टकल्पनं बाधकं । इत्यादि ।

**End.** नास्ति नास्तिकस्यापि कस्यापि कथायामवसर इति हताः परिपन्थिनः ।
पक्षाः सन्ति समेतया परिलसत्सम्बाधया बाधया
क्षीणस्य प्रतिपक्षयाचर+ + रूपव्रजोल्लासया ।
कामिन्येव स राधया परिचितो भूयोऽनुमित्या हरिः
कारं कार + + मोदमयतां चित्तैकवित्तश्रियं ॥

**Colophon.** इति श्रीमहामहोपाध्यायश्रीश्रीमच्चित्रधरशर्मप्रणीत ईश्वरवादः परिपूर्णः ।

विषयः । अनीश्वरवादखण्डनमुखेन केवलमनुमानेनैव ईश्वरसिद्धिरिति सप्रपञ्चप्रपञ्चनम् ॥

---

**No. 3051.** चिकित्साकलिका । Substance, country-made paper, 12 × 5 inches. Folia, 35. Lines, 13 on a page. Extent, 2,013 ślokas. Character, Nágara. Date, Sm. 1830. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Correct.

**Chikitsá-kaliká.** A manual of practice of medicine. By Tíshaṭa A'chárya.

**Beginning.** सूर्याश्विधन्वन्तरिसुश्रुतादीन्
भक्त्या नमस्कृत्य पितुश्च पादान् ।

कृता चिकित्साकलिकेति योगै-
र्मालासरोजैरिव तीसटेन ॥
हारीतसुश्रुतपराशरभोजदेव-
भगवदग्निवेशचरकादिचिकित्सकोक्तैः ।
र्पभिर्गणैश्च गुणवद्भिरिति प्रसिद्धै-
र्द्धान्वन्तरीयरचनारुचिरप्रबन्धैः ॥
— — — — — — ।
ते वातपित्तकफजास्त्रिविधा द्विधा वा
काये मनस्यपि च सन्त्यपरे नराणां ।
साध्याः क्वचित् क्वचिदपि प्रभवन्ति याप्याः
केचित् क्वचित् पुनरसाध्यतमाः प्रदिष्टाः ॥ इत्यादि ।

End. एषा चिकित्साकलिका सदर्थगन्धा भिषक्षट्पदवृन्दसेव्या ।
निरूपिता द्व्याशतैश्चतुर्भिर्योगैः स्रगङ्गैरिव तीसटेन ॥
+ + विशाला बहुसुश्रुतादिशास्त्रोद्भवैर्योगविशेषरत्नैः ।
आस्तां चिरं सद्गुणकण्ठिकेव कण्ठे स्थिता वैद्यमहीपतीनां ॥

Colophon. इति श्रीतीसटाचार्य्यविरचिता चिकित्साकलिका समाप्ता । संवत् १८३०।

विषयः । तत्र कर्म्मजदोषजभेदात् रोगाणां द्विविधत्वनिरूपणं । वातपित्तकफनिरूपणं । तत्र रोगिनः नाड़ी-मूत्र-मल-जिह्वा-शब्द-स्पर्श-मुखरूपपरीक्षायाः आवश्यकत्वकथनं । नाड़ी-स्थानादिनिर्णयः । संक्षेपेण साध्यादिस्थानसंख्यादिनिरूपणं । पित्तादिप्रकोपनिदानकथनं । अथ विरेचनादियोगकथनं । पथ्यापथ्ययोर्योग्यतानिरूपणं । अथ ज्वरचिकित्साकथनं । तत्र विविधयोगकथनं । अतीसारचिकित्साकथनं । सङ्ग्रहणीचिकित्सा । अर्शश्चिकित्सा । भगन्दर-चिकित्सा । शोफचिकित्सा । एवं उदर-गुल्म-विद्रधि-गलगण्ड-विस्फोटक-श्लीपद-वातरक्त-वि-सर्प-कुष्ठ-श्वित्र-प्रमेह-पाण्डुरोग-श्वास-कास-रक्तपित्त-तृष्णा-छर्दि-हिक्का-शूल-गुदावर्त्त-मूत्रकृच्छ्र-शोष-क्रमि-मित्ररोध-नेत्ररोग-नासारोध-कर्णरोग-मुखरोग-व्रणरोगादिषु प्रत्येकं चिकित्साविधा-नकथनमुखेन विविधभैषज्ययोगनिरूपणं । अथ शल्यतन्त्रकथनं । भूततन्त्रनिरूपणं । कौमार-तन्त्रनिरूपणं । विषतन्त्रनिरूपणं । रसायनतन्त्रनिरूपणं । वाजीकरणविधिकथनादिकञ्च ।

---

**No. 3052.** धर्म्मचर्चा । Substance, country-made paper, 11 × 5 inches. Folia, 15. Lines, 13 on a page. Extent, 426 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect. Gujaráṭí Bháshá.

**Dharma-charchá.** Dialogues, in Gujarati, on duty, the prime-occupation of man. The duty is here viewed from a Jain standpoint. Anonymous.

**Beginning.** ॐ अरिहन्ताय नमो ॥

अथ वचनका श्रीधर्मपरीक्षा चौतभाषा लिखियेच्छे। कोइकभलो शिष्यश्रीगुरुणे पुच्छे। जे श्रीगुरुमाहरू वचन साभलज्यो। तिवारे श्रीगुरुहर्षवंत तथा इते कहिवा लागास्युं पुच्छेच्छे। तिवारे शिष्यबोलो जे संसारमध्ये जेतला जीवच्छे ते सरव जीवने——इत्यादि।

**End.** आज्ञमो ऊकमकरी+ ते सहीकरीमानां क्यां ते माहे फरकां इच्छे नही इति तत्त्वम्॥

**Colophon.** इति धर्मचर्चा सम्पूर्णा।

विषयः। जीवानां धर्म एव परमश्रेयःसाधनं। स च जिनेन्द्रोक्त एव परमार्थरूप इति कथनमुखेन संक्षेपेण जैनधर्मतत्त्वकथनम्।

---

**No. 3053.** भक्तामरस्तवावचूरिः। Substance, country-made paper, 11 × 5 inches. Folia, 6. Lines, 12 on a page. Extent. 202 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose. Incorrect. Sanskrit.

**Bhaktámara-stavávachúri.** A gloss on the *Bhaktámara-stotra,* a hymn in praise of Jina. Anonymous.

**Beginning.** नमो वीतरागाय।

नमस्कृत्य महावीरं निर्व्वाणाम्बुमहोदधिं।
भक्तामराख्यस्तोत्रस्य अवचूरिर्वितन्यते॥

किल इति सम्भावनायां। अहमपि प्रथमं जिनेन्द्रं स्तोष्ये स्तवनं करिष्यामि यं प्रथमं जिनेन्द्रं सुरलोकनाथः सम्यक् प्रकारेण——इत्यादि।

**End.** अन्यापि माला नानाविधैः पुष्पैः क्रियते। किं पुरुषं मानतुङ्गं मानेन अहङ्कारेण तुङ्गं उच्चैस्तरं।

**Colophon.** इति श्रीभक्तामरस्तवावचूरिः।

विषयः। भक्तामराभिधानजिनेन्द्रस्तोत्रस्य व्याख्यानम्।

---

**No. 3054.** हैमकोषावचूरी । Substance, country-made paper, 13 × 5 inches. Folia, 116. Lines, 12 on a page. Extent, 4,657 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Paṇḍit Syámaláta Duve. Appearance, decayed. Prose. Incorrect.

**Hemakoschávachúrí.** A gloss on Hemachandra's Sanskrit dictionary. Anonymous.

**Beginning.** प्रणम्य श्रीवर्द्धमानं जिनेन्द्रं जितमन्मथं ।
क्रियते बालबोधाय हैमकोषेऽवचूर्णिका ॥

तच सिद्धं प्रतिष्ठां प्राप्तं साङ्गं शब्दानुशासनं यस्येति कर्त्तुर्विशेषणं । अङ्गानि लिङ्गधातु-पारायणादीनि । एतावता च शब्दानुशासनेनास्य एककर्त्तृकत्वमाह । एकत्वख्यापनश्चान्योन्यसं-वादात् प्रतीतिदार्ढ्येऽपि दर्शनार्थं । शब्दानुशासनस्य कौशलं तदधीनः शब्दविद्यानां प्रकर्ष इति प्रदर्शनार्थं । रूढान् शब्दान् व्याचष्टे प्रकृतिप्रत्ययविभागेनान्वर्थवर्ज्जिता व्युत्पत्तिरहिताः इत्यादि ।

**End.** गुणाभावः सन्मुखं नयति । शमोनियोऽस्मे मलुक् च । अवरमस्तीति पृषोदरादित्वात् साधुः । + + ÷ + नमनं + + अम् + + नमःशब्दश्चान्ते मङ्ग-लार्थः ।

**Colophon.** इति षष्ठकाण्डस्य अवचूरी समाप्ता । श्रीरस्तु ।

विषयः । हेमचन्द्रकृताभिधानचिन्तामणेर्व्याख्यानम् ।

---

**No. 3055.** संगहणिसुत्तबालावबोधः । Substance, country-made paper, 12 × 5 inches. Folia, 71. Lines, 10 on a page. Extent, 2,162 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect. Gujaráṭí Bháshá.

**Sañgahaṇi-sútta-bálábodha.** A Gujaráṭí translation of the *Sangrahaṇi-sútra* of the Jains, designed for the instruction of girls.

**Beginning** नमः वितरागाय ।

नमस्कारकरीनै अर्हन्त आदिशब्द लेइने सिद्ध आचार्य्य उपाध्याय सर्व-साधुभणी देवतादिकनी स्थिति कहीं स्युं । देवतादिकनामभवन कहिं स्युं । वलिदेवतादि कनी अवगाहना कहिये देहमां न कहिं स्युं । पत्नेयं कहितां । इत्यादि ।

**End.** संग्रहणस्वरूपीयो रसम एहवीशास्त्रनंदो जयरंतो प्रवर्तो आज्ञमी श्रीमहावीरनी शासनप्रवर्तीतां लगीप्रवार्त्ती ॥

**Colophon**. इति श्रीसंग्रहणिसुत्रबालाबोधः सम्पूर्णः ।

विषयः । त्रैलोक्यदीपिकापरनामकस्य सङ्ग्रहणीसूत्रस्य गुर्ज्जरभाषया अर्थकथनञ्च ।

---

**No. 3056.** संग्रहणीसूत्रचम्बूकार्थः । Substance, country-made paper, 12 × 6 inches. Folia, 80. Lines, 8 on a page. Extent, 1,313 ślokas. Character, Nágara. Date, Sm. 1844. Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Sañgrahaṇí-sútra-chambúkártha**. An abridged paraphrase of the Jain *Sañgahaṇisútra* in Gujarátí. Anonymous.

**Beginning**. नमस्कार करीने अरिहंतादि पंच परमेष्ठि प्रतें । स्थिति आयुः कहस्युं । भवनगटह कहस्युं । अवगाना कहस्युं । देहमांन कहस्युं । प्रत्येकें प्रत्येकें कहस्युं देवताने । इत्यादि ।

**End**. मलधारगच्छाधिराजश्रीहेमचन्द्रसूरिनइंथाउजां लगेंश्रीमहावीरवचनौइं तीर्थजयवं उतालगइ ॥

**Colophon**. इति श्रीसङ्ग्रहणीसूत्रचम्बूकार्थः सम्पूर्णः । संवत् १८४४ ।

विषयः । त्रैलोक्यदीपिकापरनामधेयस्य सङ्ग्रहणीसूत्रस्य गुर्ज्जरभाषया संक्षेपेण अर्थकथनम् ।

---

**No. 3057.** श्रीकल्पसङ्ग्रहः । Substance, country-made paper, 11 × 5 inches. Folia, 48. Lines, 11 on a page. Extent, 1,617 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Incorrect. Sanskrit, interspersed with Mágadhí.

**S'ríkalpa-sañgraha**. A collection of Mahávíra's lectures on Jain duty, illustrated by many stories.

**Beginning**. कल्याणानि समुल्लसन्ति विलसत्युद्दामभाग्यालय-
स्थाः सम्पन्नदिमा विलासबहुलाः स्वेहोऽज्वला दृश्यते ।
ताभिः शान्तिमुपैति भीतिततिभिः सार्कं न किं किं भवे
यद्वा मङ्गलमुज्वलं सुविपुलं यस्यानुभावाद्भुवि ॥

स चायं श्रीकल्पः श्रीसर्व्वज्ञप्रणीतः । सर्व्वज्ञप्रणीतमेव च शास्त्रं प्रमाणं । वक्तुः सर्व्वज्ञत्वाभावे शास्त्रस्यापि प्रामाण्यासम्भवात् । इत्यादि ।

End  उर्व्वी गुर्व्वी तदनु जलदः सागरः कुम्भजन्मा
व्योमोद्योतौ रविहिमकरौ तौ च यस्याङ्घ्रिपीठे।
सप्रौढः श्रीजिनपरिदृढः सोऽपि यस्य प्रणेता
स श्रीसंघस्त्रिभुवनगुरुः कस्य न स्यान्नमस्यः॥
यद्व्याख्यातमसङ्गतं यदुचितं चक्रे न चालापनं।
यच्चक्रे किल नानुवन्दनविधिर्नो धर्म्मलाभाशिषः।
सम्बन्धस्य न मीलितो यदपि वा नौचित्यमन्यत् कृतं
तन्मोहस्फुरितं मदीयमखिलं संघोऽधुना क्षाम्यतु॥
कश्चित्कापि कथञ्चिदेव यदयं सन्तापितः शिक्षया
यद्वा ना+नुयोगतः क्वचिदसौ सम्भाषितः सादरं।
सौहार्द्दादुपरोधतश्च यदि वा कश्चिन्नियुक्तः क्वचित्
सन्तः सर्व्वमपि प्रसन्नमनसा क्षाम्यन्तु तन्मेऽधुना॥

Colophon. इति श्रीकल्पसङ्ग्रहः समाप्तः॥

विषयः। सर्व्वज्ञश्रीजिनेन्द्रप्रणीतमेव शास्त्रं प्रमाणमितिनिरूपणं। धर्म्मार्थकामरूपेषु त्रिष्वपि पुरुषार्थेषु श्रीजैनधर्म्म एव मुख्य इति निर्णयः। तत्र अहिंसा सत्य-अस्तेय-त्याग-मैथुन-वर्ज्जनेष्वेव सर्व्वो धर्मः प्रतिष्ठित इति निरूपणं। पर्य्युषणाकल्पमाहात्म्यकथनं। अत्र विजयसेनाभिधानन्नृपतेरुपाख्यानकथथनं। तपोमाहात्म्यकीर्त्तनव्याजेन नागकेतोरुपाख्यानकथनं। अथ अनन्तामरणादिद्वात्रिंशद्विधमहापुरुषलक्षणकथनं। स्वप्नविवेककथनं। तत्र श्रुतानुभूतचिन्तनादिरूपनवविधकारणकथनञ्च। स्वप्नस्य चतुर्द्दशगुणकथनं। महावीरजिनेन्द्रस्य जन्माभिषेकादिवर्णनं। तस्य प्रव्रज्याग्रहणमहोत्सवादिवर्णनं। इन्द्रभूति अग्निभूतिप्रभृतीनामेकादशसंख्यकानां द्विजोत्तमानां तच्छिष्यत्वग्रहणकथनं। इन्द्रभूत्यादीनां गणधरत्वकथनं। भगवतो धर्मदेशनाकीर्त्तनं। एवं पार्श्वनाथजिनेन्द्रस्य वृत्तकीर्त्तनं। नेमिजिनेन्द्रचरित्रकथनं। जिनेन्द्राणां परस्परं निर्व्वाणप्राप्तिकालानन्तर्य्यकथनं। द्विसप्ततिविधकलानिरूपणं। अथ स्त्रीणां चतुःषष्टिविधकलानिरूपणं। आदिनाथचरितकथनं। स्थविरावलीनिरूपणं। सामाचारिकथनं। मिथ्यादुष्कृतादिकथनञ्च।

---

**No. 3058** सज्जनचित्तवल्लभः। Substance, country-made paper, 13 × 6 inches. Folia, 5. Lines, 7 on a page. Extent, 83 ślokas. Character, Nágara Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect.

**Sajjana-chitta-vallabha** Lessons on Jain duty, in verse. Anonymous.

Beginning नत्वा वीरजिनं जगत्त्रयगुरुं मुक्तिश्रियो वल्लभं
पुष्पेषुक्षम+नवाणनिवहं संसारदुःखापहं ।
वक्ष्ये भव्यजनप्रबोधजननं ग्रन्थं समासादहं
नाम्ना सज्जनचित्तवल्लभमिमं शृण्वन्तु सन्तो जनाः ॥
रात्रिश्चन्द्रमसा विनाब्जनिकरैर्नो भाति पद्माकरो
यद्वत्पण्डितलोकवर्ज्जितसभा दन्तीव दन्तं विना ।
पुष्पं गन्धविवर्ज्जितं मृतपतिस्त्रीवेह तद्वन्मुनि-
श्चारित्रेण विना न भाति सततं यद्यप्यसौ शास्त्रवित् ॥ इत्यादि ।

End. इत्तैर्विंशतिभिश्चतुर्भिरधिकैः सल्लक्षणेनान्वितै-
र्ग्रन्थं सज्जनचित्तवल्लभमिमं श्रीमल्लि(षा)णोदितं ।
श्रुत्वा+न्द्रियकुञ्जरान् समदनान् + + + ते दुर्ज्जयान्
विद्वांसो विषयाटवीषु सततं संसारविच्छित्तये ॥

Colophon. इति सज्जनचित्तवल्लभः समाप्तः ।

विषयः । सांसारिकसुखस्यानित्यतादिकथनमुखेन जिनानुशासनोक्तसम्यकचारित्रमेव परमसुखसाधनमिति निरूपणम् ।

---

**No. 3059.** त्रिशती, वा मनोरमा । Substance, country-made paper; 15 × 6 inches. Folia, 18. Lines, 10 on a page. Extent, 569 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Verse. Correct.

**Manoramá** ALIAS **Triśatí**. A treatise on the treatment of fevers of different kinds. By Rátulasárdñgadhara.

Beginning. उदयगिरिशिरःस्थो निद्रया मुढमेत-
ज्जगदगदमशेषं निर्मिमीतेऽनिशं यः ।
शमिततमतमिस्रोद्दामदारिद्र्यहारि-
प्रसृमरकिरणौघः स्तान्मुदेवः स देवः ॥
— — — — — — ।
प्रणम्य पद्मासनदक्षदक्षसदक्षदक्षकाशिपतीन् गरुंश्च ।
ज्वरस्य चेत्वाकृतिभेषजानि वदामि किञ्चिद्विबुधप्रियोऽस्मिन् ॥ इत्यादि ।

End. व्यायामं वा बलप्राप्तेरेवमारोग्यमाप्नुयात् ॥
सुधीरभूत् संसदि भूपतीनां सम्मानभाग् नागरवंशजन्मा ।

छोषप्रमान्यः सुकविः कलावान् दयाभिधानं भुवि देवराजः ॥
तस्यात्मजः शार्ङ्गधरस्त्रिलोकीपतिं विनेचं त्रिपुराच भक्तत् ।
ध्यायत्रिमां वैद्यमुदे त्रिदोषज्वरच्छिदे च त्रिशतीं चकार ॥
मत्यनुप्रकुद्धा वा कवित्वस्तुतिकौतुकात् ।
चक्षः चक्ततमेवैनामाद्रियध्वं मनोरमां ॥

Colophon. इति श्रीवैकुण्ठाश्रमशिष्यरातुलशार्ङ्गधरेण कृता त्रिशती सम्पूर्णा ॥

विषयः । सर्व्वविधज्वरचिकित्साविधिकथनं । विविधयोगविधानञ्च ।

---

**No. 3060** विशेषार्थबोधिका, वा राघवीवृत्तिः । Substance, country-made paper, 13 × 4 inches. Folia, 161 Lines, 17 on a page. Extent, 8,286 ślokas. Character, Nágara. Date, Sm. 1880. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Correct.

**Viśeshártha-bodhiká** alias **Rághaví-vritti**. A commentary on the Raghuvañśa of Kálidása. By Guṇavinaya Gaṇi, disciple of Jayasoma Gaṇi.

**Beginning.** ध्यात्वा तां ब्रह्मपुत्रीमधिकमभिगमं सम्मतीं दत्तपद्मां
सेवां संप्राप्तदेवासुरविसरशिरोमौलिघृष्टाङ्घ्रिपद्मां ।
यस्याः सम्यग्धदुग्धोज्ज्वलममलयशः श्रोतुमङ्गप्रवांसौ
+ + दृश्येऽष्टकाष्ठावधिषु परभवं गीतमाशाङ्गनाभिः ॥
— — — — — — — — — ।
कुर्व्वे श्रीरघुवृत्तिं मयां भव्यार्थदीपनपटिष्ठाम् ।
प्राप्य श्रीगच्छचरणादेशं शिष्यप्रबोधकृते ॥
यद्यप्यनल्परचिताः पूर्व्वेषां वृत्तयो विशेषयुताः ।
तदपि तदेकीकरणाद्बाधासोऽस्तु मे सफलः ॥

वागर्थेति । नन्वत्र प्रकृतकाव्यकरणादौ किमर्थं देवतानमस्कारादिष्करणं । तन्नमाप्ति-प्रतिबन्धकप्रत्यूहव्यूहव्यपोहायेति + चेत् तत् किं नमस्याथा एव तदपगम—इत्यादि ।

**End.** शाश्विवसिद्यसौमां चेति यत्नं । चक्षौवे मुहिरिति वैजयन्त्याम् कलात्-श्रीपमाद्दोषः । मन्दाक्रान्ताछन्दम् ॥

**Colophon.** इति श्रीमद्बृहत्खरतरगच्छीयवाचनाचार्य्यश्रीप्रमोदमाणिक्यगणिशिष्य-संख्यावमुख्यश्रीजयसोमगणितच्छिष्यश्रीगुणविनयगणिकृतायां विशेषार्थबोधिकाख्यायां श्रीरघु-वंशवृत्तौ एकोनविंशः सर्गः । — — — — — ।

भूषक्रचक्रवर्त्तिन्युदारसत्त्वाधिकारनिष्णाते ।
विजयिश्रीमद्कव्बरभूभृक्ते मान्यविबुधजने ॥
— — — — — — —
विक्रमतो रसद्दिरिभजरसशशिवर्षे जनोत्सवोत्कर्षे ।
श्रीमद्विक्रमनगरे विचितेयं विमलमतिगम्या ॥
— — — — — — — ।

संवत् १८८० ।

विषयः । कालिदासकृतरघुवंशस्य व्याख्यानम् ।

---

**No. 3061.** वच्छराजहंसराजचोपई । Substance, country-made paper, 12 × 4 inches. Folia, 38. Lines, 17 on a page. Extent, 1615 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Correct. Gujráṭí Bháshá.

**Vachchharája-hañsarája-chaupaí.** The story of Vatsarájá, a king, illustrating Jain doctrines and duty. By Jinodaya Suríndra.

**Beginning.** (प्रथमपत्रं खण्डितम् ।
मन्त्रीवचनराय जागीयो ।
बालसमोड़ी बंगोरे सुतो सोच जगावोयो ।
निद्राकिधीभंगोरे ।
कोपानल राजा हुयो रातालोचन कीधारे ॥ इत्यादि ।

**End.** एह संबंधसुहामणोजी कहै श्रीजिनोदयसुरिंद ।
भणै गुणै श्रवणे सुणै जीतिंहा घर आणंद ॥

**Colophon.** इति श्रीवच्छराजहंसराजचोपई समाप्त ।

विषयः । वत्सराजस्य चरित्रकीर्त्तनप्रसङ्गेन जैनधर्म्ममाहात्म्यादिकीर्त्तनम् ।

---

**No. 3062.** बृहच्छान्तिस्तोत्रम् । Substance, country-made paper, 11 × 4 inches. Folia, 4. Lines, 10 on a page. Extent, 85 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, decayed. Prose and verse. Incorrect. Sanskrit.

**Bṛihachchhánti-stotra.** Hymns to Jinas for the removal of evils. Anonymous.

Beginning. भोभो भव्याः शृणुत वचनं प्रस्तुतं सर्व्वमेतत्
ये यात्रायां त्रिभुवनगुरोरार्हता भक्तिभाजः ।
तेषां शान्तिर्भवतु भवतामर्हदादिप्रभावा-
दारोग्यश्रीधृतिमतिकरी क्लेशविध्वंसहेतुः ॥
भोभो भव्यलोका इह हि भरतक्षेत्रे विदेहसम्भवानां समस्ततीर्थं कृत्वा । इत्यादि ।

End. रोगाः प्रणश्यन्ति भयानि यान्ति
नानिष्टदेवाः परिपूरयन्ति ।
शुभानि कार्य्याणि + + + वृद्धिं
जिनेश्वराणां पदपूजनेन ॥
सर्व्वमाङ्गल्यमाङ्गल्यं सर्व्वकल्याणकारणम् ।
प्रधानं सर्व्व + मानां जयत्यजितशासनम् ॥

Colophon. इति श्रीबृहच्छान्तिस्तोत्रं सम्पूर्णम् ॥

विषयः । शान्तिविधानकथनमुखेन जिनानां माहात्म्यादिकथनम् ।

---

No. 3063. सिन्दूरप्रकरटीका । Substance, country-made paper, 12 × 5 inches. Folia, 37. Lines, 13 on a page. Extent, 1,097 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Generally correct. Sanskrit.

Sindúra-prakara-ṭíká. A commentary on the Sindúra-prakara. By Harshakírti Súri. (*Ante* No. 2689, VIII, p. 143.)

Beginning. श्रीमत्पार्श्वजिनं नत्वा निःश्रेयस+कारकं ।
सद्यः संसृतिमात्रेण प्रत्यूहव्यूहवारकं ॥
श्रीचन्द्रकीर्त्तिसूरीणां सद्गुरूणां प्रसादतः ।
सिन्दूरप्रकरव्याख्या क्रियते हर्षकीर्त्तिना ॥
ग्रन्थकर्त्ता आदौ इष्टदेवतावरणस्मरणरूपमङ्गलाचरणपूर्व्वकं श्रोतॄन् प्रति आशीर्व्वाद-द्वारमाह,— सिन्दूरेति । पार्श्वप्रभोः श्रीपार्श्वनाथस्य क्रमयोश्चरणयोरित्यादि ।

End. सिन्दूरप्रकरनाम्नो व्यरचि कृता ॥
सिन्दूरप्रकराख्यस्य व्याख्यायां हर्षकीर्त्तिभिः ।
सूरिभिर्विहितायान्तु सामान्यप्रक्रमोऽजनि ॥
तपोगुणे नागपुरीय + + श्रीचन्द्रकीर्त्त्याह्वय सूरिराजाः ।
तेषां विनेयर्षभहर्षकीर्त्तिः सूरीश्वरो वृत्तिमिमामकार्षीत् ॥

**Colophon**. इति श्रीसिन्दूरप्रकरटीका समाप्ता ।

विषयः । सोमकीर्त्तिकृतसूक्तिमुक्तावल्यपराभिधानसिन्दूरप्रकरस्य व्याख्यानम् ।

---

**No. 3064** उपदेशमालाबालाबोधः । Substance, country-made 14 × 5 inches. Folia, 75. Lines, 19 on a page. Extent, 5,522 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose. Generally correct. Gujráṭi Bháshá.

**Upadeśamálá-bálábodha**. A Guzrati glossary on the Upades'amálá of Somasundara Súri, designed for the use of girls. Anonymous.

**Beginning**. श्रीवर्द्धमानजिनवरमानम्य तनोमि बालबोधाय ।
प्राकृतवार्त्तारूपं विवरणमुपदेशमालायाः ॥

नमिउण–इति । जिनवरेन्द्र श्रीतीर्थङ्करदेव नमिउण नमस्करी । इणमोत्र उपदेश-देशनी माला श्रेणि वुच्छामि । इत्यादि ।

**End**. उपदेशमाल श्रीमहावीर जीवतां नीपनी ।
तेह भणि सिद्धान्तप्राय जाणिवी ॥

**Colophon**. इति श्रीश्रीश्रीश्रीश्रीगच्छनायकपरमगुरुभट्टारकश्रीसोमसुन्दरसूरिकृतोपदेशमालाबालाबोधः समाप्तः ।

विषयः । उपदेशमालाप्रकरणस्य गुर्ज्जरभाषया व्याख्यानम् ।

---

**No. 3065** लघुशान्तिस्तोत्रं । Substance, country-made paper, 11 × 5 inches. Folium, 1. Lines, 18. Extent, 21 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Incorrect.

**Laghu-śánti-stotra**. A hymn in praise of Jina for averting evils and cure of epidemic diseases. By Mánadéva.

**Beginning**. शान्तिं शान्तिनिशान्तं शान्तं शान्ता शिवं नमस्कृत्य ।
स्तोतुः शान्तिनिमित्तं मन्त्रपदैः शान्तये स्तौमि ॥
ओमिति निश्चितवचसे नमो नमो भगवतेऽर्हते पूजां ।
शान्तिजिनाय जयवते यशस्विने स्वामिने यमिनां ॥ इत्यादि ।

**End**. यश्चैनं पठति सदा शृणोति भावयति वा यथायोगं ।

स हि शान्तिपदं यायात् सूरिः श्रीमानदेवश्च ॥

Colophon. इति लघुशान्तिस्तोत्रं सम्पूर्णम् ॥

विषयः । शान्तिप्रार्थनव्याजेन शान्तिजिनेन्द्रमाहात्म्यकथनम् । मारीभयनिवारणाय-मिदं स्तोत्रं निर्म्मितमिति जैनाः ।

---

**No. 3066.** त्रिंशिकाबालाबोधः । Substance, country-made paper, 11 × 5 inches. Folia, 10. Lines, 10 on a page. Extent, 237 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Correct. Gujráṭí Bháshá.

**Triñśiká-bálábodha.** A Guzrati gloss on the Jayatribhuva-triñs'iká of Abhayadeva-súri, designed for the use of girls. Anonymous.

**Beginning.** जय तिहुयणेति । जय सर्व्वात्कर्षेण वर्त्तस्व । हे त्रिभुवनवरकल्पवृक्ष त्रैलोक्यमाहिवरप्रधानकल्पवृक्षोपमान । — — — — — त्रिभुवन कहता ऊर्द्धलोक अधोलोक मृत्युलोक । तेह माहि कल्याण मांगल्य—इत्यादि ।

**End.** इत्यामुणिवरश्रीअभयदेवसूरिनवश्रइमा विवरणाकरणहारस्तवा + + व सूरे + भवइ । एणिकि स्तावइ अर्न्नदित त्रैलोक्यसाधितसम्बावइ ॥

**Colophon.** इति त्रिंशिकाबालाबोधः सम्पूर्णः ।

विषयः । अभयदेवसूरिकृतजयत्रिभुवनत्रिंशिकाभिधानपार्श्वनाथजिनेन्द्रस्तोत्रस्य गुर्ज्जरभाषया व्याख्यानम् ।

---

**No. 3067.** तत्त्वकौमुदी । Substance, country-made paper, 12 × 6 inches. Folia, 189. Lines, 13 on a page. Extent, 7,210 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Sanskrit.

**Tattva-kaumudí.** A commentary on the Samyaktvasaptatiká of Jambu-svámí. By Sañghatilaka Súri, disciple of Guṇas'ekhara Súri.

**Beginning.** श्रीसर्व्वज्ञाय नमः ।

चञ्चामीकरवन्धुरोदरतरस्फारस्फुरद्दीप्तिम-
श्रोद्यत्कुम्भककाम्यकान्तिकुचरीसन्ध्याभ्रमभ्रुद्वहः ।

दन्तोद्योतसुजातमौक्तिकसुमः स्वेच्छानुरूपं फलन्
कल्पद्रुर्ऋषभप्रभुर्विजयते व्याख्या+ शाखादिव ॥
— — — — — — —।

दिश्यां शान्तिमखण्डं शककुलव्यापालचूडामणिं
येन ज्ञानकलाकलापमुदितं निर्म्माय षड्दर्शनी ।
प्राकाश्यं गमितानि + स यशसा सार्धं + सर्व्वागम-
ग्रन्थज्ञो जयताज्जिनप्रभुगुरुर्विद्यागुरुर्मः सदा ॥
एतेषां गुणशालिनां पदपयोजन्मद्वयीसेवनात्
सञ्जाताधिगमः ससंघतिलकाचार्य्यो जडोऽप्यञ्जसा ।
पूर्व्वाचार्य्यकृतेर्विचारचतुरञ्जातार्थसार्थोद्धृतेः
सम्यक्त्वागमसप्ततेर्विवरणं कर्त्तास्मि संक्षेपतः ॥

इह हि हेतुयुक्तिदृष्टान्त + + दुष्टशासने श्रीमज्जिनशासने सकलकर्त्तव्येषु परमसम्पदु-पादानकारणं संसारपारावारतारणं सम्यक्त्वमेव भवतेऽर्हन्तः । इत्यादि ।

End. निःश्रेयससाधकानि भवन्तीति गाथार्थः ।
या श्रीजिनेश्वरसमयाम्बुधितो गृहीत्वा
सम्यक्त्वतत्त्वमणिसप्ततिका व्यधायि ।
पूर्व्वैर्मुनीश्वरवरैरधुना मया तु
सोत्तेजिता विवृतिशाणकमन्त्रयोगात् ॥
जैनवाक्यमनन्तार्थं शेमुषी न तथा भृशम् ।
अत उक्तं यदुत्सूत्रं तन्मिथ्या दुष्कृ+मम ॥

Colophon. इति श्रीरुद्रपल्लीयगच्छगगनमण्डलदिनकरश्रीगुणशेखरसूरिपट्टावतंस-श्रीसङ्घतिलकसूरिविरचितायां सप्ततिकावृत्तौ तत्त्वकौमुदीनाम्न्यां द्वादशोऽधिकारः समाप्तः । समाप्तोऽयं ग्रन्थः ॥

विषयः । जम्बूस्वामिकृतसम्यक्त्वसप्ततिकाभिधानजैनसन्दर्भस्य व्याख्यानम् ।

---

**No. 3068.** शान्तिस्तोत्रवृत्तिः । Substance, country-made paper, 13 × 5 inches. Folia, 14. Lines, 9 on a page. Extent, 346 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose and verse. Correct.

**S'ántistotra-vṛitti.** A commentary on the work noticed under No. 3065. By Harshakírti.

Beginning. श्रीमन्तं बोधिदं नत्वा सदर्थज्ञानसिद्धये ।
कुर्व्वे शान्तिस्तवस्याहं व्याख्यामेतां सुबोधदां ॥

तत्र पूर्व्वमस्य स्तवस्योत्पत्तिः कथ्यते । सा चेयं—

सूरयो मानदेवाख्या बृहद्गच्छे पुराऽभवन् ।
एकदा तु चतुर्म्मासीं नद्रूलनगरे च ते ॥
तस्मिन्नेव तु समये शाकम्भरीपुरेऽजनि ।
शाकिनीमाद्युपद्रवैर्णादितो भ्रमम् ॥
महातिशयौ सूरीन्द्रमानदेवान्तिके तदा ।
सङ्घेनालोच्य मनजाः प्रेषितास्तत्र ते गताः ॥
— — — — — — — ।

अथ सूत्रं प्रारभ्यते । शान्तिमिति + अहं शान्तिं षोड़शजिनं नमस्कृत्य तमेव शान्तिजिनं प्रति स्तौमि इत्यादि ।

End. श्रीमद्भि व्यन्तरकृतोपद्रवनिवारणार्थमकारीति सम्प्रदायः ।
नागपुरीयतपोगणनाथाः श्रीचन्द्रकीर्त्तिसूरीन्द्राः ।
तच्छिष्यहर्षकीर्त्तिसूरिरिमां वृत्तिमातनुत ॥

Colophon. इति श्रीशान्तिस्तोत्रवृत्तिः समाप्ता ।

विषयः । मानदेवकृतलघुशान्तिस्तोत्रस्य व्याख्यानम् ।

---

No. 3069. श्राद्धदिनकृत्यम् । Substance, country-made paper, 12 × 4 inches. Folia, 20. Lines, 11 on a page. Extent, 468 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect. Ardha Mágadhí.

S'ráddhadina-kritya. Duties of Jain householdrs. By Jambusvámí.

Beginning. श्रीवीतरागाय नमः ।
वीरं णमिऊण तिलोअभाणुं विणुद्दनाणं सुमहानिहाणं
वुच्छामि स + णदिणस्स कि + जिणिंदचंदाणय आगमाओ ॥
नवकारेण विबोहो अणुसरणं सावओ वयाइं मे ।
जोगो चिअ वंदणओ पच्चक्खाणं च विहि पु + ॥ इत्यादि ।

End. अ + णमाणण जिणुत्तमाणं मए महत्यं मइ विब्भमेणं ।
जमे विरुद्धं इह तस्स यत्तं तं सव्वभिच्छामिह दुक्कडंति ॥

Colophon. इति श्रीश्राद्धदिनकृत्यं समाप्तं ।

विषयः । जैनगृहस्थानां प्रातःकृत्यादिशयनान्ताह्निककार्य्यनिरूपणम् ।

---

No. 3070. आनन्दश्रावकसम्बन्धः । Substance, country-made paper, 12 × 4 inches. Folia, 13. Lines, 14 on a page. Extent, 404 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect. Gujráti Bháshá.

**A'nanda-śrávaka-sambandha.** Anecdotes of a Jaina householder named A'nanda, illustrating Jain duties. By Mára Muṇi.

**Beginning.** वर्द्धमानजिनवरचरणनमतां नवनिधि होइ ।
सन्निकरं आणंदनो स्यां भणीश्यां सहकोइ ॥
पहिलौ इणि अवसर जगिराजीगोजौ ।
इणि जाति तिणइ कालणइ तिणिसग्रइजौ ॥ इत्यादि ।

**End.** रतनहरषवाचक गुरुमाहरो हेमनंदनसुखकार ।
हेमकीरतिगुरुबंधवनइ कह्यइ प्रभणइ मुनिश्रीमार ॥

**Colophon.** इति श्रीमदानन्दश्रावकसम्बन्धः सम्पूर्णः ।

विषयः । आनन्दाभिधानश्रावकस्य चरित्रकीर्त्तनप्रसङ्गेन जिनोक्तदानशीलादिमाहात्म्यकथनम् ।

---

No. 3071. धर्म्मोपदेशः, व्याख्यासहितः । Substance, country-made paper, 14 × 5 inches. Folia, 14. Lines, 10 on a page. Extent, 472 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Text, verse, commentary, prose. Generally correct.

**Dharmopadeśa.** Lessons on Jain duties with an exegesis. Anonymous.

मूलस्य,—

**Beginning.** वसुधाभरणं पुरुषः पुरुषाभरणं प्रधानतरलक्ष्मीः ।
लक्ष्म्याभरणं दानं दानाभरणं सुपात्रञ्च ॥

टीकायाः,—

मेदिनीमण्डनं पुरुषा एव प्रकीर्त्तिताः । परमार्थतः पुराणचतुरनरैः । यतो जगति ये

भवाभावाद्वे सर्व्वं सत्पुरुषावतारसम्भवाः । यथा पुरुषसिंहे श्रीश्रीधरे विहरमाणे इयं भूमि मेदिनुवर्ण—इत्यादि ।

मूलस्य,—

End. कच्छपः कुरुते वार्त्तां यदि स्यात् कर्द्दमो गजः ।
मत्स्यपाः पश्चिमोपत्वाल्पभराक्षं तदा + वं ॥

टीकायाः,—

निपुणाः कच्छपा भावे मनोरमाः । कथावदभाग्यशेखरः । प्राप्तशत्रुनाशकथावक्तृत्वा बुद्धिः श्रौत्पादिकी, वैनयिकी, कार्म्मिकी, पारिणामिकी च ॥

Colophon. इति धर्म्मोपदेशः ।

विषयः । जिनेन्द्रानुशासनानुकूलनीतिनिरूपणम् ।

---

No. 3072. सिन्दूरप्रकरव्याख्या । Substance, country-made paper, 13 × 5 inches. Folia, 32. Lines, 15 on a page. Extent, 300 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siṅh, Bahádur. Appearance, fresh. Prose. Incorrect. Sanskrit.

Sinduraprakaraṇa vyákhyá. A commentary on the work noticed under No. 2609. (*Ante* VIII, p. 143.) By Dharma-súri.

श्रीपार्श्वनाथाय नमः ।

Beginning. इह हि प्रवर्त्तमानाः निःसमानाः स्वसाध्यविधिसिद्धये विकसन्तः सन्तः सकलमङ्गलार्थं + + + शास्त्रपरिसमाप्त्यर्थंश्च समुचितेष्टदेवतानमस्कारपुरःसरमेव प्रवर्त्तन्ते — — — — — — — — — तावदाशीर्व्वादपद्यं समुपदिशति । सिन्दूर इति । पार्श्वप्रभोः क्रमयोश्चरणयोर्नखद्युतिभरो नखकान्तिसमूहो वो युष्मान् पातु रक्षतु संप्लतिसरित्प्रतिपातादिति शेषः । इत्यादि ।

End. सोमप्रभाचार्य्य इति सूत्रकारनामसूचनमिति हृदार्थः । अभजदिति सुगमं ॥

श्रीजिनसागरसूरिशिष्येण विद्वत्तता धर्म्मः ।
धर्म्मेण योऽत्र लेभे तेन जनोऽन्योऽस्तु धर्म्मपरः ॥
— — — — — — — ।

Colophon. इति श्रीसिन्दूरप्रकरव्याख्या सम्पूर्णा ॥

विषयः । सोमकीर्त्तिरुतसूक्तिमुक्तावल्यपराभिधानसिन्दूरप्रकरनामकसन्दर्भस्य व्याख्यानम् ।

**No. 3073.** मन्त्रयन्त्रविधिविधानम् । Substance, country-made paper 12 × 5 inches. Folia, 34. Lines, 15 on a page. Extent, 1,183 ślokas. Character, Nágara. Date, Sm. 1863. Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Incorrect. Sanskrit and Hindi.

**Mantra-yantrabidhi-vidhána.** Mystic rites with mantras and mystical diagrams, founded on a portion of the Bhaktámara-stotra of the Jains. Name of the author not made out.

**Beginning.** भक्तामरप्रणतमौलिमणिप्रभाणा
मुद्योतकं दलति पापतमोवितानम् ।
सम्यक् प्रणम्य जिनपादयुगं युगादा
वालम्बनं भव जले पततां जनानाम् ॥
— — — — — — ।

अथ मन्त्रः । ॐ ह्रीं ह्रैं ह्रूं श्रीं क्लीं क्लूं क्रौं क्रीं नमः । एवं मन्त्रध्याने सर्व्वसिद्धिः । महाप्रभावसकलोपद्रवनिवारणं । अथ यन्त्ररचना । ओङ्कारेण वेष्टिते चतुर्दिङ्मण्डले ह्रीं-ङ्कारेण वेष्टयेत् । ऋद्धिमन्त्रेण वेष्टयेत् । तदुपरि चतुर्दिक्षु ॐक्लीङ्कारेण वेदवेदेन (४४) वेष्टयेत् । इत्यादि ।

**End.** मैं सर्व्वसिद्धिमनोवाञ्छितकार्य्यकीसिद्धि होइ । जीं हनें वसिकरणीं होय तिंहको नाम मनमै चिंतवीजै मनोवाञ्छितकार्य्यसिद्धि होय ॥

**Colophon.** इति श्रीअढतालीसमां काव्यस्य मन्त्रयन्त्रविधिविधानं सम्पूर्णम् । संवत् १८६३ ।

विषयः । भक्तामरस्तोत्रस्य ऋद्धिमन्त्रयन्त्रादिनिरूपणपूर्व्वकं वशीकरणादिविधिकथनं यन्त्राणां संस्थानकथनञ्च ।

---

**No. 3074.** कल्याणमन्दिरस्तवः । Substance, country-made paper, 12 × 5 inches. Folia, 4. Lines, 8 on a page. Extent, 100 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Verse. Generally correct.

**Kalyáṇa-mandira-stava.** A hymn in praise of the different attributes of the last Jina. Author's name not made out.

**Beginning.** कल्याणमन्दिरमुदारमवद्यभेदि भीताभयप्रदमनिन्दितमङ्घ्रिपद्मम् ।
संसारसागरनिमज्जदशेषजन्तुपोतायमानमभिनम्य जिनेश्वरस्य ॥

यस्य स्वयं सुरगुरुर्गरिमाम्बुराशेः स्तोत्रं सुविस्तृतमतिर्न विभुर्विधातुम् ।
तीर्थेश्वरस्य कमठस्मयधूमकेतोस्तस्याहमेष किल संस्तवनं करिष्ये॥ इत्यादि ।

End. इत्थं समाहितधियो विधिवज्जिनेन्द्रसान्द्रोल्लसत्पुलककञ्चुकिताङ्गभागाः ।
त्वद्बिम्बनिर्मलमुखाम्बुजबद्धलक्ष्या ये संस्तवं(?)तव विभो रचयन्ति भव्याः ॥
जननयनकुमुदचन्द्रप्रभास्वराः स्वर्गसम्पदो भुक्त्वा ।
ते विगलितमलनिचया अचिरान्मोक्षं प्रपद्यन्ते ॥

Colophon. इति श्रीकल्याणमन्दिरस्तवः परिपूर्णः ।

विषयः । स्तोत्रव्याजेन जिनेन्द्राणां रूपगुणमहोत्म्यादिवर्णनम् ।

---

**No 3075** जयत्रिभुवनत्रिंशिका, वृत्तिसहिता । Substance, country-made paper, 12 × 6 inches. Folia, 10. Lines, 10 on a page. Extent, 275 ślokas. Character, Nágara. Date, ? Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Text, prose, Arddha Mágadhí; Commentary, prose Sanskrit. Generally correct.

**Jayatribhuvana-triñśiká,** with a commentary in Sanskrit. A hymn in thirty stanzas in praise of Jina. It is said Abhayadeva Súri composed it with a view to be cured of leprosy, and the prayer was granted through the grace of the saint.

**Beginning.** मूलस्य,—

जय तिहुयण वरकप्परुक्ख जय जिणधन्नंतरि
जय तिहुयण कल्लाणकोसदुरियक्करिकेसरि ।
तिहुयण जणअविलंघियाण भुवणत्तयसामिय
कुणसु सुहाइं जिणेस पासथंभणय पुरट्ठिय ॥

वृत्तेः,—

अथायं वृद्धसम्प्रदायः । पुरा भगवान् श्रीअभयदेवसूरिर्गुर्जरधरित्र्यां संभाणकस्थाने विहृतवान् । अत्र च महाव्याधिवशेन अतीव शरीरापाटवे सति प्रत्यासन्ननगरग्रामेभ्यः पाक्षिकप्रतिक्रमणाय समागमिष्यद्विशेषेण समाहूते मिथ्यादुष्कृत+नाय सर्व्वः श्रावकसंघः—— इत्यादि ।

मूलस्य,—

**End.** एव महारियजत्त देव इहन्हवणमहूसव
जं अणलिय गुणगहणतुम्ह मुणिजणअणिसिद्धओ ।
एम पसीयह पासनाह थंभणय परट्ठिय

इय मुणिवर सिरिअभयदेव विन्नवइ अणंदिय ॥

इतः,— — — — इत्येवं मुनिवरः श्रीअभयदेवसूरिः नवाङ्गी-
विवरणकरणानन्दितभूरिसूरिर्विज्ञापयति । अनिन्दितः निर्लोकलोकस्यानिन्दितः ॥

**Colophon.** इति जयतिहुयणनमस्कारवृत्तिः समाप्ता ।

विषयः । पार्श्वनाथजिनेन्द्रस्य माहात्म्यादिकीर्त्तनं स्तोत्रमिदं निर्म्माय अभयदेवसूरिः कुष्ठरोगान्निस्तीर्ण इति किंवदन्ती ।

---

**No. 3076.** मेघलता । Substance, country-made paper, 12 × 4 inches. Folia, 27. Lines, 9 on a page. Extent, 216 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Correct.

**Meghalatá.** A commentary on the Meghadúta of Kálidása. Author's name not made out. From his salutation it is evident that he was a Jain. The poem has the benefit of quite a host of commentators, and the works of a number of them have already been noticed in the preceding volumes.

**Beginning.** प्रणम्य श्रीजिनेशानं भवाब्धितरणे तरिम् ।
तन्यते बालबोधाय मेघे मेघलता स्फुटम् ॥

कश्चिदिति । कश्चिदनिर्दिष्टनामा यक्षः रामगिर्य्याश्रमेषु चित्रकूटाश्रमेषु वसतिं निवासं चक्रे अकरोत् । रामगिरेराश्रमाः रामगिर्य्याश्रमाः । अनामयाप्य इति कथं, चित्रङ्गोष्ठो गवङ्गोष्ठो स्वामिङ्गोष्ठो तथैव च ॥ नेषां नामापि न प्राप्यं प्रायोदौ च विशेषतः ॥ इति वचनात् । इत्यादि ।

**End.** सौ कुटुम्बिनौ कथं यथास्यात् तथा अविरतसुखं यथास्यात् तथा ॥

**Colophon.** इति श्रीकालिदासकृतमेघदूतकाव्यस्य वृत्तिः मेघलतानाम्नी समाप्तेयं ।

विषयः । कालिदासकृतमेघदूतस्य व्याख्यानम् ।

---

**No. 3077.** भक्तामरबालावबोधः । Substance, country-made paper, 12 × 4 inches. Folia, 21. Lines, 11 on a page. Extent, 591 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Gujaráṭí Bháshá.

**Bhaktámara-bálábodha.** A Gujaráṭi paraphrase of the Bhaktámara-stotra, a Jain hymn. By Merusundara. Composed under orders of Jinachandra Súri.

Beginning. प्रणम्य श्रीमहावीरं नत्वा च श्रुतदेवतां ।
श्रीजिनचन्द्रसूरीणामामायादेशमुत्तमम् ॥
बालालोकप्रबोधार्थमेषोऽहं मेरुसुन्दरः ।
भक्तामरमहास्तोत्रं करिष्ये वार्त्तया मुदा ॥
श्रीमहावीर प्रणमी श्रुतदेवता नइ प्रसादि श्रीजिनचन्द्रसूरिनां आदेशइं श्रीभक्तामरनउ बालाबोधवालाल्पमविकजननां प्रतिबोधवाभणी रचिसुं । इत्यादि ।

End. स्तोत्ररूपणी पुस्पमाला जे कठकंदल धरइ । तेहनइं लक्ष्मी स्वयं वरवरइ ॥

Colophon इति श्रीभक्तामरबालाबोधः सम्पूर्णः ।

विषयः । भक्तामरस्तोत्रस्य गुर्ज्जरभाषया सोपाख्यानमवतारणम् ॥

---

No 3078. औचित्यविचारचर्चा । Substance, country-made paper, 16 × 4 inches. Folia, 35. Lines, 10 on a page. Extent, 1,190 slokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Paṇḍit S'yámalála Duve. Appearance, decayed. Prose and verse. Incorrect.

Auchitya-víchára-charchá A treatise on rhetoric. By Kshemendra *alias* Vyásadása, son of Prakás'endra. The poets cited in this work are Parimala, Dharmakírti, S'ríharsha, Rájas'ekhara, Kálidása, Bhavabhúti, Bhaṭṭa Náráyaṇa, Váṇa Bhaṭṭa, Chandraka, Málava Rudra, Kárpaṭika, S'yámala, Pravarasena, Muktápíḍa, Utpalarája, Amaruka, Gauḍa Kumbhakára, Bhaṭṭa Prabhákara, Bhaṭṭa Indurája, Mátrigupta, Bhaṭṭa Laṭṭana, Kumáradása, S'ríchakra, Málava Kuvalaya, Bhaṭṭa Bhallaka, Varáhamihira, Yasovarmadeva, Dípaka, Mágha, Parivrájaka Gaṅgaka, &c.

Beginning कृतारिवञ्चने हर्षिर्येनाञ्जनमलीमसा ।
अच्युताय नमस्तस्मै परमौचित्यकारिणे ॥
कृत्वापि काव्यालङ्कारां क्षेमेन्द्रः कविकर्णिकाम् ।
तत् + + इं विवेकञ्च विधाय विबुधप्रियम् ॥
औचित्यस्य चमत्कारकारिणश्चारुचर्व्वणे ।
रसजीवित + — स्य विचारं कुरुतेऽधुना ॥
काव्यस्यालमलङ्कारैः किं मिथ्यागणितैः + + ।
यस्य जीवितमौचित्यं विचिन्त्यापि न दृश्यते ॥
अलङ्कारास्त्वलङ्कारा गुणा एव गुणाः सदा ।
औचित्यं रस + + + स्थिरं काव्यस्य जीवितम् ॥

तत्र परस्परोपकारकरुचिरशब्दार्थहरस्य काव्यस्योपमोत्प्रेक्षादयो ये प्रचुरालङ्कारा — इत्यादि ।

End. तदुदाहरणान्यानन्त्यान्न प्रदर्शितानौत्यलमतिप्रसङ्गेन ॥
आसीत् प्रकाशेन्द्र इति प्रकाशः काश्मीरदेशे चिद्दोश्वरश्रीः ।
अभूद्गृहे + + पवित्रमत्रमच्छिन्नमशासनमग्रजानाम् ॥
यः स्वयम्भुभवने विचित्रे लेख्यप्रतिष्ठापितमाढ्‌चक्रः ।
तस्यात्मजः सर्व्वमनीषिशिष्यः श्रीव्यासदासापरपुण्यनामा ॥
क्षेमेन्द्र इत्यच्चयकाव्यकीर्त्तिश्चक्रे नवौचित्यविचारचर्च्चाम् ॥
श्रीरत्नसिंहे सुहृदि प्रयाते शार्व्वं पुरं श्रीविजयेशराज्ञि ।
तस्यात्मजस्योदयसिंहनाम्नः कृते कृतस्तेन गिरां विचारः ॥
+ + + परिवारकृत् त्रिभुवनप्रख्यातशोलद्युतेः
सर्व्वस्यावननेन येन नितरां प्राप्ता विशेषोन्नतिः ।
आशाः शौतलतां नयत्यविरतं यस्य प्रतापानल-
स्तस्य श्रीमदनन्तराजन्टपतेः काले किलायं कृतः ॥

Colophon. इति श्रीप्रकाशेन्द्रात्मजव्यासदासापराख्यश्रीक्षेमेन्द्रकृता औचित्यविचार-चर्च्चा परिपूर्णा ॥

विषयः । अलङ्कारादयः खलु यथोचितस्थानविन्यासात् काव्यमलङ्कर्त्तुं प्रभवन्ति । तत्र यत् किल यस्य अनुरूपं तदुचितमुच्यते । तस्य भाव औचित्यं तच्च सकलकाव्यशरीरजीवितभूतमिति निरूपणम् । अथ औचित्यस्य, पदे, वाक्ये, प्रबन्धार्थे, गुणे, अलङ्कारे, रसे, क्रियायां कारके, वचने, विशेषणे, उपसर्गे निपाते, काले, देशे, कुले, व्रते, तत्त्वे सत्त्वे, अभिप्राये, स्वभावे, सारसङ्ग्रहे, प्रतिभायां, अवस्थायां, विचारे, नाम्नि, आशिषि च क्रमेण सोदाहरणं स्थितिनिरूपणम् । अत्रोल्लिखितानां कवीनां नामधेयानि, यथा,—परिमलः । धर्म्मकीर्त्तिः । श्रीहर्षः । राजशेखरः । कालिदासः । भवभूतिः । भट्टनारायणः । बाणभट्टः । चन्द्रकः । चन्दकः । मालवरुद्रः । कार्पटिकः । श्यामलः । प्रवरसेनः । मुक्तापीड़ः । उत्पलराजः । अमरुकः । गौड़कुम्भकारः । भट्टप्रभाकरः । भट्टेन्दुराजः । मातृगुप्तः । भट्टलट्टनः । कुमारदासः । श्रीचक्रः । मालवकुवलयः । भट्टमल्लटः । वराहमिहिरः । यशोवर्म्मदेवः । दीपकः । माघः । परिव्राजकः । गङ्गकश्चेति ॥

---

No. 3079 अतीचारसूत्रम् । Substance, country-made paper, 12 × 5 inches. Folia, 8. Lines, 7 on a page. Extent, 119 ślokas. Character, Nágara. Date, Sм. 1669. Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Verse. Correct. Arddha Mágadhí.

**Atichára sútra**. Practices and conduct subversive of Jain duty. By Baṅgádhika S'ramaṇa.

नमो चउवीसाए।

**Beginning** तीत्थयराण उसभाइ महावीरपज्जवसाणाणं।
अहं भंते सुयणाणं।
सामाइय माइयं दुवालसंगगणिपिड़गं॥
तस्स नाणस्स इमे चउद्दसो अइआरा। तं जहा। इत्यादि।

**End**. वडढितसुहपरिणामो मम चित्तो भयउ सुइसम्मत्तो।
नाण तव विरिय धम्मो अरहेसमणे तहा संघे॥

**Colophon**. इति श्रीअतीचारसूत्रं समाप्तं। संवत् १९९९।

विषयः। तत्र मिथ्यात्वमोहनीयविशेषादात्मनः अशुभाः परिणामविशेषाः अतीचाराः। अथ श्रुतज्ञानस्य चतुर्दश अतीचाराः भवन्ति। ते खलु आविद्धं, व्यत्यास्रेड़ितं, हीनाक्षरं, अत्यक्षरं, पदहीनं, विनयहीनं, घोषहीनं, योगहीनं, सुष्ठदत्तं, दुष्टप्रतीच्छितं, अकालकृतस्वाध्यायं, कालीनकस्वाध्यायं, अस्वाध्यायस्वाध्यायं ज्ञानविपर्य्ययश्चेति। तदेतद्दर्शनमोहनीयकर्म्मोपशमाय सम्यक्त्वग्रहणाय च अर्हद्गुरुप्रतादीन्यनुष्ठेयानि। तत्र अणुव्रतानि पञ्च। गुणव्रतानि त्रीणि। चत्वारि च शिक्षाव्रतानि। अथ प्रथममणुव्रतं स्थूलात् प्राणातिपातात् विरमणं। द्वितीयमणुव्रतं स्थूलमृषावादात् विरमणं। तृतीयमणुव्रतं स्थूलकात् अदत्तादानात् विरमणं। चतुर्थमणुव्रतं स्थूलात् मैथुनात् (परस्त्रीगमनादिरूपात्) विरमणं। पञ्चममणुव्रतं स्थूलात् परिग्रहात् विरमणं। अत्र प्रत्येकमतीचारनिरूपणं। अथ गुणव्रतशिक्षाव्रतादिष्वपि विभागकथनपूर्व्वकं प्रत्येकमतीचारकथनञ्च॥

---

**No. 3080**. अतीचारसूत्रटीका, वा सुखावबोधिका। Substance, country-made paper, 12 × 5 inches. Folia, 16. Lines, 12 on a page. Extent, 547 ślokas. Character, Nágara. Date, Sm. 1698. Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Correct. Sanskrit.

**Atíchára-sútra-ṭiká** ALIAS **Sukhávabodhiká**. A gloss on the work noticed under the next preceding No. Anonymous.

**Beginning**. श्रीमद्वीरजिनं नत्वा सर्व्वविघ्नोपशान्तकं।
श्राद्धावश्यकसूत्रस्य व्याख्यालेशादिधीयते॥

तत्रादौ ज्ञानाचारप्रतिक्रमणाय नमस्कारपूर्व्वकमाह नमो चउवीसा इति। नमश्चतुर्विंशतितीर्थङ्करेभ्यः। इत्यादि।

**End.** साधुसाध्वीश्रावकश्राविकारूपे मम चित्तं भवतु तद्गुणाद्ाविति गाथार्थः ॥
प्रायः शास्त्रान्तरं वीक्ष्य टीका च लिखिता मया ।
पूर्व्वव्याख्यानुसारेण काचिद्गुरूपदेशतः ॥
अर्थहीनञ्च यत्किञ्चिद्विरुद्धं वा जिनागमात् ।
मिथ्या मे दुष्कृतं भूयात् यत्कृतं मतिजाड्यतः ॥
श्रीमत्कल्याणकादेशात् कृता सुखावबोधिका ।
सिद्धियुगरसैकाब्दे नभस्ये पञ्चमीतिथौ ॥
वाच्यमाना चिरं भूयादेषा सश्रोतृपाठका ।
आतीर्थं वर्द्धमानस्य सर्व्वभावोपदेशिका ॥

**Colophon.** इति श्रीवङ्गाधिकश्रमणविरचितातीचारसूत्रटीका सुखावबोधिका समाप्ता इति शम् । संवत् १९९८।

विषयः । वङ्गाधिकश्रमणकृतातीचारसूत्रस्य व्याख्यानम् ।

---

**No. 3081.** व्यङ्गार्थदीपनी । Substance, country-made paper, 13 × 3 inches. Folia, 103. Lines, 10 on a page. Extent, 2,677 slokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, S'yámalála Duve. Appearance, fresh. Prose. Incorrect.

**Vyañgártha-dípaní.** A commentary on the A'ryasaptas'atí of Govardhana A'chárya. By Ananta S'armá.

**Beginning.** सर्व्वे साधुजनाः सदायतहृदा मत्सम्प्रदायादलं
मज्ज्ञानाय कणादगौतममतान्यालोच्य तत्त्वार्थदान् ।
वेदान्तान् परिशीलयन्ति + + + स्वानन्दकन्दाकरं
वन्दे तं जगदीश्वरं दयितया सानन्दमालिङ्गितम् ॥
यत्पादाम्बुजमब्जभूप्रभृतयो + + सदैवान्तरे
ध्यायन्ति स्नपयन्ति दुःखनिवहं लीलामनुष्याकृतिं ।
फुल्लेन्दीवरनैचमतसीपुष्पावभासं लस-
च्छ्रीरामं कलयामि चेतसि चिरं चैतन्यमात्रात्मकं ॥
— — — — — — — ।
सन्त्यज्य दोषं गुण एवदृष्टिर्विधीयतामित्यफलं वचो मे ।
विहाय नीरं सकलोऽपि हंसः पयः प्रगृह्णात्युपदेशतः किं ।

इह खलु विशिष्टशिष्टेष्टकर्त्तव्यताप्राप्तमङ्गलमनुष्ठितो व्याख्यातृश्रोतृमङ्गलाय उपनिबध्नाति पाणिग्रह इति । भूतिभूषितं भस्मनालङ्कृतं । भस्मनो भूषणत्वं मनोभवीयत्वेन——इत्यादि ।

End. अर्थागमे सरणिरत्र बहुप्रकारा संदृश्यते तदपि निर्म्मिदमत्तमेयं ।
मद्दर्शिता रसवती निखिलावदातसाहित्यशालिविबुधैः परिशीलनीया ॥
— — — — — —।
ग्रन्थोऽयं विदुषा सृष्टः पण्डितानन्दशर्म्मणा ।
खद्वयाश्वमद्राख्यसंख्यको व्यङ्ग्यदीपकः ॥

Colophon. इति श्रीमद्गोदावरीपरिसरालङ्कृतपुण्यस्थस्थितिविराजमाननीलकण्ठ-पण्डिततनूज + + पण्डितात्मजतिमाजीपण्डिताङ्गजानन्दपण्डितविरचिता व्यङ्ग्यार्थदीप-नीनामिकार्य्या सप्तशतीव्याख्या समाप्ता ।

विषयः । गोवर्द्धनाचार्य्यकृतार्य्या सप्तशतीनामककाव्यस्य व्याख्यानम् ।

---

**No. 3082.** जिनस्तवनम् । Substance, country-made paper, 12 × 4 inches. Folia, 4. Lines, 11 on a page. Extent, 100 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect. Hindi.

**Jinastavana.** Hymns in praise of Jina. Anonymous.

Beginning. प्रणमुं आदि जिणं इने कनकवरणजसकाय ।
राजधर्मनीति सवे दाखिव+सिवठाय ॥
ते प्रभुने पद्दिथया बङ्गमुनि अध्याभूप ।
सिद्धः चलसिद्धीवस्था पाम्या आतमरूप ॥ इत्यादि ।

End. बुधवारवासर शुद्धधारी गाइया गिरिगुणलही ।
गुरुवीरवाणी पसायपां मीमारगशुद्धलह्यो वही ॥
वरचंद्रभाखे मीए साखे बालधिष्टजिसही ।
शालविद्यावीसालशालाराजनयमां रही ॥

Colophon. इति जिनस्तवनं समाप्तं ।

विषयः । गिरणारादितीर्थवन्दनमुखेन जिनेन्द्रमाहात्म्यकथनम् ।

---

**No. 3083.** वैराग्यदीपकः । Substance, country-made paper, 13 × 5 inches. Folia, 10. Lines, 13 on a page. Extent, 244 ślokas. Character, Nágara. Date, Sm. 1914. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect.

**Vairágya-dípaka**. A Hindi poem in praise of asceticism and the miseries of domestic life. By Víravijaya.

**Beginning.** सयलसुर्ह करपासजी संखेश्वर सिरदार ।
संखेश्वर केशव जरा हरत करत उपगार ॥
सरसवचमरसवरसती सरसती भगवती जेह ।
सुभमतिदायक सुभगुरु प्रणमुं+करण एहं इत्यादि ।

**End.** धर्म्म उत्सवमें गास्यें जेह नरमारीसुणस्यें भणस्यें रे ।
कहै कवी वीरविजय निजचेतशुचिविमलाकमलावरस्यें रे ॥

**Colophon.** इति श्रीवैराग्यदीपकः समाप्तः । संवत् । १९१४ ।

विषयः । संसारस्य दुःखमयत्वादिकथनमुखेन वैराग्यस्य सकलसुखसाधनत्वनिरूपणम् ।

---

**No. 3084** वीरचिन्तामणिः, (धनुर्व्वेदसङ्ग्रहः ।) Substance, country-made paper, 12 × 4 inches. Folia, 12. Lines, 11 on a page. Extent, 280 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Rámachandra Paṇḍit Appearance, fresh. Verse. Incorrect.

**Vírachintámaṇi** ALIAS **Dhanurveda-saṅgraha**. A treatise on archery and warfare. By Śáṅgadhara. The colophon is so worded that the first name appears to be the name of a comprehensive work of which archery forms a part; but the introductory lines leave no room for doubt that the work is complete as it is—and the two names are aliases.

CONTENTS: Praise of archers. Style of holding the bow. Rules for presenting bows. Measure of bows. Bow-strings. Arrows. Arrow-heads. Tempering and sharpening arrow-heads. Iron shafts. Tubes or guns. Eight kinds of attitude. Five kinds of blows. Three kinds of aiming. Five kinds of advance. Four kinds of targets. Cessation from work. Rules for gymnastic exercises. Rules for piercing targets. Quick aiming. Shooting from great distances. Deep penetration. Rules of trajectory. Missing. Computation of direct velocity. Quadrangular motion. Breaking of arrows. Lasso. Cutting of wood with arrows. Shooting at globular objects. Shooting at objects in motion. Shooting at objects from their sound (without seeing them). Repelling of the missiles of opponents. Rules of warfare. Division of armies into brigades &c. Marshalling of troops.

Beginning. ईश्वरीयधनुर्वेदाद्ग्रामस्यापि सुभाषितात् ।
पद्यान्याहृत्य रचितो ग्रन्थः संक्षेपतो मया ॥
विना शार्ङ्गधरं नान्यो धनुर्वेदार्थतत्त्ववित् ।
देन स्वप्ने निशि प्राप्ता शिवातत्त्वविचारणा ॥
अतः सन्देहदोलायां रोपणीयं न मानसं ।
ग्रन्थेऽस्मिंश्चापचतुरैर्वीरचिन्तामणौ क्वचित् ॥
यस्याभ्यासप्रसादेन निष्पद्यन्ते धनुर्द्धराः ।
जेतारः परसैन्यानां तस्याभ्यासो विधीयते ॥ इत्यादि ।

End. च+तं वायवो यान्ति पृष्ठे भानुर्वयांसि च ।
अनुव्रजन्ते मेघाश्च यस्य तस्य रणे जयः ॥
अपूर्णमेव मर्त्तव्यं सम्पूर्णमेव जीवति ।
तस्माद्दैध्यं विधातव्यं युक्त्या परवाहिणी ॥

Colophon. इति श्रीशार्ङ्गधरविरचितवीरचिन्तामणौ धनुर्वेदसङ्ग्रहः समाप्तः ।

विषयः । धनुर्द्धरप्रशंसाकीर्त्तनं । धनुर्द्धारणविधिकथनं । धनुर्दानविधिकथनं । धनुःपरिमाणादिनिरूपणं । धनुर्गुणलक्षणादिकथनं । शरलक्षणादिकथनं । फलकलक्षणादिकथनं । पायनाविधिकथनं । नाराचलक्षणादिकथनं । नालिकलक्षणादिकथनं । अथ आलीढप्रत्यालीढाद्यष्टविधस्थाननिरूपणं । पताकावज्रमुष्ट्यादिभेदेन पञ्चविधमुष्टिलक्षणादिकथनं । त्रिविधसन्धाननिरूपणं । कैशिकादिपञ्चविधव्यायनिरूपणं । चतुर्व्विधलक्ष्यनिरूपणं । अनध्यायनिरूपणं । श्रमक्रियाविधिकथनं । लक्ष्यवेधविधिकथनं । शीघ्रसन्धानविधिकथनं । दूरपातनविधिकथनं । दृढवेधिताविधिकथनं । चीनमतित्वविधिकथनं । लक्ष्यस्खलनगतिनिरूपणं । शुद्धगतिविधिकथनं । दृढचतुष्कविधिकथनं । बाणभङ्गविधिकथनं । वराटिकावर्णविधिकथनं । काष्ठच्छेदनविधिकथनं । गोलकवेधनविधिकथनं । धावल्लक्ष्यवेधविधिकथनं । शब्दवेधित्वविधिकथनं । शस्त्रादिवारणविधिकथनं । सङ्ग्रामविधिकथनं । अक्षौहिण्यादिलक्षणकथनं । व्यूहविधिकथनञ्च ॥

---

**No. 3085.** उपदेशमालावृत्तिः । Substance, country-made paper, 16 × 4 inches. Folia, 295. Lines, 14 on a page. Extent, 13,139 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose. Generally correct. Sanskrit.

**Upadeśa-málá-vritti.** A commentary on *Upadeśa-málá*, a Mágadhi treatise on Jainism. By Hemchandra Súri, Cf. No. 2687, Vol. VIII, p. 142.

ॐ नमो जिनाय ।

Beginning. येन प्रबोधपरिनिर्म्मितवागवरत्रा
च्छिप्रोद्धृतानि भुवनानि भवान्धकूपात् ।
निःशेषनाकिविभुवन्दितपादपद्मो
भूयात्समाशुभभिदे स युगादिदेवः ॥
श्रेयार्णवं सुरवरैरिव यैः समन्तात्
सद्बोधमन्दरम+प्रविमथ्य लब्धः ।
जीवादितत्त्ववररत्नचयो भवन्तु
ते वः श्रिये विजयिनो जिनवीरपादाः ॥

— — — — — — — ।

अन्तरङ्गार्थमर्भस्य यत् किञ्चिदिह वक्ष्यते ।
तत्रोपमितिग्रन्थोक्ता द्रष्टा सर्व्वापि भावना ॥

इह शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्त्तमाना विघ्नविनायकोपशान्तये शिष्टसमयपरिपालना-र्थञ्चाभीष्टदेवतानमस्कारपूर्व्वकं प्रवर्त्तन्ते । अतोऽयमप्युपदेशमालाप्रकरणकर्त्ता तन्मार्गमनुवर्त्तमान आदावेव अभीष्टदेवतानमस्कारमाह । सिद्धेति ।

End. अर्थश्रुतवक्षमानार्थं शिष्यप्रशिष्यपरम्परया
प्रकरणस्य स्थैर्य्या+च अपश्चिमं मङ्गलमाह ॥
न जावेति । सुगमा ॥

Colophon. इति श्रीहेमचन्द्रसूरिविरचितोपदेशमालावृत्तिः समाप्ता ॥

विषयः । उपदेशमालाभिधानमागधीमयजैनप्रकरणग्रन्थस्य व्याख्यानम् ॥

---

**No 3086.** ऋषभपञ्चाशिकावृत्तिः । Substance, country-made paper, 12 × 4 inches. Folia, 5. Lines, 17 on a page. Extent, 324 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose. Correct. Sanskrit.

**Rishabha-panchásiká-vritti.** A gloss on a hymn in fifty stanzas in praise of Ṛishabha. By Dhanapála Paṇḍita.

Beginning. नत्वा जिनेन्द्रवीरं सर्व्वनरामर्त्यपूजितं शिरसा ।
सद्भूतार्थप्रभवं साम्प्रतं तीर्थस्य कर्त्तारं ॥
भगवति गुणानुरागः सत्यः प्रेरयति मां यतोऽत्यन्तं ।
तेनारभत सुजडोऽपि विवरणं कर्त्तुमिच्छामि ॥

क्लिष्टमपि यथात्यर्थं वचनं बालस्य शोभते पितरि ।
एतदपि यथा प्राप्स्यति शोभां शिष्टप्रभावेण ॥
— — — — — — —।

इह यद्यपि भगवतो गुणस्तुतिः सर्व्वापि नमस्कारस्वभावा । तथापि विशेषतः शिष्टसमयस्मरणार्थं विघ्नविनायकोपशमार्थञ्च तावत्तस्यैवादौ नमस्कारमाह । जयजंतुकप्पेति । नमस्तुभ्यमस्त्विति क्रियाध्याहारः । यत्रान्या क्रिया नास्ति तत्रास्ति भवति परः प्रयुज्यते ॥ इत्यादि ।

End. यच्च मया विपरीतं ग्रथितं मोहात् समयप्रभ्रष्टं ।
तच्छोधयितुं शिष्टा मयि मध्यस्थाः कृतकृपाश्च ॥

Colophon. इति धनपालपण्डितकृतश्रीऋषभपञ्चाशिकावृत्तिः समाप्ता ।

विषयः । पञ्चाशत्संख्यकश्लोकमयस्य ऋषभजिनेन्द्रस्तोत्रस्य व्याख्यानम् ।

---

No. 3087. पद्मावतीस्तोत्रम् । Substance, country-made paper, 12 × 4 inches. Folia, 5. Lines, 9 on a page. Extent, 72 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Correct.

**Padmávatí-stotra**. Hymn in praise of Padmávatí or the personified attributes of Jina Párśvanátha as represented by his mystic mantra. Anonymous.

Beginning. श्रीमद्गीर्व्वाणचक्रस्फुटमकुटतटीदिव्यमाणिक्यमाला-
ज्योतिर्ज्वालाकरालास्फुरितमकुरिकाघृष्टपादारविन्दे ।
व्याघ्रोल्कासहस्रज्वलदनलशिखालोलपाशाङ्कुशाढ्ये
आं क्रों ह्रीं मन्त्ररूपे क्षपितकलिमले रक्ष मां देवि पद्मे ॥
भित्वा पातालमूलं चलचलचलिते व्याललीलाकराले
विद्युद्दण्डप्रचण्डैः प्रहरणसहितैः सद्भुजैस्तर्ज्जयन्ती ।
दैत्येन्द्रान् क्रूरदंष्ट्राकटकटघटने स्पष्टभीमाट्टहासे.
मायाजीमूतमालाकुहरितगगने रक्ष मां देवि पद्मे ॥
कूजत्कोदण्डकाण्डोड्डमरविधुरितं क्रूरघोरोपसर्गं
दिव्यं + + तपात्रं प्रगुणमणिरणत्किङ्किणीक्वाणरम्यं ।
भास्वद्वैदूर्य्यदण्डं मदनविजयिनो बिभ्रती पार्श्वभर्त्तुः
सा देवी पद्महस्ता विघटयतु महाडामरं मामकीनं ॥ इत्यादि ।

End. मातः पद्मिनि पद्मरागरुचिरे पद्मप्रसूनानने
पद्मे पद्मवनस्थिते परिलसत्पद्माक्षि पद्मानने ।
पद्मामोदिनि पद्मरागरुचिरे पद्मप्रसूनार्चिते
पद्मोल्लासिनि पद्मनाभिनिलये पद्मालये पाहि मां ॥
आह्वानं नैव जानामि नैव जानामि स्थापनां ।
विसर्ज्जनं न जानामि चमख परमेश्वरि ॥

Colophon. इति श्रीपद्मावतीस्तोत्रं समाप्तं ॥

विषयः । पार्श्वनाथजिनेन्द्रस्य विभूतिरूपायाः पद्मावत्याः रूपादिवर्णनमुखेन महामन्त्रकीर्त्तनम् ।

---

No. 3088. धर्म्मरत्नम् । Substance, country-made paper, 14 × 4 inches. Folia, 84. Lines, 10 on a page. Extent, 1,192 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Generally correct. Arddha-Mágadhí.

Dharmaratna. On Jain duties. By S'ánti Súri. A Mágadhi work.

Beginning. नमिऊण सयल गुणरयण कुलहरं विमलकेवलवीरं ।
धम्मरयण त्थियाणं जणाणं विवरेमि उवएसं ॥
भवजलहिं मि अपारे दुलहं मणुयत्तणं पि जंतूणं ।
तत्थवि अणत्थहरणं दुलहं सद्धं मवररयणं ॥ इत्यादि ।

End. इय धम्मरयण पगरण मणुदियहं जेगणं मि भावंति ।
ते गलिय कलिलपङ्का निव्वाणसुहाइं पावंति ॥

Colophon. इति श्रीधर्म्मरत्नप्रकरणं परिपूर्णम् ॥

विषयः । जैनधर्म्मरूपरत्नमेव सर्व्वथा ग्राह्यमितिनिरूपणमुखेन गुणविभवरहितानां पञ्चेन्द्रियजीवानां तावद्धर्म्मप्राप्तिर्नास्तीतिकथनं । अत्र पद्यपालस्य दृष्टान्तकीर्त्तनं । अथ एकविंशतिविधैः गुणैः सम्पन्नः खलु सद्धर्म्मप्राप्तियोग्य इति निर्णयः । ते च गुणाः यथा,—अनुत्तानमतित्वं, स्वभावतोऽपापकर्म्मत्वं, सदाचारचारित्वं, अक्रूरत्वं, धर्म्मभीरुत्वं अशाठ्यं, प्रार्थनाभङ्गभीरुत्वं, अकार्य्यवर्ज्जकत्वं, सत्वानुकम्पा, रागद्वेषराहित्येन सौम्यदृष्टित्वं, गुणपक्षपातिता, धर्म्मकथानुरागिता, सुशीलानुकूलपरिवारयुक्तत्वं, परिणामदर्शिता, अपक्षपातित्वेन गुणदोषविशेषवादिता, परिणतमतिपुरुषसेवनं, विनयः, कृतज्ञता, परहितार्थकारिता, धर्म्मानुष्ठानतत्परा-

रज्जुल्यश्चेति। अथ अनुष्ठानमतित्वादिगुणस्थानेषु प्रत्येकं सप्रपञ्चमुपाख्यानकीर्त्तनं। अथ गुण-तारतम्येन उत्तममध्यमजघन्यभेदादधिकारिणां चातुर्व्विध्यकथनं। अथ श्रावकधर्म्मः, यतिधर्म्म-श्चेति धर्म्मस्य द्विविधत्वकथनं। तत्राद्यस्य विरतश्रावकधर्म्मः, अविरतश्रावकधर्म्मश्चेति द्वैविध्य-निरूपणं। अथ नामश्रावकः, स्थापनाश्रावकः, द्रव्यश्रावकः, भावश्रावकश्चेति श्रावकचातुर्व्वि-ध्यकथनं। अथ भावश्रावकस्य षट् चिह्नानि। यथा,—कृतव्रतकर्म्मत्वं, शीलता, गुणवत्ता, ऋजु-व्यवहारिता, गुरुसेवनं, जिनमततत्त्ववित्त्वञ्चेति। अथ आकर्णन-ज्ञान-ग्रहण-प्रतिसेवनभेदेन कृतव्रतकर्म्मणश्चतुर्विधत्वकथनं। क्रमेणैषामवान्तरभेदनिरूपणमुखेन षड्भङ्गादिस्वरूपादिकथनं। तत्र तत्र प्रत्येकं सविस्तरमुपाख्यानकीर्त्तनञ्च। अथेदमाकूतं, सम्यक्सिद्धान्तकथनपरिभावन-पराणां सदुक्तानुष्ठानकरणप्रवृत्तानां प्रतिक्षणप्रवर्द्धमानोत्तरोत्तरशुभाध्यवसायनीरपूरप्रक्षालि-तसकलघनघातिकर्म्मकालुष्याणामविकलसकलविमलकेवलावलोकितलोकालोकानां भव्यसत्त्वा-नां सम्भाव्यत एव चेतःकालसंहननादिसमग्रोदग्रसामग्रीवशात् पारम्पर्य्येण निर्व्वाणसुखप्राप्ति-रिति।

---

No. 3089. धर्म्मरत्नवृत्तिः, वा सुखबोधा। Substance, country-made paper, 14 × 4 inches. Folia, 253. Lines, 14 on a page. Extent, 10,634 ślokas. Character, Nágara. Date, Sm. 1876. Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose. Correct. Sanskrit and Mágadhí.

**Dharmaratna-vṛitti** ALIAS **Sukhabodhá**. A commentary on the work noticed under the next preceding No. By Devendra Súri.

**Beginning.** सज्ज्ञानलोचनविलोकितसर्व्वभावं
निःसीमभीमभवकाननदावदावं।
विश्वार्च्चितप्रवरभासुरधर्म्मरत्न-
रत्नाकरं जिनवरं प्रयतः प्रणौमि।
श्रीधर्म्मरत्नशास्त्रं वक्ष्ये स्वल्पशब्दसन्दर्भं।
स्वपरोपकारहेतोर्विवृणोमि यथाश्रुतं किञ्चित्॥

इह हि हेयोपादेयादिपदार्थसार्थपरिज्ञानप्रवीणस्य जन्मजरामरणरोगशोकादिदौर्गत्य-निपीडितस्य भव्यसत्त्वस्य स्वर्गापवर्गादिसुखसम्पादनावन्ध्यशक्तिकं सद्धर्म्मरत्नमुपादानमर्हितं। तदुपादानोपदेशदातुकामः सूत्रकारः शिष्टमार्गानुगामितया पूर्व्वं तावदिष्टदेवतादिनम-स्कारादिप्रतिपादनार्थमिमां गाथामाह। नमिऊण इति।

End. येनकालसंख्याजनतादिसमतोद्ययामयीवशात् पारम्पर्य्येण निर्व्वाणसुख-प्राप्तिरिति ॥

Colophon. इति श्रीधर्म्मरत्नहत्तिः समाप्ता ।

विश्वोरिव यस्य विमोः पदत्रयी व्याप्ता जगत्त्रितयं ।
सद्धर्म्मरत्नजलधिः स श्रीवीरो जिनो जयतात् ॥
कुन्दोज्ज्वलकीर्त्तिभारैः सुरभीकृतसकलविष्टपाभोगः ।
शतमखशतविनतपदः श्रीगौतमगणधरः पातु ॥
— — — — — — — ।
स्वान्ययोरुपकारार्थं श्रीमद्देवेन्द्रसूरिणा ।
धर्म्मरत्नस्य टीकेयं सुखबोधा विनिर्म्ममे ॥
कल्याणमस्तु । संवत् १८७९ ।

विषयः । जैनधर्म्मरत्नसूत्रस्य व्याख्यानम् ।

---

No. 3090. नर्म्मदासुन्दरीकथा । Substance, country-made paper, 13 × 4 inches. Folia, 13. Lines, 9 on a page. Extent, 338 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect. Sanskrit.

**Narmadásundarí-kathá.** The story of Narmadásundarí, a lady of high religious merit who was greatly devoted to the practice of Jain duties. By Bhadraváhu.

Beginning. अत्रैवास्ति सुविस्तीर्णे जम्बूद्वीपस्य भारते ।
वर्द्धमानं गुणैः पौरैर्वर्द्धमानाभिधं पुरं ॥
वसंघो सौर्य्यवंशस्य कुलाख्यः क्षितिपालकः ।
चित्तउभरतस्वामी सम्पुति + च भूपतिः ॥
तस्मिन् हृषभसेनाख्यः सार्थवाहो महर्द्धिकः ।
जिनधर्म्मरतो नित्यमभूद्वीरमतीप्रियः ॥
सहदेववीरदासौ सुतौ तस्य बभूवतुः ।
ऋषिदत्ता च दुहिता सर्व्वस्त्रीगुणसेवधिः ॥ इत्यादि ।

End. इति चरित्रमिदं + + मंद्रवाहुप्रणीत-
विरचितमिह लोकश्रीचपार्श्वकपेयं ।

परिचितमसमेतमनंदासुन्दरीयं
भवतु शिवनिवासप्रापकं भक्तिभाजां ॥

Colophon. इति श्रीनमंदासुन्दरीकथा समाप्ता ।

विषयः । श्रीसमाचाख्याकोशैनप्रसङ्गेन जैनधर्मानुरागिण्या नमंदासुन्दर्थ्याः चरिताद्विवर्णनम् ।

---

No. 3091. धन्यकथा । Substance, country-made paper, 13 × 4 inches. Folia, 12. Lines, 9 on a page. Extent, 300 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect.

**Dhanyakathá.** The story of Dhanya in course of which the merits of beneficence and Jain duties are described at length. By Dayávardhana, disciple of Jayachandra Surindra.

Beginning. श्रीवीरजिनमानम्य गणेशं गौतमं तथा ।
नत्वा वाग्देवतां चित्ते दानधर्मः प्रचक्ष्यते ॥
पात्रे ददाति यो वित्तं निजशक्त्या सुभक्तितः ।
सौख्यानां भाजनं स स्याद्यथा धन्योऽभवत् पुरा ॥ इत्यादि ।

End. श्रीजयचन्द्रसुरीन्द्रशिष्यलेशेन धीमता ।
दयावर्द्धनसंज्ञेन चक्रे धन्ये निदर्शनम् ॥

Colophon. इति श्रीधन्यकथा परिपूर्णा ॥

विषयः । जिनोक्तविधिना दानधर्मानुष्ठानमाहात्म्यकथनमुखेन धन्यस्य उपाख्यानकथनम् ।

---

No. 3092. दशवैकालिकसिद्धान्तलघुवृत्तिः । Substance, country-made paper, 16 × 5 inches. Folia, 36. Lines, 19 on a page. Extent, 2,834 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect. Sanskrit.

**Daśavaikálika-siddhánta-laghu-vṛitit.** A concise gloss on the *Dasavaikálika-siddhánta.* A Jain Sútra. Anonymous.

**Beginning.** जयति विजितान्यतेजाः सुरासुराधीशसेवितः श्रीमान्।
विमलस्त्रासविरहितस्त्रिलोकचिन्तामणिर्वीरः॥

इहार्थतस्तत्प्रणीतस्य सूत्रतो गणधरोपनिबद्धपूर्व्वगतोद्धृतस्य शारीरमानसानेकदुःखसन्तापविनाशहेतोर्दशवैकालिकाभिधानशास्त्रस्यातिसूक्ष्मगाथार्थगोचरस्य व्याख्या प्रस्तूयते। तत्र प्रस्तुतार्थप्रतिपादनार्थमेव नमस्कारद्वारेण अशेषविघ्नविनायकोपशान्तये भगवान् शय्यम्भवाचार्य्यो भावमङ्गलगाथामाह। धर्म्मोमङ्गलमित्यादि। मङ्गते हितमनेनेति मङ्गलं। उत्कृष्टं प्रधानं। इत्यादि।

**End.** जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुते।
संसारसागरे रौद्रे भ्रमन्ति + विडम्बिताः॥
ये पुनर्ज्ञानसम्यक्त्वचारित्रदृष्टिसम्पदः।
भवाम्बुधिं समुत्तीर्य्य ते यान्ति पदमव्ययम्॥

**Colophon.** इति श्रीदशवैकालिकसिद्धान्तसूत्रवृत्तिः समाप्ता।

विषयः। दशवैकालिकाभिधेयजैनसूत्रस्य व्याख्यानम्।

---

**No. 3093.** चन्द्रप्रज्ञप्तिबालाबोधः। Substance, country-made paper, 14 × 6 inches. Folia, 159. Lines, 20 on a page. Extent, 9,708 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Mágadhí.

**Chandra-prajnapti-bálábodha.** A gloss on the *Chandra-prajnapti-sútra*. By Malaya Giri. No. 2649, Vol. VIII, p. 113).

**Beginning.** श्रीश्रीवीतरागाय नमः।

सिद्धं अविघ्न पणइ। इष्टप्रसिद्धनइ अर्थइ धरिनइं विधइं। इष्टदेवप्रतइं स्तवनाकइ छइ। इहां स्तवना दोय प्रकारनी एकतो गुणनी स्तवनारूप। बीजी वाञ्छितना नमस्कारूप ते करेंते कहइ छइ॥ इत्यादि।

**End.** उत्थानउ॰ उच्चारक॰ कर्म्मय॰ बलवीर्य्यतिणे करीधा॰ धारिवो एतलइं गुणकरीसहित तेह में पिं। तिवइ ज्ञानदेवोपं नहीनं अवनीतने देवउ॥

**Colophon.** इति श्रीमलयगिरिविरचितचन्द्रप्रज्ञप्तिबालाबोधः समाप्त।

विषयः। चन्द्रप्रज्ञप्त्यभिधानजैनज्योतिःशास्त्रस्य व्याख्यानम्।

---

**No. 3094.** दशावचूर्णि। Substance, country-made paper, 16 × 6 inches. Folia, 44. Lines, 14 on a page. Extent, 2,358 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, old. Prose. Incorrect. Sanskrit and Mágadhí.

**Daśávachurṇi.** An epitome of the contents of the Daśás'ruta-skandha Sútra. Anonymous.

**Beginning** ॐ नमः सर्व्वज्ञाय। नमो अरिहंताणं। नमो सिद्धाणं। आयरियाणं। नमो उवज्झायाणं। नमो लोगसव्वसाहूणं। सुदं मे आउसं तेणं भगवया। संबंधो जा मोचणि— छाणे वट्टदि। इत्यादि।

**End.** एवं विधा तस्स भासइ भवति। तमंकायणा इति जात्यन्धो भवति। ++ + + + जायणया विजावकवणणयो सव्वेसिं पिणयाणं गाथा॥

**Colophon.** इति दशावचूर्णि समाप्ता।

विषयः। संक्षेपेण दशाश्रुतस्कन्धसूत्रस्य तात्पर्य्यकथनम्।

---

**No 3095.** अग्निहोत्रमन्त्रार्थचन्द्रिका। Substance, country-made paper, 14 × 4½ inches. Folia, 9. Lines, 8 on a page. Extent, 196 ślokasa. Character, Nágara. Date, ? Place of deposit, A'jimganj, Rámachandra Paṇḍit. Appearance, old. Prose. Correct.

**Agnihotra-mantrártha-chandriká.** A gloss on the mantras used in the performance of the Agnihotra rite according to the School of A'svaláyana. By Vaidyanátha Bhaṭṭa Páyaguṇḍa.

**Beginning.** आश्वलायननित्याग्निहोत्रहोमस्थितान् मनून्।
कलये वैद्यनाथोऽहं वासुदेवप्रतुष्टये॥

कृतनित्यक्रियो यदा प्राणानायम्य नित्याग्निहोत्रेऽध्वर्य्युवरणं कृत्वा नमाह। उद्धराहव-नीयमिति। ततोऽध्वर्य्युर्विहाराद्दक्षिणरावाक्सौर्थेन प्रविश्य गार्हपत्यं प्रज्वाल्य वैश्यकुलादानीतं साम्भवर्णिकस्य धनिकस्य गृहाद्वा सदा भार्य्यमाणं वा सदा होमार्थं मथितं वेत्येवंप्रकारेण निष्पन्नं तं दक्षिणाग्निं प्रणीय गार्हपत्यात् ज्वलन्तं तं पात्रान्तरे पृथक् कुर्य्यात्——इत्यादि।

**End.** हे यज्ञ ते तव यज्ञानमज्ञानात् प्रमादाद्वा कृतं यच्च ते तवातिरिक्तं कृतं तत्सर्व्वं त्वदुप समीपे एव समर्पयामि तस्मै तुभ्यं नमश्च करोमि॥

**Colophon.** इति पायगुण्डोपाख्यश्रीवैद्यनाथभट्टविरचिताग्निहोत्रमन्त्रार्थचन्द्रिका समाप्ता॥

विषयः। आश्वलायनशाखीयाग्निहोत्रमन्त्राणां व्याख्यानम्।

---

**No. 3096.** लघुन्यासः। Substance, country-made paper, 13 × 5½ inches. Folia, 262. Lines, 12 on a page. Extent, 12,136 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Sinh, Bahádur; another copy, Government of India. Appearance, fresh. Prose. Generally correct. Sanskrit.

**Laghu-nyása.** A concise gloss on Hemachandra's Svopajnas'abdánus'ásana grammar. Anonymous.

**Beginning.** प्रणम्य केवलालोकावलोकितजगत्त्रयं।
जिनेशं श्रीसिद्धहेमचन्द्रशब्दानुशासने॥
शब्दविद्याविदां वन्द्योदयचन्द्रोपदेशतः।
न्यासतः कतिचिद्दुर्गपदव्याख्याभिधीयते॥

इह निस्तुषशेमुषीसमुन्मेषनिर्म्मितानेकविद्वज्जनमनश्चमत्कारकारिशास्त्रनिकरविस्मापितविशदप्रज्ञर्द्धि + + + कानेकसूरिः निष्प्रतिमप्रतिभासम्भारापहस्तित(?)त्रिदशसूरिः, श्रीकुमारपालक्ष्मापालप्रतिबोधविधाननिखिलक्षोणीमण्डलाभयदानप्रभृतिसंख्यातिक्रान्तप्रभावनानिर्म्माणस्मृतिगोचर — — — — — — सुगृहीतनामधेयः श्रीहेमचन्द्रसूरिर्निविड़जड़िमग्रस्तं समस्तमपि विश्वमवलोक्य — — — — — — — शब्दानुशासनं कर्त्तुकामः प्रथमं मङ्गलार्थमभिधेयादिप्रतिपादनार्थं स्वेष्टदेवतानमस्कारमाह प्रणम्येति। ननु प्रयोगोऽयं भावे कर्म्मणि वा उच्यते। भावे एव। तर्हि कथं परमात्मानमिति कर्म्म उच्यते। इत्यादि।

**End.** कृतपूर्व्वीत्यत्र सर्व्वशब्दस्य कृतशब्देन कृतशब्दस्य कटशब्देन सम्बन्धो न धर्म्मपूर्व्वशब्दाभ्यामिति किं द्वि वचनान्न भवतीति गमकत्वात्। नञ् इत्यनेनासमर्थोऽपि वाङ्लकाद्भवतीत्यर्थः॥

**Colophon.** इत्याचार्य्यश्रीहेमचन्द्रविरचितसिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ लघुन्यासे सप्तमाध्यायस्य चतुर्थः पादः। सप्तमाध्यायः समाप्तः।

विषयः। हेमचन्द्रकृतस्वोपज्ञशब्दानुशासननामकव्याकरणस्य व्याख्यानम्।

---

**No. 3097.** जातिविवेकः। Substance, country-made paper, 14 × 4½ inches. Folia, 12. Lines, 7 on a page. Extent, 191 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Rámachandra Paṇḍit. Appearance, fresh. Prose and verse. Incorrect.

**Játiviveka.** A dissertation on caste. By Vis'vanátha.

नारद उवाच ।

Beginning. भगवन् सर्व्वधर्म्मज्ञ गौरी——मनोहर ।
एकं त्वां परिपृच्छामि सन्देहं मनसि स्थितं ॥
युगचययता धर्म्मा विज्ञाता कृपया तव ।
वर्णाश्रमास्त्वया प्रोक्तास्तेषां धर्म्माश्च सर्व्वशः ॥
चातुर्व्वर्ण्यं चरेद्भैक्ष्यमित्याह भगवान् हरिः ।
कैवर्त्तककुले जातो वाल्मीकिर्ब्राह्मणोऽभवत् ॥
राधया पोषितः कर्णः सर्व्वक्षत्रियसत्तमः ॥
दासीजठरसम्भूतो विदुरो विप्रसत्तमः । इत्यादि ।

End. तेभ्यो द्रव्यं समादाय वह्नियज्ञादिकं द्विजः ।
कुर्व्वन् दोषं नवाप्नोति फलं तेषाञ्च विन्दति ॥ इति ।
श्रीविश्वनाथकविना कविनायकेन
नानानिबन्धचयमीक्ष्य (?) विनिर्म्मितेयं ।
सम्यक्विनाय भवि जातिविवेक एष
विद्वांस एव हृदयेषु विचारयन्तु ॥

Colophon. इति जातिविवेकः परिपूर्णः ॥

विषयः । वाल्मीकादीनां कैवर्त्तादिजातिलक्षणपूर्व्वकं सौराष्ट्रमागधनार्म्मदमालव-सारस्वतकान्यकुब्जादीनां शौचाचारकथनमुखेन ब्राह्मणानां प्रभेदनिरूपणम् ।

---

**No. 3098.** साधुविधिप्रकाशः । Substance, country-made paper, 12 × 5 inches. Folia, 21. Lines, 13 on a page. Extent, 640 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose and verse. Incorrect. Sanskrit and Mágadhí.

**Sádhu-vidhi-prakáśa** ALIAS **S'rívidhi.** Duties of devout Jains. By Kshamákalyána.

Beginning. प्रणम्य तीर्थेशगणेशमुख्यान्
निरीक्ष्य सम्यग्विधिशास्त्रवृन्दं ।
श्रुत्वा + किञ्चित् स्वपरोपकृत्यै
वितन्यते साधुविधिप्रकाशः ॥

तत्र किल साधुविधीनां बहुत्वेऽपि इह तु विधिप्रपासामचारीशतका द्यनुसारेण क्रमतः

सुविहितसाधुसमाचरणीयाहोरात्रकृत्यानि लिख्यन्ते। निशायाश्चरमप्रहरे निद्रां परित्यज्य सप्ताष्टवारान् परमेष्ठिमन्त्रं भणित्वा चतुर्विंशतिजिनादिनामानि स्मृत्वा आवश्यकाद्यचितप्रदेशे गत्वा कायिकां कृत्वा व्युत्सृज्य इत्यादि।

End. विधिप्राय इह प्रोक्तः प्राच्यपन्थानुसारतः।
दृष्ट्वा श्रुत्वा + + + धुनिकैः क्रियमाणकं॥

संवत्सिद्धिगुणाष्टचन्द्र (१८३८) विमिते श्रीजेसलाद्रौ पुरे पूज्यश्रीजिनचन्द्रसूरिगणभृच्छिष्येशतो वाचकाः श्रीमत्प्रोऽमृतधर्मनामगणयस्तच्छिष्यलेशः क्षमाकल्याणः कृतवान् मुदे सुमनसां सम्यग्विधेः सङ्ग्रहं।

सम्प्राप्तोऽयं सम्यक्प्रेरणया चापि चावसाहाय्यात्।
लावण्यकमलवाचकवाचं मम सिद्धिरङ्गप्रभृतीनां।

Colophon. इति श्रीविधिप्रकाशः सम्पूर्णः॥

विषयः। जैनसाधूनां दैनिककृत्यविधाननिरूपणं। तत्र शय्याया उत्थानविधिकथनं। प्रतिक्रमणविधिकथनं। शिष्यस्य गुरूपसत्तिविधिकथनं। तत्र प्राभातिकप्रतिक्रमणादिकालविवेचनं। शिष्याणां मृदुमन्दस्वरेण पञ्चनमस्कारपाठविधिकथनं। शक्रस्तवादिपाठकाले मुखवस्त्रिकाधारणविधिकथनं। अथ चारित्रदर्शनज्ञानशुद्धिनिमित्तं एकचतुर्विंशतिस्तवादिचिन्तनादिरूपकायोत्सर्गविधिकथनं। चन्दनधारणविधिकथनं। अथ आर्त्तरौद्रादिध्यानविधिकथनं। जिनबिम्बवन्दनविधिकथनं। श्रुतस्तव-सिद्धस्तवादिपाठविधिकथनं। प्रसङ्गात् रात्रिप्रतिक्रमणविधिकथनं। अथ प्रतिलेखनाविधिकथनं। अथ पादोनप्रहरदिवसापगमे दृष्टिप्रतिलेखनादिविधिकथनं। अथ भोजनकाले तत्कृत्यविधिकथनं। भिक्षाविधिकथनं। अथ प्रत्याख्यानपारणाविधिकथनं। अथ अष्टमीचतुर्दश्याद्युपवासदिने कृत्यविशेषनिरूपणं। अथ पश्चिमप्रहरकृत्यविधिनिरूपणं। अथ चतुर्विंशतिस्थण्डिलस्थापनाविधिकथनं। अथ अतीचारशोधनादिविधिकथनं। अथ शयनविधिकथनं। अथ चातुर्मासिकादिनपश्चिमनविधिकथनं। प्रमार्जनाविधिकथनं। प्रबोधकालविधिकथनञ्च।

---

**No. 3099.** शास्त्रसिद्धान्तसङ्ग्रहसारः। Substance, country-made paper, 16 × 4 inches. Folia, 38. Lines, 9 on a page. Extent, 1,154 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Paṇḍit S'yámalála Duve. Appearance, fresh. Prose and verse. Correct.

**S'ástra-siddhánta-sańgrahasára.** A philosophical dissertation on the Vedánta doctrine. By S'ivenaka. (Cf. No. 60, I p. 35; No. 1496, IV, p. 91; No. 1573, IV, p. 147; No. 1597, IV, p. 16, 5; No. V, 1835, p. 145.

Beginning. दुःखिनो यं समाश्रित्य सुखमीयुः सुदुर्लभं।
विभीषणाद्यो रामं तं वन्दे सद्गुरुं पुनः॥

अथ शास्त्रसिद्धान्तलेशसङ्ग्रहनिबन्धस्थमतानां सुखं स्वबोधाय तत्पाठः क्वाप्यर्थाश्च सङ्गृह्यते (?) मया। यया यया भवेत् पुंसां व्युत्पत्तिः प्रत्यगात्मनि। सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता। अकल्पितवस्तुप्रतिपत्त्युपायतया कल्प्यमानेषु पदार्थेषु विरोधः— इत्यादि।

End. श्रीरामं मनसा ध्यात्वा श्रीगुरुं संप्रणम्य च।
पाठं सिद्धान्तलेशस्य समरट+च्छिवेनकः॥
समाधिगणनाद्याश्च यन्मया साहसं कृतं।
क्षन्तव्यं तद्बुधैः सर्व्वैः क्षमाशीला हि ते यतः॥
तत् संख्यानं स्वबोधार्थं रामतुष्ट्यर्थमेव च।
जानन्ति हि स्वतस्तज्ज्ञा न तदर्थं मया कृतं॥
यदि ते बालबोधार्थं पश्येयुः सङ्ग्रहं त्विमं।
तदा तैरपि शोध्योऽयं नोपेक्ष्यो ह्युपकारिभिः॥

Colophon इति श्रीशास्त्रसिद्धान्तलेशसारे फलाभिधश्चतुर्थः परिच्छेदः। समाप्तश्चायं ग्रन्थः।

विषयः। विधिस्वरूपादिविवेचनं। तत्र नियमपरिसंख्यादिभेदनिरूपणञ्च। कारणत्वस्वरूपकीर्त्तनमुखेन ब्रह्मणो जगज्जन्मस्थितिलयकारणत्वकथनं। विवर्त्तवादपरिणामवादयोस्तारतम्यकथनं। अथ जीवेश्वरयोः स्वरूपनिरूपणं। जीवैकत्वनानात्ववादकथनं। मायाविद्ययोः स्वरूपादिकथनं। उपादानत्वस्वरूपनिरूपणं। कर्त्तृत्वस्वरूपनिरूपणं। ईश्वरसर्व्वज्ञत्ववादनिरूपणं। जीवस्य सर्व्वज्ञत्वाभाववादनिरूपणं। सम्बन्धवादकथनं। अभिव्यक्तिवादकथनं। आवरणाभिभववादकथनं। अज्ञानानादित्ववादकथनं। परोक्षज्ञानस्य अज्ञाननिवर्त्तकत्वानिवर्त्तकत्ववादकथनं। साक्षिस्वरूपनिर्णयवादकथनं। अविद्यादीनामावृतानावृतसाक्षिचैतन्यप्रकाश्यत्वनिरूपणं। अहङ्कारादिस्मृतिसिद्ध्यर्थं संस्काराधानकथनं। अध्यासकारणनिरूपणं। अपरोक्षानुभूत्यर्थं वृत्तिनिर्गमवादकथनं अद्वितीये ब्रह्मणि वेदान्तानां समन्वयकथनं। श्रुतिप्रत्यक्षयोः प्राबल्यदौर्बल्यवादकथनं। तयोरुपजीव्योपजीवकभावविरोधपरिहारवादकथनं। प्रतिबिम्बसत्यत्वमिथ्यात्ववादकथनं। स्वप्नाधिष्ठानवादकथनं। दृष्टिकल्पकवादकथनं। मिथ्याभूतस्यापि व्यवहारिकसत्यार्थक्रियाकारित्ववादकथनं। औपाधिकजीवभेदेन सुखदुःखासाङ्कर्य्यव्यवस्थावादकथनं। उपाधिस्वरूपवादकथनं। जीवादिवास्तवभेदनिरासवादकथनं। विद्ययैव ब्रह्मप्राप्तिरितिकथनं। कर्म्मोपयोगवादकथनं। विद्यार्थकर्म्माधिकारवादकथनं। सन्न्यासस्य विद्योपयोगवादकथनं। श्रवणाधिकारवादकथनं। ज्ञानकरणवादकथनं। ज्ञानार्थयोरपोक्ष-

त्ववादकथनं। अज्ञाननिवर्त्तकवादकथनं। अज्ञाननिवृत्तिवादकथनं। अविद्यालेशवादकथनं। अविद्यानिवृत्तिस्वरूपवादकथनं। मुख्यामुख्यपुरुषार्थवादकथनं। अनवच्छिन्नानन्दप्राप्तिवादकथनं। मुक्तस्य ब्रह्मभावापत्तिवादकथनञ्च।

---

**No. 3100.** शब्दार्थवृत्तिः। Substance, country-made paper, 13 × 6 inches. Folia, 54. Lines, 14 on a page. Extent, 3,090 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Incorrect. Sanskrit.

**S'abdártha-vṛitti.** A commentary on the Das'avaikálika-sútra. By Samayasundara Upádhyáya.

**Beginning.** स्तम्भनाधीशमानम्य गणिः समयसुन्दरः।
दशवैकालिके सूत्रे शब्दार्थं लिखति स्फुटं॥

धर्म्मो मङ्गलमित्यादिव्याख्या। धर्म्मो दुर्गतिप्रपत + + धारणालक्षणः। उत्कृष्टं प्रधानं मङ्गलं वर्त्तते। को धर्म्म इत्याह अहिंसा। अहिंसा न हिंसा। जीवदयाप्राणातिपातविरतिरित्यर्थः। इत्यादि।

**End.** इति चूलिकाद्वयं व्याख्यातं। अथ प्रशस्तिमाह।
हरिभद्रकृता टीका वर्त्तते विषमा परं।
मया तु शीघ्रबोधाय शिष्यार्थं सुगमा कृता॥
चान्द्रकुले श्रीखरतरगच्छे श्रीजिनचन्द्रसूरिनामानः।
जाता युगप्रधानास्तच्छिष्यः सकलचन्द्रगणिः॥
तच्छिष्यसमयसुन्दरगणिना चक्रे+स्तम्भतीर्थपुरे।
दशवैकालिकटीका शशिनिधिशृङ्गारमितवर्षे॥
— — — — — — — —।
शब्दार्थवृत्तिटीकायाः श्लोकमानमिदं स्मृतं।
सहस्रत्रयमध्येव पुनः सार्द्धचतुःशती॥

**Colophon.** इति श्रीदशवैकालिकशब्दार्थवृत्तिः समयसुन्दरोपाध्यायकृता समाप्ता॥

विषयः। दशवैकालिकाभिधानजैनसूत्रस्य व्याख्यानम्।

---

**No. 3101. सुधा।** Substance, country-made paper, 13 × 3½ inches. Folia, 205. Lines, 7—8 on a page. Extent, 3,203 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Incorrect.

**Sudhá.** A commentary on Jayadeva's Chandráloka—a treatise on rhetoric. By Vis'ves'vara *alias* Gágá Bhaṭṭa, son of Dinakara Bhaṭṭa.

**Beginning.** प्रणम्य परमात्मानं सच्चिदानन्दविग्रहम्।

चन्द्रालोकसुधां रम्यां गागाभट्टस्तनोत्यहः॥

श्रीरिति भवतीति सर्व्वत्राध्याहाराः। उपदेशकौशलस्वरूपमाह। यथामृतपदेन प्रभ-
स्मिनसुस्वस्मिनकान्तासम्मितोपदेशत्वेविध्येऽपि उपदेशद्वयस्य शब्दार्थप्रधानतया।

**End.** जयन्तीति जयदेवस्यैव पीयूषवर्ष इति नामान्तरं। महादेव इति पूर्व्व-
वत्। कृतवन्त्यन्ये ग्रन्थं कथमपि च त्रिम्दन्वपि परे महाराजस्तुत्ये+ +मपि तुष्येद्दपि परं
+ + + + + विघटनसमर्थेन बहुना श्रमेणायं तुष्येद्य जनकजापरिवृढः॥

**Colophon.** इति मीमांसकद्विजकरभट्टसूनुविश्वेश्वरापरनामकगागाभट्टकृता सुधाख्या
चन्द्रालोकटीका समाप्ता।

**विषयः।** पीयूषवर्षापराभिधानजयदेवमिश्रकृतचन्द्रालोकनामकालङ्कारसन्दर्भस्य व्या-
ख्यानम्।

---

**No. 3102. काव्यालङ्कारटिप्पणी।** Substance, country-made paper, 12 × 4 inches. Folia, 85. Lines, 10 on a page. Extent, 1,580 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Paṇḍit S'yámalála Duve. Appearance, fresh. Prose. Incorrect.

**Kávyálañkára-ṭippaní.** A gloss on Rudraṭa's *Kávyálañkára*—a treatise on rhetoric. By Namisádhu.

**Beginning.** निःशेषाऽपि त्रिलोकी विनयपरतया सन्नमन्ती पुरस्ताद्-
यस्याङ्घ्रिद्वन्द्वसक्ताङ्कितविमलनखाद्दर्शसंक्रान्तदेहा।
निर्भीतित्राणलीना भवद्भवमहारातिभीत्येव भाति
श्रीमान् नाभेयदेवः स भवतु भवतां शर्म्मणे कर्म्महन्ता॥
पूर्व्वमहामतिविरचितहृद्यनुसारेण किमपि रचयामि।
संक्षिप्ततरं रुद्रटकाव्यालङ्कारटिप्पनकम्॥

इह शास्त्रकारः शिष्टस्थितिपालनार्थमविघ्नेन शास्त्रसमाप्त्यर्थञ्च प्रथममेव तावद्गणनायकस्य स्तुतिमाह । इत्यादि ।

**End.** जयतीति । सुगमम् ।

एवं रुद्रटकाव्यालङ्कृतिटिप्पनकविवचनात् पुण्यम् ।

यद्वापि मया तस्मान्मनः परोपकृतिरतिभूयात् ॥

— — — — — — — — ।

पञ्चविंशतिसंयुक्तैरेकादशसमाशतैः ।

विक्रमात् समतिक्रान्तैः प्राहषीदं समर्थितम् ॥

**Colophon.** इति श्रीनमिसाधुविरचितायां काव्यालङ्कारटिप्पन्यां षोडशोऽध्यायः ॥ समाप्तोऽयं ग्रन्थः ।

विषयः । रुद्रटकृतकाव्यालङ्कारनामकालङ्कारसन्दर्भस्य व्याख्यानम् ।

---

**No. 3103.** न्यासतिलकव्याख्या । Substance, country-made paper, 12 × 4 inches. Folia, 8. Lines, 6 on a page. Extent, 104 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, S'yámalála Duve. Appearance, fresh. Verse. Correct.

**Nyása-tilaka-vyákhyá.** A commentary on a hymn in praise of Raṅgeśvara a form of Vishṇu. The object of the hymn is to develope the coúrse of self-examination. Anonymous.

**Beginning.** श्रीमते रामानुजाय नमः ।

गुरुभ्यस्तद्गुरुभ्यश्च नमो वाकमधीमहे ।

वृणीमहे च तत्राद्यौ दम्पती जगतां पती ॥

प्रायः प्रपदने पुंसां पौनःपुन्यं निवारयन् ।

हस्तः श्रीरङ्गभर्तुर्मामव्यादभयमुद्रितः ॥

अनादेर्निःसीम्नो दुरितजलधेर्यन्निरपरं

विदुः प्रायश्चित्तं + + + भुरीणाशयविदः ।

तदारम्भे तस्य गिरमवदधानेन मनसा

प्रपद्ये तामेकां श्रियमखिलनाथस्य महिषीम् ॥ इत्यादि ।

**End.** वेदान्ताचार्यसन्दर्भव्याख्याने कृतसाहसम् ।

क्षमध्वं मां क्षमासारा विदुषामपि दुष्करे ॥

+ + + श्रीनिवासेन कौशिकान्वयशोभिना ।
कृतेयं न्यायतिलकव्याख्या याख्या विचक्षणैः ॥

Colophon. इति श्रीन्यायतिलकव्याख्या सम्पूर्णा ।

विषयः । श्रीचयाजेन रङ्गेश्वरे भगवति श्रात्मन्यासविधिकथनम् ।

---

No. 3104. रहस्यत्रयसारः । Substance, country-made paper, 12 × 4 inches. Folia, 9. Lines, 10 on a page. Extent, 174 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, S'yámalála Duve. Appearance, fresh. Verse. Correct.

**Rahasyatraya-sára.** An exposition of the three objects of life, *viz.*, desire for wealth, prosperity and emancipation. By Veñkaṭanátha Vedántáchárya.

Beginning. श्रीमद्वेङ्कटनाथार्य्यकवितार्किककेशरी ।
वेदान्ताचार्य्यवर्य्यो मे सन्निधत्तां सदा हृदि ॥
प्रपद्नमये विद्याभेदे प्रतिष्ठितचेतसः
प्रतिपदमिह प्रज्ञा + + + + राघवाः ।
शठरिपुगुरुव्याससप्राचेतसादिनिबन्धन-
श्रमपरिणतग्रुद्वाग्र + + + + टीकाः ॥ इत्यादि ।

End. रहस्यत्रयसारोऽयं वेङ्कटेशविपश्चिता ।
शरण्य + म्पतिविदां + + + सम्प्रदायताम् ॥

Colophon. इति श्रीकवितार्किकसिंहस्य सर्व्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्य्यस्य कृतिषु श्रीरहस्यत्रयसारः समाप्तः ॥

विषयः । प्रपद्नमनुष्ठानादिनिरूपणम् ।

---

No. 3105. श्रावकविधिप्रकाशः । Substance, country-made paper, 12 × 5 inches. Folia, 19. Lines, 12 on a page. Extent, 472 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose and verse. Incorrect. Old Hindi.

**S'rávaka-vidhi-prakáśa.** A summary of the duties appropriate for Jain householders. By Kshamákalyána.

Beginning. प्रणम्य श्रीजिनाधीशं सद्गुरुंश्च प्रमोदतः ।
आद्धाद्धीराचकृत्यानि लिख्यन्ते लोकभाषया ॥
तिहां प्रथमप्रभातसामयिकविधि लिखीयेछे। श्रावकछे सद्दोपाश्चलीराते पोसहशालाये अथ वा गुरुसमीपें अथ वा ग्टहनें एकदेशें आवी प्रथमदिवस संध्यायें ————इत्यादि ।

End. मनमें धारीकाउ समापारे । इति श्मशाणी सपचिं ननविधिः ।
श्रीजिनचन्द्रसूरिं दनिउ राजनगच्छराजने ।
वाचक अमृतधर्मगणिसीसखमाकल्यान ॥
सय अठारह+नौ मस+जेसलमेरसुथान ।
श्रावकविधिसंग्रहकीयो मूलग्रन्थ अनुमान ॥
कमलादिमसुन्दर सुमनकीधसहाय प्रधान ।
जो+मिहोय अशुद्ध रह सो सोधियो सुजान ॥

Colophon. इति श्रावकविधिप्रकाशः परिपूर्णः ।

विषयः । जैनग्टहस्थानां दैनिककृत्यविधिनिरूपणं । तत्र प्रातःकृत्यनिरूपणं । प्रतिक्रमणादिकालनिरूपणं । सामयिकपारणादिविधिकथनं । सन्ध्यासामयिकविधिकथनं । देवताप्रतिक्रमणादिविधिकथनं । चारित्रदर्शन-ज्ञानशुद्धिविधिकथनं । चैत्यवन्दनविधिकथनं । आहारसंवरणनिमित्तादिकथनं । अष्टप्रहरोपवासग्रहणपारणयोर्विधिकथनं । सामायिकसत्त्वविधिकथनं । प्रतिलेखनविधिकथनं । रात्रिसम्बन्धीयचतुःप्रहरोपासनाविधिकथनं । पाक्षिकादिप्रतिक्रमणविधिकथनं । अथ षाण्मासिकतपोविधिकथनं ।

---

No. 3106. सिद्धान्तरत्नावली । Substance, country-made paper, 13 × 5 inches. Folia, 98. Lines, 17 on a page. Extent, 6,111 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, decayed. Prose. Generally correct.

**Siddhánta-ratnávalí.** A commentary on the Sanskrit grammar entitled *Sárasvata-prakriyá*. By Mádhava Bhaṭṭa. (Cf. No. 2543, VII, p. 294).

Beginning. श्रीमद्विष्णुपदाब्जमञ्जुलिदलं सज्ज्ञानकिञ्जल्किकं
पीयूषौघ + + मधुदसमा + + जितं स्तोयतं ।
योगीशामरकिङ्कराजिनिकरैः पेपीयमानं मुदा
ज्ञानानन्दभरप्रदायि नितरां चित्तेन्मये संविदे ॥

वागीश + + + नमोऽपि यस्याः कृपाकटाक्षे च्यवतः प्रयाति ।
सा मे मतिं स्फारयतादवश्यं वाग्देवता + + + + + ॥
— — — — — — — — —।

तत्र सारस्वतीं प्रक्रियामृजुं चिकीर्षुः श्रीमदनुभूतिस्वरूपाचार्य्यस्तद्विघ्नसमाप्तिप्रचयम-
+ + + + नार्थमिष्टदेवतापरमात्मप्रणतिलक्षणमङ्गलमाचरन् विषयप्रयोजनसम्बन्धाधिका
रिणोऽपि सूचयन् प्रतिजानीते प्रणम्येत्यादिना श्लोकेन । अस्यायमर्थः । अहं प्रक्रियन्ते व्युत्पा-
द्यन्ते शब्दा अनयेति प्रक्रिया——इत्यादि ।

End. आदिनान्यस्याप्येवं जातीयकस्य विद्वद्भिर्विचारा ज्ञेया इति । इति कृत्य-
प्रक्रिया समाप्ता ।

Colophon. इति भट्टमाधवविरचितायां सिद्धान्तरत्नावल्यां सारस्वतटीकायां कृत्य-
प्रकरणं सम्पूर्णं । सम्पूर्णोऽयं ग्रन्थः ॥

विषयः । अनुभूतिस्वरूपाचार्य्यकृतसारस्वतप्रक्रियाभिधानव्याकरणस्य व्याख्यानम् ।

---

**No. 3107.** वसुपालतेजःपालप्रबन्धः । Substance, country-made paper, 14 × 4½ inches. Folia, 30. Lines, 9 on a page. Extent, 913 ślokas. Character, Nágara. Date, ? Place of deposit. A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose and verse. Incorrect. Sanskrit.

**Vasupála-Tejapála-prabandha.** Anecdotes of Vasupála and Tejapála, Jain householders, in illustration of Jain doctrines and duties. Anonymous.

Beginning. श्रीवस्तुपालतेजःपालौ मन्त्रीश्वरावुभौ + + ।
यौ भ्रातरौ प्रसिद्धौ कीर्त्तनसंख्यौ तयोर्भ्रमः ॥

पूर्व्वं धरित्रीमण्डनायां मण्डलीनगर्य्यां श्रीवस्तुपालतेजःपालयोरायाः वसन्ति स्म ।
अन्यदा श्रीमत्पत्तनवास्तव्यप्राग्वाटान्वयठक्कुरश्रीचण्डपालात्मजठक्कुरश्रीचण्डप्रसादात्मजमन्त्रिश्री-
सोमकुलावतंसठक्कुरश्रीआसराजनन्दनौ कुमारदेवीकुक्षिसरोवरराजहंसौ श्रीवस्तुपालतेजः-
पालौ श्रीशत्रुञ्जयगिरनारादितीर्थयात्रायै प्रस्थितौ । इत्यादि ।

End. चिषष्टिवारान् समरे जयश्रीर्दृष्टैता । अष्टादशवर्षाणि तयोः सर्व्वमुद्रा-
व्याप्तिः । तदनु श्रीवीसलदेवसेवा ॥

Colophon. इति श्रीवस्तुपालतेजःपालकथा समाप्ता ॥

विषयः । वस्तुपालतेजःपालयोश्चरित्रकीर्त्तनव्याजेन जैनधर्ममाहात्म्यादिकथनं ।

---

**No. 3108.** कौतुकचिन्तामणिः। Substance, country-made paper, 12 × 6 inches. Folia, 74. Lines, 11 on a page. Extent, 1,656 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse and prose.

**Kautuka-chintámaṇi.** Magic, sorcery, and entertaining or startling experiments. By Mahárájá Prat́áparudra Deva.

**Beginning.** व्यामोहप्रथमौषधं मुनिमनोमुक्तिप्रवृत्तौषधं
दैत्योच्छित्तिकरौषधं त्रिभुवने सञ्जीवनैकौषधं।
भक्तार्त्तिप्रशमौषधं भवभयप्रध्वंसनैकौषधं
श्रेयःप्राप्तिकरौषधं पिब मनः श्रीकृष्णदिव्यौषधं॥

पूर्व्वं तावन्नीतिचिकित्साभ्यासम्पादितद्विविधराजस्थैर्य्यभृतां राज्ञां व्यसनानि निरस्य कौतुकावलोकनेनैव कालयापनं कर्त्तव्यमिति + + + + + + प्राप्तावसराणि कौतुकानि संक्षेपतो निरूप्यन्ते।

**End.** चारुचञ्चुश्चिरारेचिचञ्चच्चारुचारुचः।
चचार रुचिराचारचारैराचारचञ्चुरः॥

**Colophon.** इति श्रीमहाराजाधिराजप्रतापरुद्रदेवकृतकौतुकचिन्तामणौ तृतीया दीप्तिः। कल्याणमस्तु।

विषयः। तत्रादौ आत्मशरीररक्षाविधिकथनं। अन्येषां दृष्टिबन्धविधिकथनं। सङ्ग्रामे जयविधिकथनं। खड्गस्तम्भनविधिकथनं। अग्निस्तम्भनविधिकथनं। अन्नपाकस्तम्भनविधिकथनं। गृहद्वारस्तम्भनादिविधिकथनं। तण्डुलविषादिद्रव्यस्तम्भनविधिकथनं। जलस्तम्भनादिविधिकथनं। बलोवीर्य्यादिस्तम्भनविधिकथनं। अथ वशीकरणविधिकथनं। तत्र राजवशीकरणविधिकथनं। स्त्रीवशीकरणविधिकथनं। पतिवशीकरणविधिकथनं। गजादिवशीकरणविधिकथनं। कामवृद्धिविधिकथनं। तत्र मदनेश्वररसविधिकथनं। मदनोदयरसकथनं। कामकलारसकथनं। रतिकामरसकथनं। मदनवर्द्धनरसकथनं। अनङ्गसुन्दरीवटिकाकथनं। कामनायकादिरसकथनञ्च। अथ नायिकादिभेदनिरूपणं। कामस्थाननिरूपणं। विविधबन्धनिरूपणं। तत्र स्तम्भनद्रावणादिविधिकथनं। सङ्कोचनवर्द्धनादिविधिकथनं। अथ कृत्रिमवस्तुकरणविधिकथनं। मुक्ताकरणं। पद्मरागकरणं। इन्द्रनील-मरकत-प्रवाल-स्वर्णादिकरणविधिकथनं। कर्पूरकुङ्कुमादिसुगन्धिद्रव्यकरणविधिकथनं। निधिज्ञानोपायकथनं। निधिनिष्काशनविधिकथनं। वृक्षादीनां फलोद्यामविधिकथनं। पुष्पादिदोहदविधिकथनं। अथ पाषाणादिघर्षणविधिकथनं। रिक्तकुम्भे जलपानादिविधिकथनं। रक्तवर्णादिपुष्पाणां धावल्यादिकरणविधिकथनं। जले स्थितिविधिकथनं। यथेष्टभोजनादिविधिकनं। भोज्यद्रव्ये-

छायादिजननविधिकथनं। शिरस्यग्निधारणादिविधिकथनं। कृत्रिमाग्निकरणविधिकथनं। मशीकरणादिविधिकथनं। जले चित्रकरणादिविधिकथनं। चौरपरिज्ञानविधिकथनं। सर्पोच्चाटनादिप्रयोगकथनं। मशकमक्षिकाद्युच्चाटनविधिकथनं। मल्लाजादिदर्पहरणादिविधिकथनं। वृश्चिकदंशनादिचूर्णकथनं। सारस्वतामृतविधिकथनं। सङ्ग्रामे विजयोपायकथनादिकं। ग्रहणप्रदर्शनादिविधिकथनं। कपाटोद्घाटनविधिकथनं। बन्धनादिच्छेदनविधिकथनं। विविधरूपधारणविधिकथनं। विविधजीवोत्पादनविधिकथनं। कृत्रिमोल्कादर्शनादिविधिकथनं। पिशाचदर्शनादिविधिकथनं। केशरञ्जनादिविधिकथनं। लोमशातनादिविधिकथनं। कर्णादिवृद्धिकरणविधिकथनं। तनदुर्गन्धादिहरणविधिकथनं। विषादिचिकित्साकथनं। गर्भपातनिवारणादिविधिकथनं। कूपादिखननविधिकथनं। शिलाभेदनादिविधिकथनं। चित्रकाव्यकथनञ्च।

---

**No. 3109.** व्याख्यालेशः। Substance, country-made paper, 14 × 6 inches. Folia, 26. Lines, 9 on a page. Extent, 590 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose. Generally correct. Sanskrit and Mágadhí.

**Vyákhyáleśa.** A gloss on the *Kalyánamandira*, a Jain hymn by Siddhasena A'chárya. Anonymous.

**Beginning.** श्रीमत्पार्श्वं जिनं नत्वा बालानां बोधहेतवे।
कल्याणमन्दिरस्तोत्रे व्याख्यालेशो विधीयते॥

तत्र प्रथमस्तोत्रस्य उत्पत्तिर्लिख्यते। तद्यथा। उज्जयिन्यां विक्रमपुरोधसः पुत्रो देवर्षिकाकुक्षिभूः मुकुन्द इति नाम वादार्थं भृगुकच्छपुरं प्रति प्रचलितः। तत्रान्तरा मार्गे वृद्धवादिगुरवो मिलिताः। तैः सह वादमकरोत्। तत्र गोपाः साक्षिकाः कृता संस्कृतमवदन्। गोपैः बुद्धं न किञ्चिदिदम्। ततो गुरवोऽवदन् न विमारिय न विचोरिये परदारागमन न करिये — — — — — — एवं महाप्रभावकैः श्रीसिद्धसेनाचार्य्यैः कृतमिदं श्रीकल्याणमन्दिरस्तोत्रं। तस्य व्याख्यालेशः प्रारभ्यते॥

**End.** शृण्वतां पठताञ्चैमां स्वर्णां वाचयतामपि।
कल्याणं विपुलं भूयात् पार्श्वनाथप्रसादतः॥

**Colophon.** इति श्रीकल्याणमन्दिरस्तोत्रस्य टीका व्याख्यालेशः परिपूर्णः।

विषयः। कल्याणमन्दिराभिधानस्य जिनेन्द्रस्तोत्रस्य व्याख्यानम्।

---

**No. 3110.** **उणादिवृत्तिः ।** Substance, country-made paper, 14 × 4½ inches. Folia, 24. Lines, 12 on a page. Extent, 1,116 ślokas. Character, Nágara. Date, ? Place of deposit, Ajimganj, Rámachandra Paṇḍit. Appearance, fresh. Verse. Generally correct.

**Unádivṛitti.** A commentary on the Unádisútra, a treatise on grammatical derivation, illustrated with a profusion of examples. By Ujjvaladatta.

**Beginning.** देवदेवं प्रणम्यादौ सर्व्वज्ञं पार्व्वतीपतिं ।
श्रीमदुज्ज्वलदत्तेन क्रियते वृत्तिरुत्तमा ॥
वृत्तिन्यासमनुन्यासं रचितं भागवृत्तिकां ।
भाष्यं धातुप्रदीपञ्च तट्टीकां वर्णदेशिनीं ॥
उपाध्यायस्य सर्व्वस्वं सुभूतिं सोमनन्दिनं ।
कलिङ्गदत्तचन्द्रादीन् समीक्ष्यैषा कृतिर्मम ॥
उणादिवृत्तयोऽनेका भूरिभिः सूरिभिः कृताः ।
तास्विदानीं विपर्य्यस्ताः सूत्रशब्दार्थधातवः ॥
ता एवाद्य समालोक्य ग्रन्थानन्यांश्च विस्तरान् ।
सर्व्वतः सारमाकृष्य मया वृत्तिर्विधीयते ॥
निरूप्य लिखितं सत्यं सज्जनैश्च विचारितं ।
नमस्कुर्म्मः मता (?) युष्मान् दृष्टिमत्र करिष्यथ ॥
य इमां वृत्तिमालोक्य स्वपौरुषसमीहया ।
मत्सराच्छादनं कुर्य्यात् सुकृतं तस्य नश्यति ॥
प्रत्यायानाञ्च धातूनामागमादेशयोस्तथा ।
व्यक्तमेवानुबन्धानां पाठेमोदीरितं ततः ॥

प्रत्ययः । परश्च । आद्युदात्तश्च । अनुदात्तौ । इत्यादि ।

**End.** अथा अग्निः स्वरादित्वादव्ययत्वमेव भाषायां । इति पञ्चमः पादः ॥

**Colophon.** इति श्रीमदुज्ज्वलदत्तविरचिता उणादिवृत्तिः समाप्ता ।

विषयः । उणादिसूत्राणां सोदाहरणं व्याख्यानम् ।

---

**No. 3111.** **तर्कदीपिका ।** Substance, country-made paper, 13 × 4½ inches. Folia, 6. Lines, 11 on a page. Extent, 239 ślokas. Character, Nágara. Date, ? Place of deposit, S'ántipur, Rámanáth Tarkkaratna. Appearance, fresh. Prose. Incorrect.

**Tarkadípiká.** A summary of the leading principles of logic. By Visvanátha A'srama, disciple of Mahádeva A'srama. This is quite distinct from the work of this name noticed in Mr. Hall's Contributions, p. 69.

**Beginning.** यत्पादाम्बुजभृङ्गाणि ब्रह्मादिव सुरासुराः ।
वितर्कयन्ति सौन्दर्य्यं तं वन्दे गिरिजाप्रियं ॥

ननु किं तर्कलक्षणं । व्याप्यारोपे व्यापकारोप इति चेन्न, आत्माश्रयादावव्यापकत्वात् । यदि प्रमेयत्वं स्वस्मिन् वर्त्तेत तर्ह्यात्माश्रयः स्यात्———इत्यादि ।

**End.** तर्करसोज्ज्वलवाक्यविहीनाः सन्ति नरा जड़बुद्धियुता ये ।
तन्मतिवाक्यसुकौशलसिद्ध्यै तर्कनिरूपणमीरितमेतत् ॥

**Colophon.** इति श्रीमन्महादेवाश्रमशिष्येण योगिना विश्वनाथाश्रमेण रचिता तर्कदीपिका समाप्ता ।

विषयः । सप्रपञ्चतर्कलक्षणादिप्रपञ्चनम् ।

---

**No. 3112.** तार्किकरक्षाव्याख्यासारसङ्ग्रहः । Substance, country-made paper, 12 × 4 inches. Folia, 26. Lines, 20 on a page. Extent, 1,300 ślokas. Character, Nágara. Date, ? Place of deposit, Sántipur, Rámanátha Tarkaratna. Appearance, fresh. Prose. Incorrect.

**Tárkika-rakshá-vyákhyá-sárasangraha.** A gloss on Varadarája's *Tárkika-rakshá*, a treatise on the Púrṇaprajṇa doctrine. Anonymous.

**Beginning.** नमामि परमात्मानं स्वतः सर्व्वार्थदर्शिनं ।
विद्यानामादिवक्तारं निमित्तं जगतामपि ॥

प्रारिप्सितस्य ग्रन्थस्य प्रेक्षावदुपादित्साप्रयोजिकामभिमतफलसाधनतामभिधाय श्रोतृबुद्धिमनुकूलयन् वर्णिष्यमाणमेवाग्रे दर्शयति निःश्रेयसमिति ।

**End.** एवं द्वितीयादिषु कथासु सम्भवति । तदुत्तरकथोद्धार्यमिति ॥

**Colophon.** इति वरदराजविरचिततार्किकरक्षाव्याख्यासारसङ्ग्रहे प्रथमः परिच्छेदः । शुभमस्तु ।

विषयः । वरदराजविरचिततार्किकरक्षायाः व्याख्यानम् ।

---

**No. 3113.** प्रौढप्रबोधभूषणम् । Substance, country-made paper, 11 × 6 inches. Folia, 102. Lines, 12 on a page. Extent, 2,121 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Rámachandra Paṇḍit. Appearance, fresh. Verse, few. Prose. Generally correct.

**S'ighrabodha-bhúshaṇa.** On the philosophy of grammar and rhetoric. By S'ivaprasáda Upádhyáya. Cf. No. 2494, VII, p. 247.

Beginning. दुर्गमे शरणं नमामि नितरां दुर्गां जगद्गेया
दुर्गायै + + रर्पयामि सततं सिद्धिप्रदायै द्रुतम् ।
दुर्गायाः परमः परः श्रवणगो नाभू(?)श्रुतौ वा स्मृतौ
दुर्गायाश्चरणौ स्मरामि भवतां दुर्गा शुभक्तिर्मम ॥
त्यादिकृत्तद्धिता यत्र समासो वाव्ययैर्युतिः ।
तमुक्त इत्यहं वच्मि तत्रोक्तात् प्रथमा भवेत् ॥
अथ कर्त्तरीत्यादि । आत्मनेपदम् । इत्यादि ।

End. अथ ग्रामीणोक्तिलक्षणं ।
ग्रामीणास्ते प्रवीणा ये नीचवाचि मत + + ।
ग्रामीणोक्तिस्तदुक्तिः स्यात् सभामट्ठा अनागराः ।

Colophon. इतः परं खण्डितत्वात् परिसमाप्तिवाक्यं नास्ति ।

विषयः । कर्त्तरि आत्मनेपदोदाहरणश्लोककथनं । एवं तत्र परस्मैपदोदाहरणश्लोककथनं । तत्र तदुभयपदप्रदर्शनञ्च । कर्मणि आत्मनेपदोदाहरणश्लोककथनं । एकस्मिन् श्लोके कर्त्तरि कर्मणि च प्रत्ययप्रदर्शनं । एवं कृत्प्रत्ययादिप्रदर्शनं । तथा तद्धितसमासादौ चेति विज्ञेयं । सहसाकंसार्द्धमाद्यव्यययोगोदाहरणश्लोककथनं । अथ कारकोदाहृतिश्लोककथनं । अथ वैषयिकोदाहृतिश्लोककथनं । अथ लिङ्गभेदोदाहृतिश्लोककथनं । संख्याभेदोदाहृतिश्लोककथनं । दशबलकारिकामतेन भूवादिधातूनामुदाहरणकथनं । उपसर्गाणामुदाहरणकथनं । धातुभिर्योगे अर्थविशेषकथनञ्च । वर्णयोरभेदकथनं । शकारादिभेदनिरूपणं । अथच्छन्दोलक्षणादिकथनं । तत्र मात्राप्रस्तारादिकथनञ्च । प्रहेलिकादिकथनं । यमकादिकथनं । विविधचित्रकाव्यकथनं । वक्रोक्त्यादिकथनं । अर्थालङ्काराणां प्रत्येकं लक्षणकथनपूर्वकमुदाहरणकथनं । काव्यदोषनिरूपणं ।

---

**No. 3114. रामाखेटकाव्यम् ।** Substance, country-made paper, 16 × 6 inches. Folia, 49. Lines, 13 on a page. Extent, 1,608 ślokas. Character, Nágara. Date, Sм. 1865. Place of deposit, A'jimganj, Paṇḍit S'yámalála Duve. Appearance, fresh. Verse. Incorrect.

**Rámákheṭa-kávya.** An epic poem on the career of Ráma from the time of his marriage with Jánakí to the destruction of Rávaṇa. By Padmanátha Dvija.

**Beginning.** हेरम्बो विधुमौलि विघ्ननिचयान् यद्दृक्तया सत्तया
भास्वान् भासयते भवे प्रभुरभूदम्भोजभूर्भूतराट्।
भूतौघं प्रकृतिर्भिनत्ति तनुते वि+भावितं
स्वान्ते नौमि विवि + + न्त मतिभिः साकेतराकेश्वरं॥
माणिक्यांशुविनिन्दिकमञ्जुराजीराजमानं सतत्
योऽसौ संस्मरतां पदं प्रशमयते तापत्रयं तत्क्षणात्।
सामन्तोडुगणानुरञ्जनकरं रेखाविशेषान्वितं
श्रीवत्साङ्कधरः स्मितामृतकरो वीरो जयत्यंशुमान्॥
श्रीरामं क्षणदाचरक्षयविधौ दक्षं दुष्टक्षं सतां
क्षोणीत्राणविचक्षणं क्षितिभुजामक्षौहिणीभिर्वृतं।
अत्यक्षं प्रतिपक्षकक्षदहनाक्षीणप्रतापानलं
देव+रवगम्यविक्षतमनातक्षो(?)ऽधिपोऽभूत् क्षणात्॥ इत्यादि।

**End.** लक्ष्मीशानां गुरूणां चरणमानम्य गङ्गाधराणां
वेदान्तारण्यकण्ठी(?)रवदलितमहामोहदन्तावलानाम्।
श्रीरामाखेटकाव्यं शिवचरणसहायेन सन्दर्भितं
तत्प्रीत्यै स्यात् पाठकानामतिसरलतरं पद्मनाभद्विजेन॥

**Colophon.** इति श्रीमदनारतब्रह्मानन्दाम्भोधिनिमग्नमानससकलशास्त्रारण्यसन्देहध्वमकवाग्गभस्तिश्रीमल्लक्ष्मीनाथाङ्घ्रिकमलसेवकेन सकलयोगिवर्गवर्य्यश्रीरामचन्द्रचकोरश्रीमद्गङ्गाधरवात्सल्यपात्रेण श्रीरामचन्द्रचरणसहायवता पद्मनाभद्विजेन विरचितं श्रीरामाखेटकाव्यं सम्पूर्णम्। संवत् १८९५।

विषयः। जानकीपरिणयादारभ्य रावणवधोत्तरं श्रीरामचरितवर्णनम्।

---

**No. 3115. परिमलः।** Substance, country-made paper, 12 × 4 inches. Folia, 35. Lines, 15 on page. Extent, 1,607 ślokas. Character, Nágara. Date, Sм. 1609. Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Prose. Correct.

**Parimala.** A commentary on Bhánu Miśra's *Rasamanjarí*, a treatise on Rhetoric. By S'eshachintámaṇi, son of S'esha-nṛisiñha.

**Beginning.** प्रेमार्द्रार्द्रनिरीक्षणादनुदिनं यत्रम्बमाश्लिष्टनाद्
यो दम्पत्योत्कृत्तमाङ्गपद्मोल्लेखाद्वियोगाश्च यः।
सूनः कोऽपि परम्परागतसखीसम्भाषणाज्जायते

शृङ्गारः स विभूतये भवतु मे लक्ष्मीश्वरिंहात्मयोः ॥
यद्दोर्ह्णिग्धश्वीविनिर्य्यत्फणीन्द्र-
स्फुरद्रत्नकान्त्या मणिस्तम्भमुद्रा ।
पिबन्त्यां च्छि सक्षोरमालोकितो मां
कपोलौ बिबरेषु सरोगः पुनातु ॥
इन्द्रादिदेवपरिसेवितपादपद्मां
पद्मासनां विकचपद्मदलायताचीं ।
पद्मप्रभां विमलपद्मनिभाननां तां
वागीश्वरीमनुदिनं शरणं प्रपद्ये ॥
— — — — — — ।

इह खलु सकलकविकुलमुकुटमणिमरीचिमञ्जरीनीराजितचरणकमलो + + + श्रीभानुकरनामा कविः — — — — — — — — — — निष्प्रत्यूहपरिसमाप्तये च तन्निर्द्दिष्टरूपं मङ्गलं शिष्यशिक्षार्थमुपनिबध्नाति । आशीरिति । अत्रान्वयान्यथानुपपत्त्या यदुच्छाध्याहारेण योज्यं । इत्यादि ।

End. शेषावतंसश्रीशेषवसिंहतनयः सुधीः ।
यूनां मनोविनोदाय मञ्जरीव्याकृतिं व्यधात् ॥

Colophon. इति श्रीसकलपण्डितघटाग्रणीश्रीमच्छेषनेशालङ्कारभूतसकलविद्वज्जनवृन्दचूडामणिमरीचिपिञ्जरितचरणयुगलकलिशेषावतारश्रीमच्छेषवसिंहतनयेन श्रीवसिंहचरणोपासिना अमरपुरवासिना श्रीशेषचिन्तामणिना निर्म्मितो रसमञ्जर्य्याः परिमलः समाप्तः ॥ संवत् १९०९ ।

विषयः । भानुमिश्रविरचितरसमञ्जर्य्या व्याख्यानम् ।

---

**No. 3116.** जिनेन्द्रस्तवनम् । Substance, country-made paper, 12 × 6 inches. Folia, 2. Lines, 10 on a page. Extent, 40 ślokas. Character, Nágara. Date, ? Place of deposit, Ájimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect. Sanskrit.

**Jinendrastavana.** A hymn in praise of Jina, in course of which the attributes of the saint are described and the merit of asceticism extolled. Anonymous.

**Beginning.** ओङ्काररूपारूपं परमपदगतं शिवमोच्चप्रमोदं
मायाहङ्कारभङ्गं त्रिगुणविरहितं त्यक्तनिःशेषसङ्गं ।

ध्यायन्ति ध्यानमग्नं यमिह हृदि परे + + + योगिनाथा-
स्तं वन्दे देवदेवं निरुपमपरमज्ञानतेजःस्वरूपं ॥
न क्रोधो न भयं न मोहमहिमा नाहङ्कृतिर्नो रति-
र्न द्वेषो न जरा न चाह + + + निद्रा न यस्य क्षुधा ।
लोकालोकविभासकं निरुपमं यज्ज्ञानमव्याहतं
वीतरागाय निरञ्जनाय निरहङ्काराय तस्मै नमः ॥ इत्यादि ।

End. याचे नो प्राज्यराज्यं न विषयसुखं न श्रियं नापि भोगान्
न स्वर्गं न त्रिवर्गं न च वररमणीसङ्गमं मोक्षकीर्त्तिं ।
इन्द्रादिप्रोक्तमन्त्रस्तुतिष्टतिरुचिरं नित्यवैराग्यरङ्गं
चारित्रं सुन्दरं मे जिनजनितहरं देहि ते भक्तियुक्तिं ॥

Colophon. इति श्रीजिनेन्द्रस्तवनं समाप्तम् ।

विषयः । स्तुतिव्याजेन जिनेन्द्रस्य माहात्म्यादिकथनं । निजदैन्यनिवेदनेन वैराग्यादि प्रार्थनञ्च ॥

---

No. 3117. आदिजिनस्तोत्रम् । Substance, country-made paper, 12 × 6 inches. Folium, 1. Lines, 24. Extent, 23 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Verse. Incorrect.

A'dijina-stotra. A hymn in praise of the first Jina, Ṛishabhanátha. By Rájaśekhara.

Beginning. ऋषपतिनाभिकुलाम्बुजभास्कर दृपतिसेवितपादसरोरुह ।
वृषभलाञ्छन देव जगत्पते भवभृतां नमतां कुरु मङ्गलं ॥
जलधरावलिधौतसुराचलप्रतिमदेहरुचे भव + + + ।
अमलकेवलकेलिनिकेतन प्रथमवैभव हे कुरु मङ्गलं ॥ इत्यादि ।

End. श्रीदण्डनाथ विमलप्रविधापितोच्च-
प्रासादभूषण जगत्त्रयवन्दनीय ।
श्रीआदिनाथ भगवन् मलहारि + +
श्रीराजशेखरकृतस्तव + + + + ॥

Colophon. इति श्रीआदिजिनस्तोत्रं सम्पूर्णम् ।

विषयः । स्तवनव्याजेन आदिजिनेन्द्रस्य ऋषभनाथस्य माहात्म्यादिकीर्त्तनम् ।

---

**No. 3118.** जगद्भूषणम्। Substance, country-made paper, 12 × 4 inches. Folia, 8. Lines, 8 on a page. Extent, 220 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, fresh. Verse. Incorrect.

**Jagadbhúshaṇa.** A guide to astrological calculations. By Haridatta Bhaṭṭa, son of Harají Bhaṭṭa.

**Beginning.** प्रणम्यादिदेवं प्रभुं नारसिंहं
प्रहान् भास्कराद्यान् गणेशं भवानीं।
ग्रहर्चादितिथ्यादिपचाशसिद्ध्यै
करोमि प्रबन्धं जगद्भूषणाख्यम्॥
देवेन्द्रस्त्रिदशेषु हचनिचये कल्पद्रुमस्तारका-
स्विन्दुः पर्व्वतसञ्चये सुरगिरीरत्नेषु चिन्तामणिः।
गङ्गा सत्सरितां गणेऽमरगवी गोषु द्विपानां गणे
स्वर्नागोऽखिलराजवंशनिकरे श्रीसूर्य्यवंशस्तथा॥
— — — — — — — —॥
तत्सूनुः किलकर्णसिंह इति यन्नाम्ना यथार्थाङ्कयो
दानाधिक्यतया धनुर्द्धरतया यः शक्रतुल्योऽभवत्।
सत्यत्वेन युधिष्ठिराधिकरणं सौराज्यभावात्तथा
श्रीरामेण समः प्रतापनिकराधिक्यात्समो भानुना॥
तदङ्गजन्मा धरणीं प्रशास्ति श्रीमज्जगत्सिंहनृपो महौजाः।
धर्म्माधिकत्वेन दयालुताया यमेकमिन्द्रं प्रवदन्ति सन्तः॥
— — — — — — — — —।
शालिवाहननरेपतिशाकपूर्णवाणविषयेन्दुसमाने।
श्रीजगन्नरपतिर्निजशाकं भूरिदानजनितं कुरुते स्म। इत्यादि।

**End.** ग्रन्थेऽस्मिन् यद्गलीकं स्याज्जगद्भूषणसंज्ञके।
सुधीभिः शोधनीयं तत्सुविचार्य्य पुनः पुनः॥
पूर्णतर्कशरभूमित (१५६०) शाके कार्त्तिके धवलपचसमेते।
पञ्चमीतिथियुते बुधवारे भूषणं समकरोद्धरिदत्तः॥

**Colophon.** इति श्रीगणकचक्रचूडामणिभट्टश्रीहरजीतनूजहरिदत्तभट्टविरचिते नि-खिलराजमण्डलीमौलिमण्डनप्रतापनिकरविध्वस्तरिपुमण्डलविविधविद्याविनोदरसिकमहारा-

आधिराजमहाराजश्रीजगत्‌सिंहनामाङ्किते जगद्भूषणे पञ्चाङ्गस्फुटीकरणाधिकारः। समाप्तोऽयं ग्रन्थः।

विषयः। तत्रादौ चन्द्रसूर्य्यस्फुटीकरणादिकौशलं। चक्रभ्रमे संस्कारनिरूपणं। भौमादिस्फुटीकरणकथनं। लग्नादिस्फुटीकरणविधिकथनं। चन्द्रसूर्य्यग्रहणस्फुटीकरणकथनं। तिथ्यादिसिद्धिकथनञ्च।

---

No 3119 हितोपदेशः। Substance, country-made paper, 12 × 4 inches. Folia, 38. Lines, 11 on a page. Extent, 1,119 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Ráya Dhanapat Siñh, Bahádur. Appearance, new. Prose and verse. Incorrect.

Hitopadeśa. A treatise on the diseases of women and children, and on toxicology. By S'ríkaṇṭha Paṇḍita.

Beginning. यत्कर्णमारुतहता गिरयो युगान्ते
चूर्णीभवन्ति किल मेरुहिमाचलाद्याः।
शुष्यन्ति सप्तसरितां पतयोऽपि नित्यं
वन्देऽन्तरायशमनाय गणेश्वरं तं॥
— — — — — — —।
हितोपदेशनामायं ग्रन्थः श्रीकण्ठशम्भुना(?)।
रोगिरोगापनोदाय क्रियतेऽतिसमासतः॥
रसायनान्नपान्यादिविधिं वाग्निसमासतः।
गणदोषानुरूपेण वैद्यसिद्धान्तसङ्गतं।
अथ ज्वरोत्पत्तिः।
रुद्रकोपाग्निसम्भूतः सर्व्वभूतप्रणाशकः। इत्यादि।

End. मुक्ता+लैरिव घनैः शुचिभिः सुहृत्तैः
सम्पूरिता विमलकान्तिगुणेन युक्ता।
श्रीकण्ठपण्डितकृतिर्बुधकन्धरासु
मुक्तावलीव विलुठत्व+ + चिराय॥

Colophon. इति परमशैवाचार्य्यश्रीकण्ठपण्डितविरचिते वैद्यकसारसंग्रहे हितोपदेशनाम्नि बालस्त्रीरोगशस्त्रघातरोहणनाडीव्रण — — — — — — सर्पवृश्चिकादिविषप्रतीकारनामा दशमः समुद्देशः।

इति हितोपदेशः समाप्तः॥

विषयः । तत्र प्रथमतः संक्षेपेण द्रव्यगुणकथनं । पानीयादिगुणकथनं । दुग्धादिगुणकथनञ्च । रसायनविधिकथनं । शिरोरोगप्रतीकारकथनं । कर्णरोगप्रतीकारकथनं । नेत्ररोगप्रतीकारकथनं । नासिकारोगप्रतीकारकथनं । मुखरोगप्रतीकारकथनं । एवं कासशूलक्षयरोगगुल्महिक्कादिरोगप्रतीकारकथनं । अतीसारग्रहणीश्लीपदविचर्चिकादिरोगप्रतीकारकथनं । भगन्दरादिरोगप्रतीकारकथनं । कुष्ठवातरोगादिप्रतीकारकथनं । ज्वरप्रतीकारकथनं । बालस्त्रीरोगग्रस्ताद्यावातरोहणनाडीव्रणविसर्परक्तपित्तादिविषादिप्रतीकारकथनञ्च ।

---

**No. 3120.** युगलकिशोरस्तोत्रम् । Substance, country-made paper, 15 × 6 inches. Folia, 2. Lines, 9 on a page. Extent, 45 ślokas. Character, Nágara, Date, ? Place of deposit, Ajimganj, Rámchandra Paṇdit. Appearance. fresh. Verse. Correct.

**Yugalakiśora-stotra.** A hymn in praise of the dual form of the divinity as Rádhá and Krishṇa, in course of which the merits of several places of pilgrimage are extolled. An extract from the Brahmáṇḍa Puráṇa. Cf. No. 2915, *ante* p. 56.

नारद उवाच ।

**Beginning.** किं तद्गुह्यतरं ब्रह्म न यच्चिन्त्यमपीश्वरैः ।
तन्मे ब्रूहि समस्तज्ञ योगेश मयि वल्लभ ॥
ब्रह्मोवाच ।
शृणु गुह्यतरं तात नारायणमुखाच्छ्रुतं ।
सर्व्वदा पूजिता देवैराधा वृन्दावने वने ॥
राधा विशेषतः कृष्णो ह्येकदा प्रेमविह्वलः ।
राधामन्त्रं जपन् ध्यायन् राधां सर्व्वत्र पश्यति ॥ इत्यादि ॥

**End.** अहं कृष्णात्मिका नित्या कृष्णश्चैव मदात्मकः ।
वृन्दावनेश्वरः कृष्णः स एवाराध्यते मया ॥
जिह्वाग्रे कृष्णनामेति नेत्रयोः कृष्णविग्रहः ।
कर्णाग्रे कृष्णसंकीर्त्तिर्मनोऽग्रे च हरेस्तनुः ॥
राधया पठितं स्तोत्रं श्रीकृष्णप्रीतये परं ।
यः पठेत् प्रयतो नित्यं स कृष्णवल्लभो भवेत् ॥

**Colophon.** इति श्रीब्रह्माण्डपुराणे नारदब्रह्मसंवादे युगलकिशोरस्तोत्रं सम्पूर्णं ।

विषयः । राधाकृष्णयोरभिन्नताभिरूपणमुखेन तयोर्माहात्म्यादिकीर्त्तनम् ।

**No. 3121.** आचार्य्यमतरहस्यम्। Substance, country-made paper, 13 × 5 inches. Folia, 23. Lines, 9 on a page. Extent, 468 ślokas. Character, Nágara. Date, ? Place of deposit, Jiyáganj, Jitendriya Bhaṭṭácharya. Appearance, new. Prose. Correct.

**A'chárya-matarahasya.** An essay on the philosophy of Rámánuja, and designed for the refutation of all opinions adverse thereto. By Harirama. Cf. No. 2371, VII, p. 140.

**Beginning.** सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्मेत्यत्र द्वितीयशब्देन सजातीयादिभेदशून्याङ्गीकारे कथं तादृशस्य जगद्व्यापारः। मायाङ्गीकारेणेति चेत्, किं तदानीं निर्विशेषज्ञानमात्रस्वरूपं ब्रह्ममाया तिष्ठतीति जानाति न वा। जानाति चेत्, ज्ञानमात्रस्य कथं ज्ञातृत्वं। न जानाति चेत्, अज्ञत्वात् कथमङ्गीकरोति। अपि च, यत्किञ्चिच्छक्तियोगं मायाङ्गीकारानन्तरमभ्युपेयते भवद्भिः, तत्पूर्व्वं मायाङ्गीकारानुगुण — इत्यादि।

**End.** प्राकृतहेयगुणराहित्येन निर्गुणत्वमिति विषयभेदवर्णनेन एकस्यैवावगमात् ब्रह्मद्वैविध्यं दुर्वचनमित्याचार्य्याणां मतं द्रष्टव्यम्।

**Colophon.** इति श्रीमदाचार्य्यमतरहस्यं सम्पूर्णम्।

विषयः। भगवद्रामानुजाचार्य्यमतोपपादनमुखेन अद्वैतवादखण्डनपुरःसरं विशिष्टाद्वैतवादसिद्धान्तनिरूपणम्।

---

**No. 3122.** सुबोधिनी, वैदिकखण्डम्। Substance, country-made paper, 13 × 5 inches. Folia, 33. Lines, 10 on a page. Extent, 215 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimgáṉj, Rámchandra Paṇḍit. Appearance, fresh. Prose. Correct.

**Subodhini.** A commentary on the Chapters of the Síddhánta-kaumudí, relating to Vedic grammar and accents. By Krishṇa Bhaṭṭa, son of Govardhana Bhaṭṭa.

**Beginning** सिन्दुरेण विराजितत्रिनयनं दिक्संख्यदोर्भिर्युतं
भक्तानुग्रहकारकं प्रमदया श्लिष्टं सदानन्दनम्।
अष्टाविंशतिवर्णकैश्च सततं यं चिन्तयन्ते जना-
स्तं देवं गणपं स्मरामि सततं चन्द्रार्द्धचूडं विभुम्॥
यस्तर्कादिसमस्ततन्त्रकमलव्रातप्रसादेष्विव
प्रत्यक्षप्रमितः परः किरणवानन्वर्थगोवर्द्धनः।
सोऽयं पण्डितमण्डलोद्भट + + वादीन्द्रवृन्दाग्रणीः

श्रीरामाङ्घ्रिनिवेशनः समजनि श्रीमौक्तिगोवर्द्धनः ॥

— — — — — — — — ।

श्रीमत्सिद्धान्तकौमुद्याः स्वरवैदिकखण्डयोः ।

नत्वा गुरुपदं कुर्वे टीकां कुर्वे सुबोधिनीम् ॥

— — — — — — — ।

इयता प्रबन्धेन लौकिकेषु शब्देष्वाख्यातेष्वपि वैदिकान्याख्यानमवशिष्यते । न चेदमप्रयो-जनं । रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति वदता भाष्यकारेण——— इत्यादि ।

End. करदित्यादिना विसर्जनीयस्य सत्वं । अभीवृध इति हकः सुवीति दीर्घः । एवं वृधा इत्यत्रापि सर्व्वोदाहरणे असदा × + + नमः ॥

Colophon. इति श्रीमन्मौतिकुलतिलकायमानश्रीगोवर्द्धनभट्टात्मजेन कृष्णभट्टेन वि-रचितायां सिद्धान्तकौमुदीव्याख्यायां सुबोधिन्यां वैदिकखण्डं समाप्तम् ॥

विषयः । सिद्धान्तकौमदीव्याकरणीयवैदिकप्रकरणस्य व्याख्यानम् ।

---

No 3123. सुबोधिनी । Substance, country-made paper, 14 × 5 inches. Folia, 14. Lines, 11 on a page. Extent, 446 ślokas. Character, Nágara, Date, ? Place of deposit, Ajimganj, Rámachandra Paṇḍit. Appearance, fresh. Prose and verse. Incorrect.

Subodhiní. A hand-book for the performance of the Homa ceremony for the pacification of the nine planets. By Ananta Bhaṭṭa.

Beginning. प्रतिज्ञा (?) वरणञ्चैव स्वस्तिपुण्याहवाचनं ।

आचार्य्यादेस्तु वरणं रक्षाकूर्चनबन्धनं ॥

ईशानमण्डलं कृत्वा प्रचारां स्थापनं तथा ।

अग्नेः प्रणयनं कृत्वा तत आवाहयेत् सुरान् ॥ इत्यादि ।

End. कृसरं शनये । छागमांसं राहवे । केतुभ्यश्चित्रौदनमित्यादि नैवेद्यमपि पूजनक्रमये देयमित्याख्यां पद्धतिमेन ।

Colophon. इति श्रीमदनन्तभट्टकृतौ सुबोधिनीहोमपद्धतिः समाप्ता ॥

विषयः । नवग्रहहोमपद्धतिकथनम् ।

---

**No. 3124. राधासहस्रनामस्तोत्रम् ।** Substance, country-made paper, 14 × 5 inches. Folia, 12. Lines, 9 on a page. Extent, 317 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Rámachandra Paṇḍit. Appearance, fresh. Verse. Incorrect.

**Rádhá-sahasranáma-stotra.** A hymn in praise of Rádhá. It comprises a thousand epithets, each called a name. It is an extract from the Rudra-jámala Tantra. S'iva is said to have first recited it for the edification of Nárada.

**Beginning.** एकदा देवदेवेशं शङ्करं लोकशङ्करम् ।
पप्रच्छ नारदो भक्त्या कैलासशिखरे स्थितम् ॥
श्रीनारद उवाच ।
भगवन् सर्व्वधर्म्माणां कर्म्मणाञ्च तथा पुनः ।
वेदानां सपुराणानामागमानां तथैव च ॥
सम्यग्रहस्यं जानासि त्वमेव परमो गुरुः ।
तस्योपायं हि त्वां प्रच्छे हरिभक्तिविवर्द्धनम् ॥ इत्यादि ।

**End.** अथ किं बहुनोक्तेन वर्णनेन पुनः पुनः ।
वशयेद्राधिकाकृष्णौ नित्यं पाठकरः पुमान् ॥

**Colophon.** इति श्रीसर्व्वाणममाहात्म्ये तन्त्रे रुद्रयामले शिवनारदसंवादे शिवप्रोक्तं श्रीराधासहस्रनामस्तोत्रम् सम्पूर्णम् ।

विषयः । राधाया नाममाहात्म्यकीर्त्तनव्याजेन तस्याः सहस्रनामकथनम् ।

---

**No. 3125. रामार्चनसोपानः ।** Substance, country-made paper, 13 × 5 inches. Folia, 50. Lines, 10 on a page. Extent, 918 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Rámachandra Paṇḍit. Appearance, new. Prose and verse. Incorrect.

**Rámárchchana-sopána.** A manual for the worship of Ráma, giving all the necessary rituals and an introduction in praise of his divinity. By S'ivalála Páṭhaka.

**Beginning.** सीतारामपदाब्जप्रगलन्मकरन्दपानलुब्धोऽहम् ।
रामार्चनप्रयोगं वक्तुं गुरुपदपङ्कजं नौमि ॥
तत्र तावज्ज्ञाराध्यपादगुर्व्वनुमतः साधको रात्रे——इत्यादि ।

End. एवं संपूज्य भूतेशं मिश्रितैरुपचारकैः ।
एकाकी निस्पृहः शान्तो विहरेद्ग्रामसत्परः ॥

Colophon. ॐतत्सदिति श्रीमज्ज्ञानकीरमणचरणकमलमकरन्दलुब्धेन पाठकशिवलालशर्म्मणा विरचितः श्रीरामार्च्चनसोपानः समाप्तिमगमत् ।

विषयः । रामचन्द्रस्य माहात्म्यादिकथनपुरःसरं तत्पूजायाः प्रयोगादिकथनम् ।

---

No. 3126. शिवपूजासंग्रहः । Substance, country-made paper, 13 × 5 inches. Folia, 47. Lines, 9 on a page. Extent, 1,110 ślokas. Character, Nágara. Date, ? Place of deposit, A'jimganj, Rámachandra Paṇḍit. Appearance, fresh. Prose and verse. Incorrect.

**S'ivapújá-sangraha**. Rituals for the worship of S'iva; and a dissertation in praise of the merits of such worship. By Vallabhendra Sarasvatí.

Beginning ॐ भुसुण्ड कालाग्निरुद्रं भस्मस्नानविधिं ब्रवीति होवाच ।
— — — — — —तत्र श्लोकाः ।
भस्ममुष्टिं समादाय संहितां मन्त्रसंहिताम् ।
मस्तकात् पादपर्य्यन्तं मलस्नानं पुरोदितम् ॥
तन्मन्त्रेण च कर्त्तव्यं विधिस्नानं समाचरेत् । इत्यादि ।

End. यस्तु शङ्करनिर्म्माल्यं पादेनाक्रमते नरः ।
षष्टिवर्षसहस्राणि तिर्य्यग्योनिषु जायते ॥

Colphon इति श्रीवल्लभेन्द्रसरस्वतीकृतशिवपूजासंग्रहे पञ्चमोऽध्यायः ।

विषयः । शिवपूजाविधानकथनमुखेन शिवमाहात्म्यादिकथनम् । शिवनाममाहात्म्यादिकीर्त्तनञ्च ।

---

No. 3127. सहस्रचण्ड्यादिविधिः । Substance, country-made paper, 10 × 6 inches. Folia, 20. Lines, 10 on a page. Extent, 488 ślokas. Character, Nágara. Date, ? Place of deposit, Jiyáganj, Jitendriya Bhaṭṭáchárya. Appearance, new. Prose and verse. Incorrect.

**Sahasra-chaṇḍyádi-vidhi**. The rules for reading the Chaṇḍí section of the Márkaṇḍeya Puráṇa and the adoration of the goddess

Chaṇḍí. By Kamalákara Bhaṭṭa, brother of Dinakara Bhaṭṭa, son of Rámakrishṇa Bhaṭṭa, grandson of Náráyaṇa Bhaṭṭa, and great-grandson of Rámeśvara Bhaṭṭa.

**Beginning.** नत्वा गणेश्वरं देवीं पितरौ राघवं शिवम् ।
रामकृष्णतनूजेन कमलाकरशर्म्मणा ॥
डामरं कामधेनुं च योगिनीतन्त्रमेव च ।
वाराहीतन्त्रमन्यांश्च ग्रन्थानालोच्य यत्नतः ॥
सप्तशतीचण्डिकायाश्च शतचण्ड्यास्तथैव च ।
नवार्णन्यासविधिना प्रयोगः प्रोच्यतेऽधुना ॥

तत्र यजमानः शुभदेशे मण्डपं चिकीर्षुः गणेशकुलदेवतास्वधानां पूजनं कृत्वा शतचण्डीं षोडशहस्तं सहस्रचण्डीं विंशतिहस्तं मण्डपं प्रसाध्य ।——इत्यादि ।

**End.** विशेषस्तु मत्कृते निर्णयसिन्धौ नवरात्रनिर्णये ज्ञेय इति ।

**Colophon.** इति श्रीमत्पदवाक्यप्रमाणपारीणरामेश्वरभट्टसूरिसूनुनारायणभट्टसुतमीमांसकरामकृष्णभट्टात्मजदिनकरभट्टानुजकमलाकरभट्टकृतसप्तशतचण्ड्यादिविधिः परिपूर्णः ॥

विषयः । सप्तशतीचण्डीशतचण्ड्यादिपाठप्रयोगादिकथनम् ।

---

No. 3128. योगशतकं, सटीकम् । Substance, country-made paper, 13 × 4 inches. Folia, 22. Lines, 14 on a page. Extent, 913 ślokas. Character, Nágara. Date, ? Place of deposit, Jiyáganj, S'ítánátha Paṇḍit. Appearance, fresh. Text, verse, commentary, prose. Generally correct.

**Yoga-śataka.** A hundred recipes for the cure of fever and other diseases by simple remedies. By S'rípaṇḍita.

**Beginning.** टीकायाः,—

श्रीवर्द्धमानं प्रणिपत्य मूर्द्ध्ना जनस्य सर्व्वस्य निरोगहेतोः ।
श्रीपूर्णसेनेन सुबोधनार्थं प्रारभ्यते योगशतस्य टीका ॥

अथ जीवा अादिनिधनाः । तेषां जीवानामाहारमन्नाद्युक्तशीतातपवर्षाणि विषमाशनानि । इत्यादि ।

मूलस्य,—

कृत्स्नस्य तन्त्रस्य गृहीतधाम्ना चिकित्सितार्थप्रवृत्तस्य दूरात् ।
विदग्धवैद्यप्रतिपूजितस्य करिष्यते योगशतस्य यत्नः ॥
तेषां क्रिया प्रतिदिनं क्रियतां भिषग्भि-

रायुर्व्वेदे+नवरत्नसुदेशसात्रम् ?।
विज्ञाय सत्प्रकृतिभेषजतत्त्वमार्थं
ज्ञात्वा तथान्यदपि कर्म्मगतं च शास्त्रे॥ इत्यादि।

End. मूलस्य,—

गुणाधिकं योगशतं निबध्य प्राप्तं मया पुण्यमिहोत्तमञ्च।
नानाप्रकारामयनौद्भूतं इत्स्नं जगत् तेन भवत्वरोगम्॥

टीकायाः,—

एतानि चिह्नानि च तच्छतानां सर्व्वोमया — — — — चैकनाम्नां कथित् प्राग्निनिरोधपूर्व्वसंज्ञान्तरं येन तु संप्रयाति॥

Colophon. इति श्रीश्रीपण्डितविरचितं योगशतकं समाप्तम्।
इति योगशतकपञ्चटीका सम्पूर्णा।

विषयः। ज्वरादिषु रोगेषु सर्व्वेषु संक्षेपण मुष्टियोगकथनम्।

---

No. *3129. अष्टाङ्गहृदयम्। (सूत्रस्थानम्।) Substance, country-made paper, 12 × 4 inches. Folia, 125. Lines, 8—9 on a page. Extent, 1,976 ślokas. Character, Nágara. Date, ? Place of deposit, Jiyáganj, Sítánátha Bhaṭṭáchárya. Appearance, old. Verse, interspersed with a few words in prose here and there. Incorrect.

**Ashṭáṅga-hṛidaya.** A comprehensive treatise on the Hindu system of medicine. By Vág-bhaṭa, whose name is not unfrequently written Vábhaṭa or Váhbhaṭa. The name of the work means the "essence of the eight-membered work," implying that it contains the substance of the original text of Suśruta, which comprises, in eight chapters, the surgical lectures of Dhanvantari, as also the substance of the medical lectures (also in eight chapters) of Punarvasu. The work of the latter is no longer extant. It is obvious that the work under notice is later than Suśruta, but it is widely known under the name of Vábhaṭa, and is highly esteemed, by Indian physicians. It has been also commented upon by several exegetes. Portions of the text have been printed three or four times, and an excellent edition with the commentary of Aruṇadatta and a Bengali translation is now being printed in Calcutta by Kavirája Vijayaratna Sena. Thirty parts of the edition have already been published. The MS. under notice contains only the first chapter of the work, and is devoted to Materia Medica.

Beginning. अथात आयुष्कामीयमध्यायं व्याख्यास्यामः।
इतीह स्माहुरात्रेयादयो महर्षयः।
आयुः कामयमानेन धर्म्मार्थसुखसाधनः।
आयुर्व्वेदोपदेशेषु विधेयः परमादरः॥
ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिमजिग्रहत्।
सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान् मुनीन्॥
अग्निवेशादिकांस्ते तु पृथक् तन्त्राणि तेनिरे॥
तेभ्योऽतिविप्रकीर्णेभ्यः प्रायः सारतरोच्चयः।
क्रियतेऽष्टाङ्गहृदयं नातिसंक्षेपविस्तरम्॥ इत्यादि।

End. अतिदग्धे + तं कुर्य्यात् सर्व्वं पित्तविसर्पवत्।
स्नेहदग्धे भृशतरं रूक्षं तत्र तु योजयेत्॥
समाप्यते स्थानमिदं हृदयस्य + + यवत्।
अत्रार्थाः सूचिताः सूक्ष्माः प्रतन्यन्ते हि सर्व्वतः॥

Colophon. इति सूत्रस्थाने क्षाराग्निकर्म्मविधिरध्यायस्त्रिंशः। श्रीः।

विषयः। अष्टाङ्गलक्षणादिकथनं। वायुपित्तकफानां लक्षणतत्कार्य्यादिनिरूपणं। ऋतुचर्य्याविधिकथनं। रोगानुत्पादनीयविधिनिरूपणं। अथ द्रव्यगुणकथनं। तत्र तोयवर्गकथनं। क्षीरवर्गकथनं। इक्षुवर्गकथनं। तैलवर्गकथनं। मद्यवर्गकथनं। अन्नवर्गकथनं। तत्र शूकधान्यवर्गकथनं। शिम्बीधान्यवर्गकथनं। कृतान्नवर्गकथनं। मांसवर्गकथनं। शाकवर्गकथनं। फलवर्गकथनं। औषधिवर्गकथनं। विषादितः अन्नादिसंरक्षणविधिकथनं। शरीररक्षाविधिकथनं। भोजनविधिकथनमुखेन तन्मात्रादिनिरूपणं। षड्रसादिनिरूपणं। अथ दोषनिरूपणं। तत्र तत्र तत्तदुपक्रमनिरूपणञ्च। अथ भेदनस्वेदनादिविधिकथनं। वस्तिविधिकथनं। नस्यविधिकथनं। धूमविधिकथनं। गण्डूषादिविधिकथनं। आश्चोतनाञ्जनविधिकथनं। तर्पणपुटादिविधिकथनं। अथ यन्त्रविधिकथनं। अथ शस्त्रविधिकथनं। शिराव्यधविधिकथनं। शल्यहरणविधिकथनं। शस्त्रप्रयोगादिविधिकथनं। अथ क्षाराग्निकर्म्मविधिकथनञ्च। इति शम्।

---

**No. 3130. वृहत्कल्पसूत्रम्।** Substance, country-made paper, 13 × 4 inches. Folia, 30. Lines, 8 on a page. Extent, 522 ślokas. Character, Nágara. Date, ? Place of deposit, Jiyáganj, Váluchara, Kharataragachchhíya Pancháyatapausála. Appearance, fresh. Prose. Correct. Mágadhí.

**Vṛihat-kalpa-sútra.** A Jaina text on Áchára. The work named *Kalpa Sútra* is a life of Vardhamána Jina.

Beginning ॐ सर्व्वज्ञाय नमः ।

लोकम्प इति ग्रंथाणवा । निग्रंथीणवा । भामे तालपलं वेश्वभिषे पडिग्गाहित्तोए कप्पति ˙ नग्रंथाणवा । निग्रंथीणवा । भामे तालपलं वेभिषे । —— इत्यादि

End. णिविसमाणकप्पठिइ णिविट्ठमाणकप्पठिइ । जिणे कप्पठिइ । थेरेकप्पठिइ + तिवेमि ॥

Colophon. इति श्रीकपपरसक्षट्टो उद्देसउ सम्मत्तो ॥

श्रीवृहत्कल्पसूत्रं समाप्तं ।

विषयः । अतीचारमलिनस्य साधोः विशुद्धिमापादयितुं जिनानुशासनेन प्रायश्चित्त-निरूपणं । तत्र क्रमेण सम्यग्दृष्टि-मासादन-क्षायोपशमिकादिनिरूपणं । सागारिकादिस्वरूप-कथनं । पुलाकादिनिरूपणं । सूत्रादिस्वरूपकथनं । षड्विधप्रस्तारनिरूपणं । चित्तविगतादि-स्वरूपकथनं । साधूनां विहिताविहिताचारनिरूपणञ्च । इति शम् ।

---

No. 3131. वृहत्कल्पवृत्तिः । Substance, country-made paper, 14 × 5 inches. Folia, 816. Lines, 15 on a page. Extent, 47,401 ślokas. Character, Nágara. Date, Sm. 1529. Place of deposit, Váluchara, Jiyáganj, Kharataragachchhiya Pancháyatapausála. Appearance, old. Prose. Incorrect. Partly Sanskrit and partly Mágadhi.

**Vrihat-kalpa-vritti.** A gloss on the work noticed above. By Kshemakírti Súrí.

Beginning प्रकटीकृतनिःश्रेयसपदहेतुस्थविरकल्पजिनकल्पं ।
नत्वाशेषनरामरकल्पितफलकल्पतरुकल्पं ॥
नत्वा श्रीवीरजिनं गुरुपदकमलानि बोधविपुलानि ।
कल्पाध्ययनं विवृणोमि लेशतो गुरुनियोगेन ॥
भाष्यं क्व चातिगम्भीरं क्व चाहं जड़शेखरः ।
यद्वा जानते पूज्या ये मामेवं नियुञ्जते ॥
श्रद्धुतगुणरत्ननिधौ कल्पे सहायकं महातेजाः ।
दीप इव तमसि कुरुते जयति यतीशः स चूर्णिकृत् ॥

इह शिष्याणां मङ्गलवुद्धिपरिग्रहाय शास्त्रस्यादौ मध्येऽवसाने च अवश्यं मङ्गलमभि-धातव्यं । —— इत्यादि ।

End. योग्यविनेयानां दीपनाममालस्येन .
व्याख्यानं करोति तस्यैव द्वारम् ।·

**Colophon** इति हरितत्कल्पद्रुमो षष्ठ उद्देशकः समाप्तः ।

अतः परं श्लोकेन ग्रन्थकर्तृपरिचयो वर्णते। स च विलुप्ताक्षरतया सम्यङ् न पठितुं शक्यते। संवत् । १५१९ ॥

विषयः। हरितकल्पद्रुमाभिधानजैनग्रन्थस्य व्याख्यानम् ।

---

**No. 3132** कृत्यतत्त्वं, वा प्रयोगसारः। Substance, country-made paper, 14 × 4 inches. Folia, 155. Lines, 7 on a page. Extent, 4,716 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, old. Prose and verse. Correct.

**Kritya-tattva** ALIAS **Prayogasára.** A Calendar of the fasts, festivals and ceremonies appropriate for each month in the year, and the rituals thereof. By Krishṇadeva Smártavágísa, son of Náráyaṇa of the Vandyaghaṭíya sept.

**Beginning.** वेदान्तवेद्यं श्रीरामं प्रणम्य सम्मुदे मया।
क्रमात् द्वादशमासेषु कृत्यतत्त्वं प्रवक्ष्यते ॥
नारायणो वन्द्यकुलाब्जजन्मा तस्यात्मजः श्रीयुतकृष्णदेवः।
प्रणम्य रामस्य पदारविन्दं प्रयोगसारं कुरुतेऽल्पसम्मतं ॥
तिथितत्त्वेषु सम्बेयं प्रमाणचास्य कोविदैः।
वैशाखादिक्रमेणैव प्रयोगोऽत्र निबध्यते ॥
अथ वैशाखकृत्यं। पद्मपुराणं।
तुलामकरमेषेषु प्रातःस्नानं विधीयते।
हविष्यं ब्रह्मचर्यञ्च महापातकनाशनं ॥ इत्यादि।

**End.** ततो मूलमन्त्रं यथाशक्ति जप्त्वा चामीरं दत्वा चप्रजनः शनैः शनैः दोलयित्वा दक्षिणाच्छिद्रावधारणं कृत्वा ब्राह्मणान् भोजयेत्। इति दोलयात्रापद्धतिः समाप्ता।

**Colophon.** इति श्रीकृष्णदेवस्मार्तवागीशकृते कृत्यतत्त्वे प्रयोगसारे दोलयात्रापद्धतिः। समाप्तोऽयं ग्रन्थः।

विषयः। द्वादशमासेषु कृत्यविशेषविधानकथनपूर्वकं तत्र तत्र प्रयोगकीर्तनं। तत्र वैशाखकृत्यनिरूपणं। संक्रान्तिनिरूपणं। युगाद्याकथनं। मन्वन्तराकथनं। पिपीतकीविधानं यवश्राद्धविधानं। ज्यैष्ठकृत्यनिरूपणं। तत्र सावित्रीव्रतविधानं। अरण्यषष्ठीविधानं। दशहरा-विधानं। महाज्यैष्ठीविधिकथनं। आषाढकृत्यकथनं। तत्र नवोदकश्राद्धविधिः। रथयात्रादि-निरूपणं। चातुर्मास्यव्रतविधिः। हरिशयनविधिः। श्रावणकृत्यनिरूपणं। तत्र नागपञ्चमी-

विधानं । भाद्रकृत्यनिरूपणं । तत्र जन्माष्टमीविधिः । अघोराचतुर्द्दशीविधिः । कौशीचतुर्द्दशी-विधिः । आलोकामावास्याव्रतविधिः । नष्टचन्द्रविधिः । कुक्कुटीव्रतविधिः । दूर्व्वाष्टमीव्रत-विधिः । तालनवमीव्रतविधिः । श्रावणद्वादशीकथनं । शक्रोत्थानविधानं । अनन्तव्रतविधिः । अगस्त्यार्घदानविधिः । आश्विनकृत्यनिरूपणं । तत्र प्रेतपक्षश्राद्धविधिः । मघात्रयोदशीश्राद्ध-विधिः । नवान्नश्राद्धविधिः । दुर्गोत्सवविधानं । कोजागरकृत्यनिरूपणं । कार्त्तिककृत्यनिरूपणं । तत्र विषुवस्नानविधिः । प्रातःस्नानविधिः । तुलसीदानविधिः । हविष्यान्नभोजनादिविधिः । मत्स्यादिभक्षणनिषेधः । भूतचतुर्द्दशीविधिः । प्रेतोपाख्यानं । दीपान्विताविधिः । कालीपूजा-विधिः । द्यूतप्रतिपद्विधिः । भ्रातृद्वितीयाविधिः । गोष्ठाष्टमीविधानं । जेतायुगाद्याविधिः । वकपञ्चमन्वन्तराविधिः । उत्थानविधिः । कार्त्तिकीपूर्णिमा । काम्यवृषोत्सर्गविधिः । मार्गशीर्ष-कृत्यनिरूपणं । तत्र रोहिणीनक्षत्रयुक्तप्रतिपत्स्नानविधिः । पौषकृत्यनिरूपणं । तत्र अष्टका-विधिकथनं । माघकृत्यनिरूपणं । तत्र प्रातःस्नानविधिकथनं । मूलकनिषेधः । रटन्तीस्नान-विधिः । श्रीपञ्चमीकृत्यनिरूपणं । षट्पञ्चमीव्रतविधिः । शीतलषष्ठीविधानं । माघीसप्तमी-विधिः । विधानसप्तमीविधिः । आरोग्यसप्तमीविधिः । भीष्माष्टमीविधिः । सामान्यैकादशी-विधिः । फाल्गुनकृत्यनिरूपणं । तत्र शिवरात्रिविधानं । गोविन्दद्वादशीविधिः । चूतपान-विधिः । चैत्रकृत्यनिरूपणं । तत्र घण्टाकर्णपूजाविधानं । शीतलापूजाविधानं । स्कन्दषष्ठी-विधिः । वारुण्यादिनिरूपणं । अशोकाष्टमीकथनं । ब्रह्मपुत्रस्नानविधिः । श्रीरामनवमीविधिः । दोलयात्राविधानकीर्त्तनञ्च ।

---

**No. 3133.** शुद्धिसारः । Substance, country-made paper, 14 × 4 inches. Folia, 101. Lines, 7 on a page. Extent, 2,625 slokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágísa. Appearance, old. Prose and verse. Correct.

**S'uddhi-sára** A digest of Smriti rules regarding impurity of the person caused by a death, or a birth in one's gotra, and the duties appropriate on such occasions. By Krishṇadeva Smártavágís'a, of the Vandyaghaṭíya sept.

**Beginning.** वेदान्तवेद्यं श्रीरामं प्रणम्य सम्मुदे मया ।
बालानां सुखबोधाय शुद्धिसारः प्रतन्यते ॥

तत्र शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन शूद्रस्तु त्रिंशता दिनैः । इत्यादि । ·

**End.** अतः पूर्व्वाधिकारिसत्त्वेऽपि पराधिकारिसत्ता सिध्यति, न तु स्त्रीत्वादि-

कृतेव असिद्धा। तेन पूर्व्वाधिकारिणा पुनः पर्य्यनरदाद्यादिकं न करणीयं। तत्र पूर्व्वं सर्व्वेऽधिकारिणोऽवश्यं कुर्य्युः।

Colophon. इति वन्द्यघटीयश्रीकृष्णदेवस्मार्त्तवागीशभट्टाचार्य्यकृतौ शुद्धिसारः समाप्तः।

विषयः। शौचाशौचलक्षणं। गर्भस्रावाशौचकथनं। बालाद्यशौचनिरूपणं। स्त्र्यशौचनिरूपणं। सपिण्डाद्यशौचनिरूपणं। मातामह्याद्यशौचनिरूपणं। मृत्युविशेषाशौचनिरूपणं। तत्र तत्र प्रायश्चित्तनिरूपणञ्च। विदेशस्थाशौचनिरूपणं। दशविधाशौचनिरूपणं। शवानुगमनादिव्यवस्था। अन्नास्पृश्यत्वनिरूपणं। आचारलवणाशित्वनिरूपणं। अशौचसङ्करव्यवस्था। सहमरणानुमरणव्यवस्था। सापिण्ड्यनिरूपणं। अशौचे वर्ज्जनीयानि। रजस्वलाशौचनिरूपणं। मृताशौचव्यवस्था। सम्पर्कत्यनिरूपणं। मृतकृत्यं। पर्य्यनरदाहविधिः। अशौचान्तदिनकृत्यं। तद्द्वितीयदिनकृत्यं। उभयतोमुखीदानविधानं। हरिवंशदानविधिः। शालग्रामदानविधिः। विपत्तारकदानविधिः। वृषदामादानविधिः। प्रेतश्राद्धक्रमकथनं। सपिण्डीकरणविधिः। स्त्रीसपिण्डनविधिः। प्रेतत्वविवेचनञ्च। इति।

---

**No. 3134.** प्रायश्चित्तकौमुदी। Substance, country-made paper, 14 × 4 inches. Folia, 92. Lines, 6 on a page. Extent, 2,033 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, old. Prose and verse. Correct.

**Práyaśchitta-kaumudí** A digest of the laws and rituals for expiations of sins and transgressions. By Krishṇadeva Smártavágís'a. This is different from the work of this name noticed under No. 1984. (*ante*, Vol. VI, p. 5.)

**Beginning.** नमस्कृत्याखिलैर्व्वेदैर्वेद्यं श्रीपरमेश्वरं।
मन्यते कृष्णदेवेन प्रायश्चित्तस्य कौमुदी॥

अथ प्रायश्चित्तलक्षणं। तत्र पापक्षयमात्रकामनाजन्यकृतिविषयः पापक्षयसाधनं कर्म्म प्रायश्चित्तं। पापक्षयस्वर्गोभयकामनाजन्यकृतिविषयस्वरमणाश्वमेधादिवारणाय मात्रपदं। इत्यादि।

**End.** आसनं वसनं शय्या जायापत्यं कमण्डलुः।
आत्मनः शुचिरेतानि न परेषां कदाचन॥
अन च हरेर्नाम हरेर्नाम हरेर्नामैव केवलं।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा॥

**Colophon.** इति श्रीयुक्तकृष्णदेवसार्व्वभौमभट्टाचार्य्यकृता प्रायश्चित्तकौमुदी समाप्ता ॥

विषयः। पापलक्षणविचारः। अतिपातकमहापातकनिरूपणं। नवधासंसर्गनिरूपणं। अनुपातकोपपातकनिरूपणं। जातिभ्रंशकरपापकथनं। सङ्करीकरणविवेचनं। अपात्रीकरणनिरूपणं। मलावहनिरूपणं। प्रकीर्णकं। तन्त्रताविचारः। प्रसङ्गविवेचनं। प्रायश्चित्तद्वैविध्यनिरूपणं। अनुपदव्यवस्था। धेनुमूल्यादिनिरूपणं। प्रायश्चित्तपूर्व्वाहकृत्यनिरूपणं। ज्ञानकृतनिरूपणं। गोवधप्रायश्चित्तं। शूद्रस्वामिकादिगोवधप्रायश्चित्तं। गर्भिन्यादिवधे विशेषकथनं। एकप्रयत्ननिष्पाद्यानेकगोवधप्रायश्चित्तं। अज्ञानकृतबहुजनकृतगोवधप्रायश्चित्तं। मुण्डने विशेषकथनं। अपालनकृतादिप्रायश्चित्तं। अस्थिभङ्गादिप्रायश्चित्तं। अण्डमोचणादिप्रायश्चित्तं। गोमांसखादके गोविक्रयादिप्रायश्चित्तं। गोवधापवादः। व्रतानुकल्पनिरूपणं। पराकव्रतनिरूपणं। परिसंख्या। गोपने प्रायश्चित्तं। अष्टम्यादौप्रायश्चित्तनिषेधः। अतिपातकादिप्रायश्चित्तं। गर्भवधादिप्रायश्चित्तं। सुरापानप्रायश्चित्तं। सुवर्णस्तेयप्रायश्चित्तं। गुर्व्वङ्गनागमनप्रायश्चित्तं। पतितसंसर्गप्रायश्चित्तं। शूद्रवधप्रायश्चित्तं। स्त्रीवधप्रायश्चित्तं। भार्य्यायां मातृत्वादिवदतः प्रायश्चित्तं। पितृस्वसादिकन्यापरिणयप्रायश्चित्तं। उपवीतच्छेदनप्रायश्चित्तं। पर्व्वसु स्त्रीगमने प्रायश्चित्तं। श्राद्धदिने मैथुनप्रायश्चित्तं। तैलाभ्यङ्गादेर्मूत्रोच्चारादौ प्रायश्चित्तं। उच्छिष्टभक्षणप्रायश्चित्तं। अशौचान्नभोजनप्रायश्चित्तं। मृत्तिकादिभोजनप्रायश्चित्तकथनञ्च।

---

**No. 3135.** महावाक्यरत्नावली। Substance, country-made paper, 5 × 8 inches. Folia, 62. Lines, 5 on a page. Extent, 658 ślokas. Character, Nágara. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, old. Verse. Correct.

**Mahávákya-ratnávalí.** A collection of one thousand and eight maxims taken from the Upanishads, of which one hundred and eight are named. By Rámachandrendra, disciple of Vásudevendra Sarasvatí.

**Beginning.** ॐ श्रीमद्विद्याधिष्ठानपरमहंससद्गुरुश्रीरामचन्द्राय नमः।
यो विध्यादिविदेहान्तमहावाक्यार्थविग्रहः।
श्रीरामचन्द्ररूपाय तस्मै भूमात्मने नमः॥
यः पूज्यो यतिभिः स्वधर्म्मनिरतैर्ध्यायन्ति यं योगिनो
येनात्तं निगमान्तवेद्यमनिशं यस्मै हविर्दीयते।
यस्मात् स्थावरजङ्गमं समभवद्यस्यांशमात्रो वरो
यस्मिन् लीनमिदं प्रणौमि सततं तं वासुदेवं गुरुं॥ इत्यादि।

**End.** यन्महावाक्यसिद्धान्तं मुक्तचित्तैकगोचरं ।
वासुदेवेन्द्रसंज्ञं तं नौमि सर्व्वात्मकं महः ॥

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्यवासुदेवेन्द्रसरस्वतीचरणकमलमकरन्दरसास्वादरामचन्द्रेन्द्रप्रथितेशाद्यष्टोत्तरशतोपनिषत्सारसङ्ग्रहभूताष्टोत्तरसहस्रमहावाक्यरत्नावली सम्पूर्णा ।

विषयः । महावाक्यरत्नावलीपदयोजना । अष्टोत्तरशतोपनिषन्नामकीर्त्तनं । पञ्चशान्तिकथनं । साङ्केतिकविधिवाक्यानि । बन्धमोक्षवाक्यानि । विद्वन्निन्दावाक्यानि । जगन्मिथ्यावाक्यानि । उपदेशवाक्यानि । जीवब्रह्मैक्यवाक्यानि । मननवाक्यानि । जीवन्मुक्तिवाक्यानि । स्वानुभूतिवाक्यानि । समाधिवाक्यानि । अष्टस्वरूपवाक्यानि । पुंलिङ्गस्वरूपवाक्यानि । स्त्रीलिङ्गस्वरूपवाक्यानि । नपुंसकलिङ्गस्वरूपवाक्यानि । आत्मस्वरूपवाक्यानि । सर्व्वस्वरूपवाक्यानि । ब्रह्मस्वरूपवाक्यानि । अवशिष्टवाक्यानि । फलवाक्यानि । विदेहमुक्तिवाक्यानि च ।

---

**No. 3136.** किरणावली । Substance, country-made paper, 5 × 8, inches. Folia, 70. Lines, 11 on a page. Extent, 2,887 ślokas. Character Nágara. Date, ? Place of deposit, S'ántipura, Kálidása Vídyávágíśa. Appearance, old. Prose. Correct.

**Kiraṇávalí.** A gloss on the work noticed under the next preceding No. By Brahmayogi, disciple of Vásudevendra Sarasvatí.

**Beginning.** अनन्तशक्तिसन्दोहपूर्णस्य परमात्मनः ।
विघ्नविध्वंसिनीं शक्तिं गणराजमुपास्महे ॥

हरिः ॐ । श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुश्रीरामचन्द्राय नमः ।

ईशाद्युपनिषत्प्रोद्यन्महावाक्यकलेवरं ।
विकलेवरकैवल्यं रामचन्द्रपदं भजे ॥
विश्वाधिष्ठानसन्मात्रवासुदेवेन्द्रमूर्त्तये ।
श्रीदेशिकस्वरूपाय परस्मै ब्रह्मणे नमः ॥
नत्वा श्रीदेशिकं ब्रह्म मात्रानन्दाप्तिसिद्धतां ।
महावाक्यरत्नजातकिरणावलिरीर्य्यते ॥

इह खलु परमदयाकलेवर—इत्यादि ।

**End.** यत् तेजोमात्रमवशिष्यते तत् स्वमात्रतया नौमि तत्पर्य्यवसन्नो भवामीत्यर्थः ।

**Colophon**. इति श्रीवासुदेवेन्द्रशिष्येण ब्रह्मयोगिना ।
महावाक्यरत्नजातकिरणावलिरीरिता ॥

विषयः । रामचन्द्रेन्द्रसङ्कलितमहावाक्यरत्नावल्या व्याख्यानं ।

---

**No 3137**. भजनक्रमसङ्ग्रहः । Substance, country-made yellow paper, 11 × 4 inches. Folia, 55. Lines, 5 on a page. Extent, 824 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágísa. Appearance, fresh. Prose and verse. Correct.

**Bhajanakrama-sañgraha**. Rules for the adoration of Krishṇa and Vaishṇava divinities generally, according to the principles inculcated by Chaitanya. By Rádhámohana Gos'vámí, of the Advaita sept.

**Beginning**. वन्दे श्रीकृष्णचैतन्यमद्वैताद्वैतविग्रहं ।
परमानन्दसन्दोहविग्रहं नित्यमीश्वरं ॥
श्रीमदद्वैतवंशेन राधामोहनशर्म्मणा ।
क्रियते श्रीकृष्णनित्यभजनक्रमसङ्ग्रहः ॥

अथ तमेव विदित्वाऽतिमृत्युमेतीतिश्रुत्या परमेश्वरमात्रविषयकज्ञानस्यैव संसारमोचनहेतुत्वमित्यादि ।

**End**. एवमादिवचनैः + प्रागुक्तवचनैश्च वृन्दावनादिकमेव नित्यलीलास्पदं भगवतः केचिद्वर्णयन्ति तदप्यनुसन्धेयमिति शम् ।

**Colophon**. इति कलियुगपावनावतारश्रीमदद्वैतवंश्यश्रीराधामोहनगोस्वामिभट्टाचार्य्यविरचितः श्रीकृष्णभजनक्रमसंग्रहः समाप्त इति ।

विषयः । भगवद्विषयकज्ञानस्यैव मोक्षहेतुत्वं तज्ज्ञानञ्च तन्मात्रभजनेनैव जायते—इति निरूपणं । निर्व्वेदप्राप्तिपर्य्यन्तं कर्म्मणामनुष्ठेयता—इति निरूपणं । शान्तदासादिभेदैन भक्तानां पञ्चविधत्वकथनं । तत्र शान्तभक्तानां भगवद्भजनक्रमकीर्त्तनं । सायुज्यमुक्तिकामेन श्रीकृष्णाभिन्नतया स्वात्मा चिन्तनीय इति निर्णयः । प्रातःकृत्यविधानादिकीर्त्तनं । भगवद्दर्शनस्यावश्यकर्त्तव्यता । कुत्र वाऽस्य पूजाया आवश्यकत्वमिति तन्निरूपणं । ब्रह्मलक्षणं । तच्छरीरनिरूपणादिकं । निर्व्विशेषत्वेन उपासनापेक्षया भगवत्त्वेन आराधनस्य श्रेष्ठत्वनिरूपणं । भगवन्मूर्त्तीनां सर्व्वासामेव शान्तस्य भजनीयत्वकीर्त्तनं । शान्तेन श्रीकृष्णस्य रहस्यलीलाश्रवणादिकं पौरुषकामरागादिशून्यतया क्रियते चेन्न दोषायेतिकीर्त्तनं । शान्तभक्तद्वैविध्यकथनञ्च । दासभक्तानां भगवद्भजनक्रमकथनं । प्रेमभक्तिनिरूपणं । शान्तदासयोः भजनस्यावान्तरभेदनिरूपणं । श्रीकृष्णस्य रासलीलादिश्रवणं कामरागराहित्येन दासैः कर्त्तव्यमितिनिर्णयः । दासानां मुक्तिलाभ-

कथनं। भगवतः अवतारबाउल्यप्रयोजनकथनं। श्रीसीताप्रभृतीनां तच्छक्तीनां मातृत्वबुद्ध्या सेवनादिकं कर्त्तव्यमितिकथनं। भगवत्परिकरदासीष्वपि भगिनीत्वमारोप्यमितिकीर्त्तनञ्च। दासैश्च भगवति पितृत्वबुद्धिः न कार्य्या इति निरूपणं। तेषां मुमुक्षुत्वे तत्प्रकारकथनं। मुमुक्षूणां समाधिभेदनिरूपणं। गुणमायायोगमायादिनिरूपणं। सख्यवात्सल्यमाधुर्य्यभाव-कथनं। तत्रापि इदानीन्तनानां श्रीकृष्णे परमेश्वरत्वबुद्धिरावश्यकीति तन्निर्णयः। श्रीकृष्णस्य कौमारलीलामाहात्म्यकथनं। कौमारवर्णनादिकं। तेषु ध्यानभेदकथनं। ऐश्वर्य्यज्ञानवतां भगवति कथं वात्सल्यरागरुचिर्भवेदिति तन्निरूपणञ्च।

वत्सलभक्तानां भजनक्रमकथनं। सख्यभजनक्रमकथनं। तत्त्रैविध्यनिरूपणं। शान्ता-दीनां चतुर्णामपि भक्तानां साधारणतः कर्त्तव्यनिर्देशः। श्रीकृष्णस्य पौगण्डलीलाकैशोर-लीला च। उज्ज्वलभक्तानां भजनक्रमकथनं। तत्र ध्यानादिकथनं। साधनावस्थायां तद्भाव-लब्धये वैधार्च्चनादीनामावश्यकताकथनं। श्रवणकीर्त्तनादीनां नित्यानुष्ठेयत्वनिरूपणं। वात्-सल्ये माधुर्य्ये च भावे स्वात्मनि स्त्रीत्वमारोप्यैव भजनं कर्त्तव्यमितिकीर्त्तनञ्च।

भजनसिद्धानां मुमुक्षूणां तदितरेषाञ्च प्राप्यस्याननिरूपणं। यशोदानन्दादीनां वैकुण्ठ-प्राप्तिविवरणं। भगवल्लीलानां नित्यताकथनस्य अभिप्रायाभिधानं। कासाञ्चिद्गोपीनां मोक्षप्राप्तिकथनं। चैतन्यसम्प्रदायानुसारिणां नयेन श्रीकृष्णरूपतत्स्थानादिकीर्त्तनं। वैकुण्ठ-गोलोकादीनां वृन्दावनापरनामधेयताभिधानं। गोलोकशब्दनिर्वचनं। भगवत्प्रियाणां व्रजाङ्गनानां न गोपजातिमत्त्वेन गोपीत्वं किन्तु अन्यथैवेतिनिरूपणं। सर्व्वेषामुपरि वर्त्त-मानमथुरादौ प्रेमसेवालाभेच्छया वासं कुर्य्यादितिकथनं। काशीविवरणं। वृन्दावन-विवरणकीर्त्तनञ्च।

———

**No. 3138. प्रायश्चित्तनिरूपणं।** Substance, country-made paper, 13 × 2 inches. Folia, 92. Lines, 5—6 on a page. Extent, 2,901 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, old. Prose and verse. Correct.

**Práyaśchitta-nirúpaṇa.** Definitions and explanations of the sins and offences which require expiations. By Bhavadeva Bhaṭṭa.

**Beginning.** ॐ नमो गणपतये।

अनादिभवसम्भूतपापप्रशमकारणं।
स्मरणं वासुदेवस्य यस्य तस्मै नमो नमः॥
मन्वादिस्मृतिमालोच्य सुविविच्य यथाक्रमं।
क्रियते भवदेवेन प्रायश्चित्तनिरूपणं॥

तत्र प्रायश्चित्ते निरूपणीये गुरुत्वात् पञ्चमहापातकप्रायश्चित्तनिरूपणपुरःसरमेव इतरप्रायश्चित्तनिरूपणे कर्त्तव्ये मन्वादिवचनक्रमानुरोधेन प्रथमं ब्रह्मवधप्रायश्चित्तमेव निरूप्यते।

End. यास्यं छच्छ्रं समुद्दिष्टं सावे+श्रुतिपारगैः।
सर्व्वकामप्रदं ह्येतत् सर्व्वकल्मषनाशनं॥
अत्रापि पञ्च धेनवः। इति।

Colophon. इति नरभीमजङ्गापरनामधेयभट्टश्रीभवदेवस्य कृतौ छच्छ्रपरिच्छेदः समाप्तः। समाप्तञ्चेदं पुस्तकं। शकाब्दाः १४०९।

विषयः। पञ्चमहापातकस्वरूपनिरूपणं। हननलक्षणादिविचारः। ब्रह्मघातकस्वरूपादिनिरूपणं। उपकारार्थमेव प्रवृत्तौ प्रमादतो मरणनिष्पत्तौ न वधदोषभागित्वमितिनिर्णयः। विनयाधानार्थं पुत्रभार्य्यादीनां दण्डकरणादौ दोषाभावादिकथनं। आततायिब्राह्मणवधे दोषाभावकथनं। आततायिनिरूपणादिकं। तदपवादकथनं। वधस्वरूपनिरूपणं। प्रायश्चित्तानुष्ठाने देशकालवयःशक्त्याद्यपेक्षाविवेचनं। कामतोऽकामतश्च भेदेन वधद्वैविध्यनिरूपणं। ब्रह्महत्यादीनां प्रायश्चित्तनिरूपणं। जलाग्निप्रवेशादिना मरणोद्यतस्य केनापि प्रतिबन्धकेन तत्राकृतार्थतायां प्रायश्चित्तकथनं। क्षत्रियादिवधप्रायश्चित्तकथनं। स्त्रीवधप्रायश्चित्तकथनं। तत्र गर्भिणीवधप्रायश्चित्तकथनं। व्यभिचारिणीवधप्रायश्चित्तकथनं। गोवधप्रायश्चित्तनिरूपणं। इतरप्राणिवधप्रायश्चित्तं। रहस्यकृतब्रह्मवधप्रायश्चित्तनिरूपणं। रहस्यप्रायश्चित्तलक्षणं। नानाविधरहस्यवधप्रायश्चित्तनिरूपणं। अभक्ष्यभक्षणप्रायश्चित्तनिरूपणं। तत्र सुरापानप्रायश्चित्तकथनं। सुराशब्दार्थादिनिरूपणं। पुनःसंस्कारविधिकथनञ्च। मूत्रपुरीषादिभक्षणप्रायश्चित्तकथनं। चण्डालोदकभाण्डस्पृष्टजलपानादिप्रायश्चित्तकथनं। चण्डालादिपरिग्रहवापीकूपतड़ागादिजलपानप्रायश्चित्तकथनं। आपदि रजकादिजलपानप्रायश्चित्तकथनं। अपेयक्षीरपानप्रायश्चित्तकथनं। अभक्ष्यभक्षणप्रायश्चित्तकथनं। ब्राह्मणादीनां शूद्राद्यन्नभोजनप्रायश्चित्तकथनं। शूद्रस्य अन्त्यजाद्यन्नभोजनप्रायश्चित्तकथनं। उच्छिष्टभोजनप्रायश्चित्तकथनं। सहभोजनप्रायश्चित्तकथनं। लशुनगृञ्जनादिभक्षणप्रायश्चित्तकथनं। निषिद्धमत्स्यमांसभक्षणप्रायश्चित्तकथनं। ब्रह्मचारिणोऽभक्ष्यादिभक्षणप्रायश्चित्तं। रहस्यकृतसुरापानादिप्रायश्चित्तकथनं। स्तेयशब्दार्थनिरूपणं। सुवर्णस्तेयादिप्रायश्चित्तनिरूपणं। धान्याद्यपहरणप्रायश्चित्तकथनं। रहस्यकृतसुवर्णस्तेयादिप्रायश्चित्तकथनं। अगम्यागमनप्रायश्चित्तनिरूपणं। तत्र गुर्व्वङ्गनागमनप्रायश्चित्तकथनं। गुर्व्वङ्गनाशब्दार्थनिरूपणञ्च। स्वाङ्गनाभिगमनप्रायश्चित्तकथनं। गुरुतल्पातिदेशप्रायश्चित्तकथनं। गवादितिर्य्यग्योनिगमनप्रायश्चित्तकथनं। अवकीर्णिप्रायश्चित्तकथनं। गुर्व्वङ्गनागमने रहस्यप्रायश्चित्तकथनं। संसर्गप्रायश्चित्तनिरूपणं। संसर्गप्रकारकथनं। पतितप्रतिग्रह-पतितान्नभोजन-पतितस्पृष्टान्नभोजनरूपसंसर्गप्रायश्चित्तकथनं। अस्पृश्यसंसर्गप्रायश्चित्तनिरूपणं। ब्राह्मणस्य अविक्रेयविक्रयप्रायश्चित्तकथनं। द्रव्यशुद्धिनिरूपणं।

**No. 3139.** **लौकिकन्यायसङ्ग्रहः, प्रथमो भागः।** Substance, country-made paper, 13 × 5 inches. Folia, 132. Lines, 5 on a page. Extent, 1,965 ślokas. Character, Nágara. Date, SM., 1882. Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, fresh. Prose. Generally correct.

**Laukikanyáya-sañgraha.** A collection of popular sayings used as logical illustrations, together with explanations and the stories and anecdotes which have given rise to them. By Raghunátha, son of Guláb-ráya Varmá, and disciple of Ráma-dayálu of the race of Nánaka.

**Beginning.** श्रीगणेशाय नमः।

यत्कीर्त्तिप्रभया सुधाब्धिभुवने मायाप्रभावैः प्रभो-
र्नीलादेर्जनिता प्रतीतिरचला द्यौः संहता शोभते।
यच्छिष्योडुगणैः स मे गुरुरसौ हार्दान्धकाराग्रहः
श्रीमद्रामदयालुरिन्दुरमलो मोदाय भूयात् सदा॥
नत्वा शम्भुं हरिं गौरीं विधिं दुण्ढिञ्च भारतीं।
क्रियते रघुनाथेन लौकिकन्यायसङ्ग्रहः॥
लौकिकन्यायरत्नानामाकरे यत् प्रदर्शितं।
तस्य संक्षेप एवेह शीघ्रबोधाय दर्श्यते॥
न्यायार्थं विषयञ्चैवोदाहृतिञ्च यथामति।
वदिष्यामोऽत्र संक्षेपाद्विस्तरादपि च क्वचित्॥
प्रसङ्गादागतानान्तु न्यायानां तत्र विस्तृते।
अर्थमात्रं वदिष्यामः क्वचिदन्यामुदाहृतिं॥
प्रसङ्गादायाता अपि निगदविख्यातविषया
न ते व्याख्यास्यन्ते पुनरसकृदुक्ताश्च विरताः।
पुनर्व्याख्यास्यन्ते विषयकथनादिप्रविततः
पुरा प्रोक्तान् कांश्चित् पुनरपि वदिष्यामि विषये॥
अर्थादर्थो न शब्दार्थ इत्याद्या हठसूक्तयः।
पूर्व्वैर्न्यायतया प्रोक्ता वदिष्यामस्ततस्तथा॥
उदाहृतिं वदिष्यामः प्रायो वेदान्तशास्त्रगां।
मीमांसान्यायगां कांश्चित् कांश्चिचापरशास्त्रगां॥

**End.** तुष्यतु दुर्ज्जन इति न्यायात् मित्यस्यापि व्यापारत्वोपगमे प्रमाणप्रष्टत्त्वविच्छेद इत्यादयो दोषा वज्रलेपवदनिवार्य्या इति दिक्।

**Colophon.** इति सकलकल्याणगुणभूषणश्रीमानकपदंशमौलिकश्रीरामदयालुशिष्येण सोमवंशीयविन्दुरायकुलोत्तंसश्रीगुलाबरायवर्म्मात्मजेन उदासीनावस्थेन रघुनाथेन विरचिते लौकिकन्यायसङ्ग्रहे प्रमेयनिरूपणपरः पूर्व्वभागः समाप्तः। शुभमस्तु। संवत्। १८८१

विषयः। न्यायानां स्वरूपकथनपूर्व्वकं तेषामुदाहरणप्रदर्शनं। तत्र अनुबन्धनिरूपणादिकं। कण्ठचामीकरन्यायः। प्रसङ्गादधिकारिनिरूपणं। आत्मनिरूपणञ्च। लौकिकन्यायनिरूपणं। तत्र पञ्चीकरणविवरणकीर्त्तनं। स्थूलारुन्धतीन्यायः। यत्परः शब्दः स शब्दार्थ इति न्यायः। अर्के चेन्मधु विन्देत किमर्थं पर्व्वतं व्रजेदिति न्यायः। मज्जनोन्मज्जनन्यायः। कुशकाशावलम्बनन्यायः। अलाबुतुम्बिकान्यायः। पिञ्जरमुक्तपक्षिन्यायः। स्थूणानिखनन्यायः। सिंहावलोकन्यायः। परिषन्न्यायः। वज्रटङ्काङ्कटन्यायः। वङ्गराजकपुरन्यायः। वरगोष्ठीन्यायः। स्वामिभृत्यन्यायः। मुञ्जादिषीकान्यायः। गड्डलिकाप्रवाहन्यायः। घटे पक्षिन्यायः। मल्लग्रामन्यायः। अहिंसिपुत्त्र इतिन्यायः। देवदत्तपुत्त्रन्यायः। प्रासादवासिन्यायः। कार्य्येण कारणसंप्रत्यय इतिन्यायः। कारणगुणक्रमन्यायः। पञ्जरचालनन्यायः। धर्म्मिकल्पनान्यायः। धर्म्मकल्पनान्यायः। सम्भवत्येकवाक्यत्वे वाक्यभेदो न चेष्यते इतिन्यायः। भिक्षुपादप्रसारणन्यायः। सोपानारोहणन्यायः। ज्योतिर्न्यायः। साचात्प्रकृतावितिन्यायः। अध्यारोपापवादन्यायः। रेखागवयन्यायः। शाखाचन्द्रन्यायः। प्रसङ्गादीश्वरनिरूपणं। तामसं परिवर्ज्जयेदितिन्यायः। शौचिवीजन्यायः। कौठभट्टन्यायः। त्यज्या दुस्तटिनीतिन्यायः। गणपतिन्यायः। येन उपक्रम्यते येन च उपसंह्रियते स वाक्यार्थं इतिन्यायः। सुन्दोपसुन्दन्यायः। अपक्वामं तु गच्छन्तं सोदरोऽपि विमुञ्चति इतिन्यायः। स्वपक्षहानिकर्त्तृत्वात् सकुलाङ्गारतां गत इतिन्यायः। एकसम्बित्सातोऽपरं प्रच्यवते इतिन्यायः। देवताधिकरणन्यायः। गुणोपसंहारन्यायः। यत् प्रायः श्रूयते यादृक् तत्तादृगवगम्यते इतिन्यायः। न हि निन्दा निन्दितुं प्रवर्त्तते अपि तु विधेयं स्तोतुमितिन्यायः। सर्व्वशाखाप्रत्ययमेकं कर्म्मेतिन्यायः। उपवाससमासाद्वरं भिक्षेतिन्यायः। शालिसक्तो कोद्रवनाशनन्यायः। कूपखानकन्यायः। निम्नगाप्रवाहन्यायः। यादृशो यक्षस्तादृशो बलिरितिन्यायः। शतपत्रपत्रशतभेदन्यायः। घट्टकुटीप्रपातन्यायः। वरघाताय कन्यावरणमितिन्यायः। नष्टाश्वदग्धरथन्यायः। विधिनिषेधौ सति विशेषबाधे विशेषणमुपसंक्रामेत, इतिन्यायः। सावकाशनिरवकाशयोर्निरवकाशो बलीयानितिन्यायः। अहिकुण्डलन्यायः। प्रकाशाश्रयन्यायः। गुडजिह्विकान्यायः। यत् कृतकं तदनित्यमितिन्यायः। उष्ट्रलगुडन्यायः। न हि दृष्टे अनुपपन्नं नामेतिन्यायः। भक्षितेऽपि लशुने न शान्तो व्याधिरितिन्यायः। रज्जुसर्पन्यायः। हस्तप्रकम्पनन्यायः। क्रिया हि विकल्प्यते न वस्त्वितिन्यायः। यः कारयति स करोत्येवेतिन्यायः। शामादेर्निष्कर्षवदुत्कर्षोऽप्यङ्गीकार्य्य इतिन्यायः। काकतालीयन्यायः। अजाकृपाणीयन्यायः। न हि भिक्षुको भिक्षुकमितिन्यायः। योजनप्राप्यायां कावेर्य्यां नक्रबन्धनन्यायः। अपेक्षितानपेक्षितयोरितिन्यायः। कृताकृतप्रसङ्गी यो विधिः स नित्य इतिन्यायः। अनधीते

महाभाष्ये इतिन्यायः। फलवत्सहकारन्यायः। तदभिन्नाभिन्नस्य तदभिन्नत्वमितिन्यायः। लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरितिन्यायः। यद्विषाद्वस्तद्गीतगानमितिन्यायः। अन्धगजन्यायः। कूपमण्डूकन्यायः। चतुर्व्वेदविन्न्यायः। नृपनापितपुत्त्रन्यायः। स्वभिगुणमपि पुच्छकमितिन्यायः। महिषी प्रसवोन्मुखीतिन्यायः। अन्धचटकन्यायः। घुणाक्षरन्यायः। पुत्त्रलिप्सया दैवं भजन्त्या भर्त्ताऽपि नष्ट इतिन्यायः। वृद्धिमिष्टवतो मूलं विनष्टमितिन्यायः। चर्म्मतन्त्री महिषीं हन्तीतिन्यायः। मण्डूकप्लुतिन्यायः। सच्छिद्रघटाम्बुन्यायः। एकामसिद्धिं परिहरतो द्वितीया आपद्यते इतिन्यायः। उपपन्नधर्म्मा विकरोति हि धर्म्मिणमितिन्यायः। व्रणशोधनाय शस्त्रग्रहणमितिन्यायः। सर्व्वविशेषणं साधारणमितिन्यायः। सर्व्वं वाक्यं साधारणमितिन्यायः। वृद्धकुमारीवाक्यन्यायः। तिर्य्यगधिकरणन्यायः। अन्ते या मतिः सा गतिरितिन्यायः। आभाणकन्यायः। प्रसङ्गपठितन्यायः। शाखाचङ्क्रमणन्यायः। स्तनशाटिकान्यायः। अजातपुत्त्रनामकरणन्यायः। जलानयनन्यायः। अग्न्यातपनन्यायः। इक्षुरसन्यायः। इक्षुविकारन्यायः। राजसं तामसञ्चेतिन्यायः। यः कुरुते स भुङ्क्ते इतिन्यायः। अश्मलोष्ट्रन्यायः। पाषाणेष्टिकान्यायः। विल्वखल्वाटन्यायः। कोषपालन्यायः। विषभक्षणन्यायः। परशुग्रहणन्यायः। घटारोहणन्यायः। धर्म्माधर्म्मन्यायः। तप्तमाषकोद्धरणन्यायः। उदकनिमज्जनन्यायः। चौरापराधात् माण्डव्यनिग्रहन्यायः। काकदधिघातकन्यायः। तण्डुलन्यायः। नीरक्षीरन्यायः। विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतमितिन्यायः। सन्दंशन्यायः। सुतजनिस्मृतिन्यायः। सार्व्वजनीनतुल्यायव्ययन्यायः। पतन्तमनुधावतो बद्धोऽपि गत इतिन्यायः। स्थालीपुलाकन्यायः। यत्रोभयोः समो दोष इतिन्यायः। शते पञ्चाशदितिन्यायः। यादृशं मुखं तादृशं चपेटमितिन्यायः। मरणाद्वरो व्याधिरितिन्यायः। एकाकिनीप्रतिज्ञेतिन्यायः। न हि प्रत्यभिज्ञामात्रेण स्वार्थसिद्धिरितिन्यायः। रक्तपटन्यायः। न हि करकङ्कणदर्शनाय आदर्शापेक्षेतिन्यायः। प्रदीपन्यायः। भामतीन्यायः। वह्निन्यायः। कूर्म्माङ्गन्यायः। वातादिन्यायः। श्वादिन्यायः। अन्धपङ्गुन्यायः। लोहचुम्बकन्यायः। तुष्यतु दुर्ज्जन इतिन्यायः॥ इति प्रमेयनिरूपणन्यायाः। इति प्रथमखण्डस्य विवरणम्।

---

**No. 3140.** लौकिकन्यायसङ्ग्रहः, द्वितीयभागः। Substance, country-made paper, 13 × 5 inches. Folia, 75. Lines, 5 on a page. Extent, 1,017 ślokas. Character, Nágara. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, fresh. Prose. Generally correct.

**Laukika-nyáya-sańgraha.** A second part of the work described under the next preceding section. By the same author.

**Beginning.** नत्वा शम्भुं हरिं गौरीं विधिं बुद्धिञ्च भारतीं।
क्रियते रघुनाथेन लौकिकन्यायसङ्ग्रहः॥

अथ प्रमाणनिरूपणप्रचुरो द्वितीयो भाग आरभ्यते। अत्रैव च प्रसङ्गात् पूर्व्वाङ्गार्थोऽपि दृढीक्रियते। यथा हि तरति शोकमात्मविदित्यादौ प्राचीनतार्किकमतमाश्रित्य अखिलपदार्थ-स्मरणाद्युगपदेव विशेष्ये विशेषणं तत्र विशेषणान्तरमितिन्यायेन सर्व्वपदार्थानामन्योऽन्यं क्रियाकर्म्मभावेन अन्वयरूपः शाब्दबोधः स्वीक्रियते, तदा खले कपोतन्यायोऽवतरति। यथाहुः, वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत्पतन्ति। तथैव सर्व्वे युगपत् पदार्थाः परस्परेणान्वयिनो भवन्ति—इति। अत्र वृद्धयुवशिशुभिः कपोतैरित्यादि।

End. यो ब्रह्मा यश्च विष्णुर्वसुतनुरपि यो यश्च गौर्य्यादिमूर्त्ति-
स्वात्माऽसौ सर्व्वजन्तोः श्रुतिशिखरगिरां यश्च तात्पर्य्यभूमिः।
यस्याबोधात् समुत्थो व्रजति च विलयं यस्य बोधात् प्रपञ्च-
स्तं शुद्धं संप्रपद्ये शिवममरमजं शम्भुमीशानमीड्यं॥

Colophon. इति श्रीसाधुवृन्दवन्दितपादारविन्दवैराग्यादिरत्नाकरविद्वद्वरश्रीमद्रामदयालुशिष्येण सोमवंशीयविन्दुरायकुलोत्तंसश्रीसेवीदेव्याश्रितपादारविन्दश्रीगुलाबरायवर्म्मात्मजेन उदासीनावस्थेन रघुनाथेन विरचितो लौकिकन्यायसङ्ग्रहः समाप्तः।

इति लौकिकन्यायसङ्ग्रहे उत्तरार्द्धं पूर्णं।

विषयः। खले कपोतन्यायः। विशेषणं विशेषणेतिन्यायः। विशिष्टस्य वैशिष्ट्यमितिन्यायः। नाज्ञातविशेषणा विशिष्टबुद्धिः विशेष्यं संक्रामतीतिन्यायः। त्यजेदेककुलस्यार्थे इतिन्यायः। विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्था इतिन्यायः। मृत्युरितिन्यायः। लाङ्गलं जीवनमितिन्यायः। आयुर्घृतमितिन्यायः। दधिपयसि प्रत्यक्षो ज्वर इति न्यायः। अशोकवनिकान्यायः। पिष्टपेषणन्यायः। मृतमारणन्यायः। जलमन्थनन्यायः। काकदन्तपरीक्षान्यायः। गर्द्दभारामगणनान्यायः। स्थालीपुलाकन्यायः। सूचीकटाहन्यायः। यथासंख्यन्यायः। अवभक्षकन्यायः। वायुभक्षकन्यायः। कुम्भीधान्यन्यायः। ब्राह्मणपरिव्राजकन्यायः। ब्राह्मणवसिष्ठन्यायः। गोबलीवर्द्दन्यायः। करिबृंहितन्यायः। गजघटान्यायः। नीलेन्दीवरन्यायः। पर्व्वताधित्यकान्यायः। पर्व्वतोपत्यकान्यायः। वाजिमन्दुरान्यायः। मृगवागुरान्यायः। येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति इतिन्यायः। अश्वभृत्यन्यायः। अपकुक्कुटीन्यायः। नौनाविकन्यायः। न हि सुतीक्ष्णाप्यसिधारा स्वयमेव छेत्तुमाहितव्यापारा भवतीतिन्यायः। कौण्डिन्यन्यायः। पुरस्तादपवादा अनन्तरान् विधीन् बाधते नेतरानितिन्यायः। पूर्व्वमपवादा निविशन्ते पश्चादुत्सर्गा इतिन्यायः। प्रकल्प्यापवादविषयं पश्चादुत्सर्गोऽभिनिविशते—इतिन्यायः। यदर्था प्रवृत्तिः तदर्थः प्रतिषेध इतिन्यायः। उपजनिष्यमाणनिमित्तोऽप्यपवादो जातनिमित्तमप्युत्सर्गं बाधते इतिन्यायः। पूर्व्वात्परबलीयस्त्वन्यायः। स्थावरजङ्गमविषन्यायः। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेतिन्यायः। कृदभिहितो भावो द्रव्यवत् प्रकाशते इतिन्यायः। वीचितरङ्गन्यायः। कदम्बकुसुमन्यायः। सुन्दोपसुन्दन्यायः। मातृस्थन्यायः। शक्तिः सहकारिणीतिन्यायः। अत्र प्रसङ्गात् विधिस्वरूपादिविचारः। अत्यन्तं बलवन्तोऽपि पौरजान-

पद्मा जनाः। दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैरितिन्यायः। रूढिर्योगमपहरतीतिन्यायः। श्रुतयौगिकार्थलाभे सति अनन्वितरूढ्यर्थस्त्याज्य इतिन्यायः। प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमितिन्यायः।भावप्रधानमाख्यातमितिन्यायः। इष्येष्यमाणयोः समभिव्याहारे इष्यमाणस्यैव प्राधान्यमितिन्यायः। कामनागोचरत्वेन शब्दबोध एव शब्दसाधनतान्वय इतिन्यायः। शाब्दी ह्याकाङ्क्षा शब्देनैव पूरणीयेतिन्यायः। न हि शाब्दमशाब्देनान्वेतीतिन्यायः। मत्स्यकण्टकन्यायः। धान्यपलालन्यायः। अर्द्धं त्यजति पण्डित इतिन्यायः। पदमप्यधिकाभावात् स्मारकात् न विशिष्यत इतिन्यायः। ज्ञानधर्म्मिण्यभ्रान्तप्रकारे तु विपर्य्यय इति न्यायः। नागोष्ट्रपतिन्यायः। उष्ट्रलगुडन्यायः। पुष्टलगुडन्यायः। जामात्रर्थं श्रपितस्य सूपादेरतिथ्युपकारकत्वमितिन्यायः। तुल्योन्नमनन्यायः। प्रधानमल्लनिर्बर्हणन्यायः। देहलीदीपन्यायः। काकाक्षिन्यायः। आषाढ़वातन्यायः। कैमुतिकन्यायः। दण्डापूपन्यायः। दण्डसर्पमारणन्यायः। वकबन्धनन्यायः। अन्ते रण्डाविवाहश्चेदादावेव कुतो न स इतिन्यायः। ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनायोग इति न्यायः। शिरोवेष्टनेन नासिकास्पर्श इतिन्यायः। अर्द्धजरतीन्यायः। अर्द्धवैशसन्यायः। सुभगाभिक्षुकन्यायः। एकत्र निर्णीतः शास्त्रार्थः अन्यत्रापि तथेतिन्यायः। कण्टकन्यायः। दग्धेन्धनवह्निन्यायः। देवदत्तहन्तृहतन्यायः। तुष्यतु दुर्ज्जन इतिन्यायः। सर्व्वं कार्य्यं सकारणकमितिन्यायः। यन्निष्ठत्विमदितिन्यायः। उभयतः पाशरज्जुन्यायः। विशिष्टेष्टेरितिन्यायः। गजभुक्तकपित्थन्यायः। नारिकेलफलाम्बुन्यायः। अन्यभुक्तन्यायः। स्वप्रथ्याघ्रन्यायः। इषुवेगक्षयन्यायः। चक्रभ्रमणन्यायः। कारणनाशे कार्य्यनाशन्यायः। पटन्यायः। यावच्छिरस्तावच्छिरोव्यथेतिन्यायः। हस्तामलकन्यायः। करस्थबिल्वन्यायः। सति बोधे न जानातीतिन्यायः। दग्धरसनान्यायः। दग्धपटन्यायः। चित्रपटन्यायः। चम्पकपटवासन्यायः। उत्पाटितदन्तनागन्यायः। अपसारिताग्निभूतलन्यायः। चित्राङ्गनान्यायः। चितामृतन्यायः। चित्रानलन्यायः। अदग्धदहनन्यायः। आदावन्ते चेतिन्यायः। ऊषरवृष्टिन्यायः। शवोद्वर्त्तनन्यायः। अन्धदर्पणन्यायः। श्वपुच्छोन्नामनन्यायः। अरण्यरोदनन्यायः। मूर्खसेवनन्यायः। समुद्रवृष्टिन्यायः। तालसर्पन्यायः। रोगिन्यायः। अश्वतरीगर्भन्यायः। वृश्चिकीगर्भन्यायः किमज्ञानस्य दुष्करमितिन्यायः। व्याघ्रीक्षीरन्यायः। नहि विवाहानन्तरं वरपरीक्षा क्रियते इतिन्यायः। कृते कार्य्ये किं मुहूर्त्तप्रश्नेन इतिन्यायः। कूपन्यायः। भ्रमरन्यायः। चालनीन्यायः। मक्षिकान्यायः। जलौकान्यायः। रासभरटितन्यायः। पूर्व्वाह्णच्छायान्यायः। खलमैत्रीन्यायः। कुक्कुटध्वनिन्यायः। अपराह्णच्छायान्यायः। साधुमैत्रीन्यायः। गोक्षीरं श्वदृतिधृतमितिन्यायः। विधेयं हि स्तूयते वस्त्वितिन्यायः। स्तनन्धयन्यायः। विवाहप्रवृत्तभृत्यन्यायः। कांस्यभोजिन्यायः। वैशेष्यात्तु तद्वाद इतिन्यायः। अन्धगोलाङ्गूलन्यायः। भूच्छिद्रपक्षिन्यायः। अन्धस्यैवान्धलग्नस्य विनिपातः पदे पदे इतिन्यायः। प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमितिन्यायः। श्वः कर्त्तव्यमद्य कुर्व्वितिन्यायः। स्वकरकुचन्यायः। मृगभयेन शस्यानाश्रयणन्यायः। मूकभयेन कथात्यागन्यायः। एकदेशविकृतमनन्यवदितिन्यायः। स्फटिकलौहित्यन्यायः। आकाश-

परिच्छिन्नत्वन्यायः। देवाधीनत्वन्यायः। कौन्तेयराधेयन्यायः। राजपुत्रव्याधन्यायः। प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते इतिन्यायः। पिण्डं हित्वा करं लेढीतिन्यायः। घटप्रदीपन्यायः। वस्तूनि सामान्यपेक्ष्य प्रयोजनमाप्नोतीतिन्यायः। बहूनामनुग्रहो न्याय्य इतिन्यायः। बहुच्छिद्रघटप्रदीपन्यायः। मूषासिक्तताम्रन्यायः। व्यञ्जकव्यङ्ग्यन्यायः। दाहकदाह्यन्यायः। शैलूषीन्यायः। क्षीराग्निन्यायः। वायुशैत्योष्णन्यायः। भूशैत्योष्णन्यायः। अर्द्धमुक्तैवर्णन्यायः। अन्तेदीपन्यायः। तदागमेऽपि दृश्यते इतिन्यायः। बध्यघातकन्यायः। खादकघातकन्यायः। प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि इतिन्यायः। गले पादुकान्यायः। यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेद स इतिन्यायः। तरतमभावापन्नमितिन्यायः। सन्दिग्धस्य सन्दिग्धं सप्रयोजनं चेत् विचारमर्हतीतिन्यायः। चिन्तामणिं परित्यज्य काचमणिग्रहणन्यायः। अभाण्डलाभन्यायः। स्वयंवरान्यायः। स्वप्ने मन्त्रलाभन्यायः। रथयष्टवान्यायः। भल्लुन्यायः। भैरवन्यायः। वह्निधूमन्यायः। गोमहिषादिन्यायः। अच्छिन्नकुलन्यायः। रश्मितृणादिन्यायः। तमःप्रकाशन्यायः। सिंहमृगन्यायः। गोमयपायसन्यायः। उपजीव्योपजीवकन्यायः। विपरीतं बलाबलमितिन्यायः। दानव्यालकटन्यायकीर्त्तनञ्च।

---

**No. 3141.** वेदान्तदीपः। Substance, country-made paper, 11 × 4⅓ inches. Folia, 109. Lines, 10—11 on a page. Extent, 4,067 ślokas. Character, Nágara. Date, Sm. 1889. Place of deposit, S'ántipura, Kálidása Vidyávágís'a. Appearance, fresh. Prose. Correct.

**Vedánta-dípa.** A commentary on the Vedánta Sútras. By Rámánuja. This is an abridgment of an elaborate work of the author on the subject. The early work is entitled *S'ríbháshya.* It differs widely in many respects from the commentary of S'aṅkara Ácharya. Hall's Contributions, p. 95.

**Beginning.** श्रियः कान्तोऽनन्तो वरगुणगणैकास्पदवपु-
र्हताशेषावद्यः परमकपदो वाङ्मनसयोः।
अभूमिर्भूमिर्यो नतजनदृशामादिपुरुषो
मनस्तत्पादाब्जे परिचरणसक्तं भवतु मे॥
प्रणम्य शिरसाचार्यान् तदादिष्टेन वर्त्मना।
सङ्क्षिप्तपदान्तःसूत्रवेदान्तार्थः प्रकाश्यते॥

अत्रेयं वेदविदां प्रक्रिया। अचिद्वस्तु स्वरूपतः स्वभावतश्च अत्यन्तविलक्षणः तदात्मभूतश्चेतनः प्रत्यगात्मा तस्माद्बद्धात् मुक्तात् नित्याच्च निखिलहेयप्रत्यनीकतया कल्याणैकतानतया च सर्व्वा-

चसुचिदचिद्व्यापकतया नियन्तृतया शेषितया च अत्यन्तविलक्षणः परमात्मा। यदुक्तमित्यादि।

**End.** सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च इति शब्दादेव कदाचिदपि नावर्त्तयतीत्यवगम्यते। सूचाहत्तिस्तु शास्त्रपरिसमाप्तिं द्योतयतीति सर्व्वं समञ्जसं। शास्त्रञ्च समाप्तं।

**Colophon.** इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः। संवत् १८८९।

विषयः। स्वकृते श्रीभाष्ये श्रुतियुक्तिभ्यां विस्तरतो ब्रह्मसूत्रार्थं प्रदर्श्य ततोऽल्पाक्षरतया सूत्रान्तर्गतन्यायप्रदर्शनमुखेन वेदान्तसूत्रव्याख्यानं।

---

**No. 3142.** वेदान्तसारः। Substance, country-made paper, 12 × 5 inches. Folia, 51. Lines, 11 on a page. Extent, 2,013 slokas. Character, Nágara. Date, Sm. 1889. Place of deposit, S'ántipura, Kálidása Vidyávágis'a; another copy at Barhampur with Bábu Rádhikáprasád Sena. Appearance, fresh. Verse. Correct.

**Vedántasára.** A metrical paraphrase of the Vedánta Sútras. The colophon of this MS. attributes the work to Rámánuja himself, but the salutation at the beginning clearly shows that it owes its composition to a disciple of that author. It is confined to an exposition of the Sútras. It is distinct from Sadánanda's work which is the most popular in Bengal.

**Beginning.** यो नित्यमच्युतपदाम्बुजयुग्मरुक्म-
व्यामोहितस्तदितराणि तृणाय मेने।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धो-
रामानुजस्य चरणौ शरणं प्रपद्ये॥
समस्तचिदचिद्वस्तुशरीरायाखिलात्मने।
श्रीमते निर्म्मलानन्दोदन्वते विष्णवे नमः॥

श्रीमत्परमहंसपूज्यप्रसादेन वेदान्तसारः समुद्ध्रियते। अथातो ब्रह्मजिज्ञासा। अथ शब्द आनन्तर्य्ये वर्त्तते अतः शब्दश्चिरस्कृत्वात् अथशब्दः पूर्व्वहत्तस्य हेतुभावे पूर्व्वहत्तञ्च कर्म्मज्ञानमिति ज्ञायते। इत्यादि।

**End.** आविर्भूतापहतपाप्मत्वादिगुणोऽनवधिकातिशयानन्दं परं ब्रह्म अनुभवति न च पुनरावर्त्तते इति निश्चीयते। इति सर्व्वं समञ्जसं।

**Colophon.** इति श्रीमद्रामानुजाचार्य्यविरचिते वेदान्तसारे चतुर्थाध्यायस्य चतुर्थः पादः। ग्रन्थोऽपि समाप्तः संवत् १८८९। मार्गशीर्षे।

विषयः। श्रीभाष्यार्थसारमाकलय्य मन्दबोधार्थमतिसंक्षेपेण ब्रह्मसूत्रार्थप्रदर्शनं।
(ग्रन्थोऽयं केनचिद्राममानुजमिश्रेण सङ्कलितः।)

---

No. 3143. सरस्वतीकण्ठाभरणम्। Substance, country-made paper, 13½ × 5 inches. Folia, 265. Lines, 9 on a page. Extent, 8,316 ślokas. Character, Nágara. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágís'a. Appearance, fresh. Prose and verse. Correct.

**Sarasvatíkaṇṭhábharaṇa.** An elaborate treatise on rhetoric. By Mahárájá Bhoja Deva.

**Beginning.** श्रीगणेशाय नमः।
ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयं।
यस्याः सूक्ष्मादिभेदेन वाग्देवीं तामुपास्महे॥
निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतं।
रसान्वितं कविः कुर्व्वन् कीर्त्तिं प्रीतिञ्च विन्दति॥ इत्यादि।

**End.** प्रत्याख्याने 'धिनोति न' इति नयमेव पक्षः श्रेयानिति ग्रन्थकारेण स्वाभिप्रायः प्रकाश्यते।

इति निगदितभङ्ग्यामङ्गसर्व्वस्वमेतद्-
विविधमपि मनोभिर्भावयन्तोऽयखेदं।
मदनभवनमत्यानन्दसन्दोहिताः
परिषदि परितोषं हन्त सन्तः प्रयान्तु॥
यावन्मूर्द्ध्नि हिमांशुकन्दलभृति स्वर्वाहिनी धूर्ज्जटे-
र्यावद्वक्षसि कौस्तुभस्तवकितं लक्ष्मी मुरद्वेषिणः।
यावच्चित्तभुवस्त्रिलोकविजयप्रौढं धनुः कौसुमं
भूयात्तावदियं कृतिः कृतधियां कर्णावतंसोत्पलं॥

**Colophon.** इति महाराजाधिराजश्रीभोजदेवविरचिते सरस्वतीकण्ठाभरणालङ्कारे रसविवेचनो नाम पञ्चमः परिच्छेदः। समाप्तश्चायं ग्रन्थः।

विषयः। १प्रथमे परिच्छेदे,—काव्यलक्षणं। दोषकथनं। पददोषविभागः। तत्र असाधु-अप्रयुक्त-कष्ट-अनर्थक-अन्यार्थक-अपुष्टार्थ-असमर्थ-अप्रतीत-क्लिष्ट-गूढ़-नेयार्थ-सन्दिग्ध-विरुद्ध-अप्रयोजक-देश्य-ग्राम्यरूपषोड़शविधपददोषलक्षणादिकीर्त्तनं। वाक्यदोषविभागः। तत्र शब्द-हीनक्रमभ्रष्ट-विसन्धि-पुनरुक्ति-व्याकीर्ण-सङ्कीर्ण-अपदवाक्यगर्भित-भिन्नलिङ्ग-भिन्नवचन-न्यूनोपम अधिकोपम-भग्नच्छन्दो-भग्नयति-अशरीर-अरीति-नेयार्थ-असमस्त-अनिर्व्वूढ़-निरलङ्कारलक्षणा-

दिकथनं। वाक्यार्थदोषविभागः। तत्र अपार्थ-व्यर्थ-एकार्थ-ससंशय-अपक्रम-खिन्न-अतिमात्र-परुष-विरस-हीनोपम-अधिकोपम-असदृशोपम-अप्रसिद्धोपम--निरलङ्कार--विरुद्धादिलक्षणं। चतुर्विंशतिविधशब्दार्थगुणविभागः। तत्र श्लेष-प्रसाद-समता-माधुर्य्य-सुकुमारता-अर्थव्यक्ति-कान्ति-उदारता-उदात्तता-ओज-और्ज्जित्य-प्रेयः-सुशब्दता-समाधि-सौक्ष्म्य-गाम्भीर्य्य विस्तर-संक्षेप-सम्मितत्व-भाविकत्व-गति-रीति-उक्ति-प्रौढीनां लक्षणादिकथनं। वाक्यार्थदोषविभागः। तत्र श्लेषादि-चतुर्व्विंशतिविधानां लक्षणादिकथनं। असाधु-कष्टप्रभृतिपददोषाणां क्वचिद्गुणत्वकथनं। एवं शब्दहीन-क्रमभ्रष्टादिवाक्यदोषाणामपार्थादिवाक्यार्थदोषाणाञ्च क्वचिददोषत्वं क्वचन गुणत्वकथनञ्च। गुणानामुपादेयतादिनिरूपणं।

२ये परिच्छेदे,—शब्दालङ्कारलक्षणं। तद्विभागकथनञ्च। तत्र जातिलक्षणं। भाषाविभागनियोगादिकथनं। शुद्धा संस्कृता जातिः। शुद्धा प्राकृता। शुद्धा मागधी। शुद्धा पैशाची। शुद्धा शौरसेनी। शुद्धा अपभ्रष्टा। संस्कृतप्राकृतयोः साधारणी। संस्कृतपैशाच्याः साधारणी। मिश्रा। सङ्कीर्णा। असाधारणा। अपभ्रष्टा च। गतिलक्षणं। गद्यपद्येषु द्रुतविलम्बितादिषु गतिभेदनिरूपणं। रीतिलक्षणं। तत्र वैदर्भी, पाञ्चाली, गौड़ी, आवन्तिका, लाटी, मागधी च। वृत्तिलक्षणं। तत्र कैशिकी, आरभटी, भारती, सात्त्वती, मध्यमकैशिकी, मध्यमारभटी च। छायालक्षणं। तत्र लोकोक्तिच्छाया, छेकोक्तिः, अर्भकोक्तिः। उन्मत्तोक्तिः, प्रौढोक्तिः, मत्तोक्तिश्च। मुद्रालक्षणं। तत्र पदमुद्रा, वाक्यमुद्रा, विभक्तिमुद्रा, वचनमुद्रा, समुच्चयमुद्रा, संवृतिमुद्रा च। उक्तिलक्षणं। तत्र विधिः, निषेधः, अधिकारः, विकल्पः, नियमः, परिसंख्या च। युक्तिलक्षणं। तत्र पदयुक्तिः, पदार्थः, वाक्यं, वाक्यार्थः, प्रकरणविषया प्रबन्धविषया च। भणितिलक्षणं। तत्र सम्भवा, असम्भवा, विशिष्टा, संवृतिः, कल्पना च। गुम्फनालक्षणं। तत्र शब्दकृता, अर्थकृता, क्रमकृता, पर्य्यायकृता, पदकृता, वाक्यकृता च। शय्यालक्षणं। तत्र प्रक्रान्तघटना, अप्रक्रान्तघटना, अतिक्रान्तघटना, पदघटना, वाक्यघटना, प्रकीर्णघटना, गौणीमुख्यालक्षणादीनामत्रैवान्तर्भाव इति निरूपणं। पठितिलक्षणं। तत्र काकु, अभिनयादिभिश्च। यमकलक्षणं। तत्र महायमकादिभेदकथनं। श्लेषलक्षणं। तत्र प्रकृतौ, वर्णे, पदे, प्रत्यये, भाषासु च। अनुप्रासलक्षणं। तत्र श्रुत्यनुप्रासादिभेदाः। वृत्त्यनुप्रासलक्षणं। तत्र, कर्णाटी, कौन्तली, कौङ्की, कौङ्कणी, वाणवासिका, द्राविड़ी, माथुरी, मात्सी, मागधी, ताम्रलिप्तिका, औड्री, पौण्ड्री, च। अन्यमतेन गम्भीरादिद्वादशविधवृत्त्यनुप्रासभेदकथनं। स्तवकवदादिद्वादशविधवर्णानुप्रासकथनं। मसृणादिद्वादशविधपदानुप्रासकथनं। नामद्विरुक्त्यनुप्रासभेदनिरूपणं। लाट-चक्रवालाद्यनुप्रासप्रभेदकीर्त्तनञ्च। चित्रलक्षणं। तत्र चतुर्व्यञ्जनं, त्रिव्यञ्जनं, द्विव्यञ्जनं, एकव्यञ्जनं, क्रमव्यञ्जनं। षड्जादिस्वरव्यञ्जनं। निष्कण्ठ्यादिह्रस्वदीर्घैकस्वरादि, अष्टदलं, चक्रबन्धः षोड़शदलपद्मादि, गतप्रत्यागतादि, भाषान्तरं, तुरगपदं, अर्द्धभ्रमणं, सर्व्वतोभद्रं, शृङ्गाटकादिबन्धः, विविड़ितबन्धः, व्योमबन्धः, सारयन्त्रबन्धः, एकाक्षरमुरजादिबन्धः, पादगोमूत्रिकादि, गोमूत्रि-

काधेनुः, शतधेन्वादिकञ्च। वाकोवाक्यलक्षणं। तत्र ऋजूक्तिः, वक्रोक्तिः, वैयातोक्तिः, शठोक्तिः प्रश्नोत्तरोक्तिः, चित्रोक्तिश्च। प्रहेलिकानिरूपणं। तत्र च्युताक्षरा-दत्ताक्षरा-विन्दुमतीप्रभृत्यष्टादशविधभेदकथनञ्च। अध्येयलक्षणं। एतत्प्रपञ्चकथनञ्च। श्रव्यलक्षणं। तत्र आशीः, नान्दी, नमस्कारः, वस्तुनिर्देशः, आक्षिप्तिका, ध्रुवा च। प्रेक्ष्यलक्षणं। तत्र लास्यं, ताण्डवं, छलिकं, शम्पा, हल्लीसकं, रासं, आङ्गिकादिषड्विधाभिनयनिरूपणञ्च।

इति शब्दालङ्कारनिरूपणम्।

३ये परिच्छेदे,—अर्थालङ्कारनिरूपणं। जात्यलङ्कारलक्षणं। तत्र संस्थानादिद्वादशभेदकथनं। विभावनालङ्कारः। कारणान्तर-विचित्रादिपञ्चविधभेदकथनं। हेत्वलङ्कारः। तत्र कारकहेतवः, ज्ञापकहेतुः, इत्थम्भूतादिलक्षणः, भावलक्षणः, प्रागभावादिहेतवः, विदूरकार्य्यहेतुः, सहज-कार्य्यान्तरज-युक्त-नयुक्त-व्यधिकरणादिहेतवश्च। अहेत्वलङ्कारः। तत्र वस्तु-शक्ति-स्वभावादिहानिहेतुता। कारणमालालङ्कारस्यात्रैवान्तर्भावकथनञ्च। सूक्ष्मालङ्कारः। तत्र इङ्गिताकारादिभिः प्रतीयमानेषु भेदकथनं। उत्तरालङ्कारः। तत्र धर्म्म-धर्म्मि-विशेषसामान्यादिषु। विरोधालङ्कारः। तत्रासङ्गति-प्रत्यनीकाधिक-विषमरूपभेदकथनञ्च। सम्भवालङ्कारः। तत्र विधिनिषेधादिविषयभेदकथनं। अन्योऽन्यालङ्कारः। तत्र अन्योऽन्यचूड़िका-भ्रान्तिप्रभृतिप्रभेदकथनञ्च। परिवृत्त्यलङ्कारः। तत्र व्यत्ययवत्यादिभेदकथनञ्च। निदर्शनालङ्कारः। तत्र ऋजुवक्र-पूर्व्वोत्तरसमरूपभेदकथनं। भेदालङ्कारः। तत्र स्वजातिव्यतिरेकाद्यष्टविधभेदकथनं। समाहितालङ्कारः। तत्र आकस्मिक-दैवादैवभेदकथनं। भ्रान्त्यलङ्कारः। तत्र तत्त्वे अतत्त्वरूपा, अतत्त्वे तत्त्वरूपाद्येकादशविधभेदकथनं। वितर्कालङ्कारः। तत्र निर्णयान्तादिचिविधभेदकथनं। मीलितालङ्कारः। तत्र पिहित-तद्गुणादिचतुर्व्विधभेदकथनं। स्मरणालङ्कारः। तत्र सादृश्यादृष्टादिषु। भावालङ्कारः। तत्र सोद्भेदनिगूढभेदादिसप्तविधभेदकथनं। प्रत्यक्षालङ्कारः। अनुमानालङ्कारः। तत्र पूर्व्ववदादिभेदाः। आगमालङ्कारः। उपमानालङ्कारः। अत्राभिनयालेख्यमुद्रा प्रतिविम्बानामन्तर्भावकथनं। अर्थापत्त्यलङ्कारः। अभावालङ्कारः। एतत्प्रपञ्चकथनञ्च।

४र्थे परिच्छेदे,—शब्दार्थालङ्कारनिरूपणं। उपमालङ्कारः। अत्र विपर्य्यासोपमोत्पाद्योपादिपञ्चविंशतिविधभेदकथनं। रूपकालङ्कारः। अत्र समस्तव्यस्तादिद्वाविंशतिविधभेदकथनं। साम्यालङ्कारः। तत्र दृष्टान्तोक्ति-प्रपञ्चोक्तिप्रपञ्चनिरूपणञ्च। संशयालङ्कारः। वितर्कोक्तिप्रभृतीनामत्रान्तर्भावकथनं। अपह्नुत्यलङ्कारः। समाध्यलङ्कारः। तत्र निगूढभेदसोद्भेदादिपञ्चविधभेदकथनं। समासोक्त्यलङ्कारः। तत्र श्लाघ्यादिनवविधभेदकथनं। उत्प्रेक्षालङ्कारः। तत्र द्रव्योत्प्रेक्षादिषड्विधभेदकथनं। अप्रस्तुतप्रशंसालङ्कारः। तुल्ययोगितालङ्कारः। तत्र स्तुत्यर्थादिभेदकथनञ्च। लेशालङ्कारः। तत्र गुणस्य दोषीभावे दोषस्य च गुणीभावादौ। सहोक्त्यलङ्कारः। समुच्चयालङ्कारः। तत्र क्रियासमुच्चयादिसप्तविधभेदकथनं। आक्षेपालङ्कारः। तत्र अनुकूलादि-

प्रपञ्चप्रपञ्चनं। अर्थान्तरन्यासालङ्कारः। तत्र प्रतीकादिषड्विधभेदकथनं। विशेषोक्त्यलङ्कारः। तत्र जातिक्रियादिद्वैकल्पेषु। परिकरालङ्कारः। तत्र क्रियापरिकरादिषोड़शविधभेदकथनं। एकावल्यलङ्कारस्य अत्रान्तर्भावकथनञ्च। दीपकालङ्कारः। तत्र सम्पुटरसनाचक्रवालादि-षोड़शभेदकथनं। क्रमालङ्कारः। तत्र शब्दपरिपाट्यादिचतुर्व्विधभेदकथनं। पर्य्यायालङ्कारः। तत्र निराकाङ्क्षादिभेदकथनं। अतिशयोक्त्यलङ्कारः। अभावातिशयप्रभावातिशयाद्यष्टविध-भेदकथनं। भाविकालङ्कारः। तत्र साभिप्रायोद्भेदादिपञ्चविधभेदकथनं। संसृष्ट्यलङ्कारः। एतत्प्रपञ्चप्रपञ्चनञ्च।

५मे परिच्छेदे, रसस्वरूपनिरूपणादिकं। सरसवाक्यं। कविशिक्षार्थं चतुर्व्विंशतिविधर-सान्वयविभूतिनिरूपणं। रसलक्षणं। स्थायिभावादीनां लक्षणं। रसनिष्पत्तिः। रसपोषकाः। रसाभास-प्रशम-शेष-विशेष-परिशेष-जन्म-विप्रलम्भ-पूर्व्वराग–मान–प्रवास–करुण–विप्रलम्भानां लक्षणादिकं। सम्भोगलक्षणादिकं। प्रेमपोषकाः। द्वादशनायकाः। प्रतिनायकोपनायकादीनां लक्षणं। उत्तमनायकलक्षणं। मुग्धादिनायिकाभेदाः। खण्डिताकलहान्तरितादिलक्षणं। पीठ-मर्द्दादीनि हीनपात्राणि। पाकविभागाः। नीलीकुसुम्भादिरागविभागादिनिरूपणं। प्रबन्ध-सन्धिनिरूपणं। उत्तमकाव्ये वर्णनीयानि। रतिलक्षणं। प्रीतिलक्षणं। रसभावतानिरूपणं। रसानुबन्धः। रतिहास-शोकादिरूपेण रसपोषणजननादिनिरूपणं। रतिहासादीनां लक्षणं। सञ्चारि-व्यभिचारिरूपेण रसस्य अनुबन्धानुगम-जन्म-पुष्टि-प्रकर्ष-सङ्कर-शेषाद्यवस्थानिरूपणं। तेषां प्रत्येकं लक्षणादिकथनञ्च। रसस्य द्वादशभेदाः। तत्र शृङ्गाररसः। वीररसः। करुणः। रौद्रः। अद्भुतः। भयानकः। वीभत्सः। हास्यरसः। प्रेयोरसः। शान्तरसः। उदात्तरसः। उद्धत-रसः। रतेर्नैसर्गिक्यादिसप्तविधभेदकथनं। एवं प्रीतेरपि ज्ञेयम्। शृङ्गवीरादिविविधभेद-कथनं। क्रोधस्य भीमादिचतुर्व्विंशतिभेदनिरूपणं। तत्र ललित-दुःखोत्पीड़-राजनिन्दोत्प्रासानां निरूपणञ्च। स्मितहसितादिनिरूपणं। स्वप्न-मरण-शमानां लक्षणं। रसाश्रय-विषय-ज्ञान-संस्का-राणां चैविध्यनिरूपणं। उद्दीपनविभावाः। सञ्चारिभावाः। लीला। विलासः। विच्छित्तिः। विभ्रमः। किलकिञ्चितं। मोटा(ट्टा)यितं। कुट्टमितं। विब्बोकः। ललितं। विहृतं। क्रीड़ितं। केलिः। हेला। हावः। भावः। व्याजः। विश्रम्भभाषणं। चाटु। प्रेमाभिसन्धानं। परिहासः। कुतूहलं। चकितञ्च। विप्रलम्भशृङ्गारनिरूपणं। सम्भोगशृङ्गारप्रपञ्चप्रपञ्चनं। विहरण-विमर्श बहुमान-दूतिक दूतप्रेषण प्रश्न-लेखविधान-लेखवाचन-माध्यम दोहदैः प्रेमपरीक्षाकीर्त्तनं। प्रशस्तादीनां चेष्टितादिवर्णनं। प्रथमानुरागायाः चेष्टितादिवर्णनं। मानप्रवासकरुणेषु विरह-निषिद्धादिकथनं। अभ्यवहारानुभवार्थादिनिरूपणं। प्रथमानुरागादित्यादौ समासहत्यादि-विवेचनं। प्रवासादौ विप्रतिपत्तिखण्डनं। शक्तिविचारः। कामिनीनां विनोदमानि, तत्र कुन्द-चतुर्थी-सुवसन्तक-मदनोत्सव-चूतभञ्जिका-पुष्पावचायिका-क्रीड़ाकदम्बयुद्धः--कृत्रिमविवाहा-दिक्रीड़ा-शक्रार्चा-कौमुदीमहोत्सव-दीपोत्सव-जलक्रीड़ाप्रेक्षा-द्यूत-मधुपानादिवर्णनञ्च। चक्रा-

प्रीति-मनःसङ्ग-प्रलाप-जागरादिस्मरदशानिरूपणं। नायकप्रतिनायकादीनां लक्षणं। धीरोद्धत धीरललितादीनां लक्षणं। शठधृष्टादिनायकानां लक्षणं। मुग्धादिनायिकालक्षणं। खण्डिता कलहान्तरितादीनां लक्षणं। हीनपात्रेषु शङ्कर-ललक-पीठमर्दविदूषकादीनां लक्षणं। पताकादिनिरूपणं। स्वद्धिकापाकादिनिरूपणं। नानालङ्कारसंसृष्टिकथनं। रसालङ्कारसङ्करनिरूपणं। लक्षणादिनिरूपणं। प्ररोचनाप्रस्तावनादिभेदनिरूपणं। वीथ्यादिनिरूपणं। प्रबन्धवर्णनीयनिरूपणञ्च।

---

**No. 3144.** श्रीभाष्यं वा शारीरकमीमांसाभाष्यं। Substance, country-made paper, 11 × 5 inches. Folia, 309. Lines, 11 on a page. Extent, 11,434 ślokas Character, Nágara. Date, Sm., 1889. Place of deposit, S'ántipura, Kálidása Vidyávágísa. Appearance, fresh. Prose. Correct.

**S'ríbháshya.** A commentary on the Vedánta aphorisms of Vyása. By Rámánuja. The object of this work is to establish the Visishṭádvaita theory. An edition of this work is now being printed by the Asiatic Society; and an abridgment of it has been noticed under No. 3142, (*supra*, p. 222).

**Beginning.** श्रीमते रामानुजाय नमः।

अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा॥
पाराशर्य्यवचःसुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां
संसाराग्निविदीपनव्यपगतप्राणात्मसंजीवनीं।
पूर्व्वाचार्य्यसुरक्षितां बहुमतिव्याघातदूरस्थिता-
मानीतान्तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहं॥

भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्व्वाचार्य्याः संचिक्षिपुः, तन्मतानुसारेण सूत्राक्षराणि व्याख्यायन्ते। अथातो ब्रह्मजिज्ञासा। अत्रायमथशब्द आनन्तर्य्ये भवति। इत्यादि—

**End.** वासुदेवः सर्व्वमिति स महात्मा सुदुर्लभ इति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयतीति सर्व्वं समञ्जसं।

**Colophon.** इति श्रीभगवद्रामानुजाचार्य्यविरचिते शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः।

अविस्तृतास्तु गम्भीरा रामानुजमुनेर्गिरः।
दर्शयन्तु प्रसादेन स्वं भावमखिलं हृद्॥
संवत् १८८९। पौष।

विषयः। ब्रह्मसूत्रव्याख्यानमुखेन विशिष्टाद्वैतत्वोपपादनं। अद्वैतवादादिनिरसनञ्च।

---

**No. 3145.** आनन्दमन्दाकिनी। Substance, country-made paper, 12 × 4 inches. Folia, 16. Lines, 8 on a page. Extent, 438 ślokas. Character, Nágara. Date, ? Place, of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, new. Verse. Correct.

**A'nandamandákiní.** A hymn in praise of Krishna, in course of which his various attributes are eulogised. By Madhusúdana Sarasvatí, disciple of S'rídhara Sarasvatí. Madhusúdana flourished during the reign of Akbar.

**Beginning.** वाग्देवी चतुराननपञ्चवदना नित्यं सहस्राननो-
ऽप्युच्चैर्यत्र जड़ात्मतामुपगताः केऽन्ये वराकाः सुराः।
मर्त्याः स्वल्पधियः कथं नु कुशलास्तत्राप्यहं प्रज्ञया
हीनः किं करवाणि तां व्रजकुलोत्तंसप्रशंसां तव॥
इत्यादि।

**End.** ये पाण्डित्यकवित्वसूनुधरणीधर्मार्थकामानिमा-
नीशित्वेन्द्रपदाग्निमोक्षमथवा वाञ्छन्ति भक्तिं हरौ।
सम्भूतां मधुसूदनस्य वदनः सन्तो भजन्त्वादरा-
त्ते संसारदवाग्निदाहशमनीमानन्दमन्दाकिनीं॥

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीधरसरस्वतीशिष्यश्रीमन्नन्दनन्दन-पदद्वन्द्वसमुद्यन्नखचन्द्रचन्द्रिकाचयपानमत्तचित्तचकोरश्रीमधुसूदनसरस्वतीविरचिता आनन्द-मन्दाकिनी समाप्ता।

विषयः। स्तोत्रव्याजेन श्रीकृष्णस्य रूपलीलामहिमादिवर्णनं।

---

**No. 3146.** वेदान्तस्यमन्तकः। Substance, country-made paper, 11 × 4 inches. Folia, 50. Lines, 5 on a page. Extent, 643 ślokas. Character. Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávagíśa. Appearance, new. Prose. Correct.

**Vedánta-syamantaka.** The elements of the Vedánta doctrine, in six chapters, the first treating of proof; the 2nd of the provable; the 3rd created beings; 4th, Nature. 5th and 6th, Time. By Rádhá-dámodara. Hall's Contributions, p. 103.

**Beginning.** सनातनं रूपमिहोपदर्शयन्
आनन्दसिन्धुं परितः प्रवर्द्धयन् ।
अन्तस्तमस्तोमहरः स राजतां
चैतन्यरूपो विधुरद्भुतोदयः ॥

प्रमाणैर्विना प्रमेयसिद्धिर्न इत्यतस्तानि तावत् निरूप्यन्ते। तत्र प्रत्यक्षमेकञ्चार्व्वाकः । इत्यादि ।

**End.** तदेवमेतत्पञ्चकविवेकी वर्णितसाधनसम्पत्तिमान् विशुद्धः श्रीहरिपदमुपलभ्य तत्रैव सर्व्वदा दीव्यतीति ॥

नित्यं निवसतु हृदये चैतन्यात्मा मुरारिर्नः ।
निरवद्यो निर्वृतिमान् गजपतिरनुकम्पया यस्य ॥
राधादिदामोदरनाम बिभ्रता
विप्रेण वेदान्तमयः स्यमन्तकः ।
श्रीराधिकायै विनिवेदितो मया
तस्याः प्रमोदं स तनोतु सर्व्वदा ॥

**Colophon.** इति श्रीवेदान्तस्यमन्तके षष्ठः किरणः । समाप्तश्चायं ग्रन्थः ।

विषयः । १मे किरणे,—प्रमाणनिरूपणं । तत्र प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धि-तिह्यसम्भवरूपचार्व्वाकादिपरिगृहीतप्रमाणाष्टकलक्षणं । प्रत्यक्षवादखण्डनं । उपमानार्थापत्त्या-दीनां प्रत्यक्षादिप्रमाणचितये अन्तर्भावनिरूपणं । शब्दप्रमाणस्य श्रेष्ठत्वकथनपूर्व्वकं प्रत्यक्षानु-मानयोः क्वचित् सव्यभिचारत्वप्रदर्शनञ्च ।

२ये किरणे,—प्रमेयनिरूपणं । तत्र ईश्वरलक्षणादिकं । स च सार्व्वज्ञ्यादिगुणवान् पुरुषोत्तम इति निरूपणं । परमैश्वर्य्यञ्च हरेरेव, रुद्रादिषु श्रूयमाणमीश्वरत्वन्तु राजसेवकेषु राजत्ववदिति संस्थापनं । नारायणशब्दः खलु श्रीपतेरेव संज्ञेतिनिरूपणं । विधिरुद्रयोरुत्पत्तिमत्त्वादिना जीवत्वकथनं । नारायणस्य जगदुपादाननिमित्तत्वकथनं । तस्य सच्चिदानन्दविग्रहत्वादि-निरूपणञ्च । वक्ष्यमाणतेव भगवतो लक्ष्मीरूपशक्तियुक्तत्वनिरूपणं । राधायाः स्वयंलक्ष्मीत्व-कथनञ्च ।

३ये किरणे,—जीवनिरूपणं,—तत्र तस्य अणुपरिमाणत्वं आनन्त्यकथनञ्च । एकजीववाद-निरसनं । जीवस्वरूपनिरूपणं । अणोरपि तस्य ज्ञानगुणेन सर्व्वाङ्गेषु व्याप्तिरितिप्रतिपादनं । जीवस्य परमात्मांशत्वकथनं । तस्य कर्तृत्वभोक्तृत्वनिरूपणञ्च । सांख्यमतखण्डनं । जीवस्य भग-

वद्वासत्वनिरूपणं। जीवेश्वरयोर्भेदः सार्व्वदिक इति निरूपणं। अविद्याप्रतिविम्बितं ब्रह्मैव जीव इति मताक्षेपः। ब्रह्मणा जीवानामभिन्नत्वबोधिकानां श्रुतीनां समन्वयादिकीर्त्तनं। जगतः सत्यत्वकीर्त्तनं। अतो न मूलकत्ववादनिरसनञ्च।

४र्थ किरणे,—प्रकृतितत्त्वनिरूपणं। तत्र प्रकृतेः त्रिगुणात्मकत्वं द्रव्यत्वकथनञ्च। सत्त्वादीनां लक्षणं। प्रकृतिपरिणामेन जगत्सृष्टिप्रकारकीर्त्तनं। पृथिव्यादीनां लक्षणं। पञ्चीकरणप्रक्रिया-कथनं। शरीरादीनां लक्षणं। कारणात् कार्य्यस्याभिन्नत्वनिरूपणञ्च।

५मे, ६ष्ठे, किरणे,—कालतत्त्वनिरूपणं। तत्र काललक्षणादिकं। तद्विभागादिकथनं। सृष्टेः प्रागपि तस्य सत्त्वनिरूपणञ्च। कर्म्मतत्त्वनिरूपणं। तल्लक्षणं। तस्य नित्यत्वादिविभागकीर्त्तनं। ज्ञानेन सति कर्म्मणि विनष्टे तेनैव जीवो हरिपदं प्राप्य अक्षयसुखभाक् तत्रैव निवसति ततः पुनर्न निवर्त्तते इतिनिरूपणं। परोक्षापरोक्षभेदात् ज्ञानस्य द्वैविध्यकथनं। तत्र अपरोक्षज्ञानं कृष्णादिनीसारसमवेतसम्बिद्रूपं, तच्च भक्तिशब्दव्यपदेश्यमितिनिरूपणं। अपरोक्षज्ञानस्य साक्षाद्-ब्रह्मप्रापकत्वकीर्त्तनञ्च। इति शम्।

---

**No. 3147. रत्नदर्पणः।** Substance, country-made paper, 13½ × 5 inches. Folia, 134. Lines, 10 on a page. Extent, 4,188 ślokas. Character, Nágara. Date, Sm. 1874. Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, fresh. Prose. Correct.

**Ratna-darpaṇa.** A commentary on the Sarasvatí-Kaṇṭhábharaṇa of Bhojdeva—a treatise on Rhetoric. By Ratnes'vara Mahámahopádhyáya.

**Beginning.** एकेन यस्य यमिनः प्रमदेव देह-
मर्द्धेन राजति पुमानिव चापरेण।
तत्त्वक्रमादथ च न प्रमदा पुमान् वा
श्रेयांसि वर्द्धयतु स स्मरशासनो वः॥
श्रीरामसिंहदेवेन दोर्द्दण्डदलितद्विषा।
क्रियतेऽवन्तिभूपालकण्ठाभरणदर्पणः॥
कण्ठाभरणमनर्घ्यं वाग्देवीरत्नदर्पणोत्सङ्गे।
अस्मिन् पश्यतु निभृतं प्रकाशसर्व्वाङ्गलावण्यं॥

ग्रन्थारम्भे समुचितेष्टदेवतानमस्कारेण शिष्टाचारमनुवर्त्तते, ध्वनिरिति। वाचामधिष्ठात्री-देवी द्योतमाना स्वप्रकाशशब्दब्रह्मरूपा भारती, कथमुपास्यते, सूक्ष्मादिभेदेन इत्यादि।

**End.** तस्मात्ययः प्रध्वंसप्रध्वंसः पुनः सङ्गममित्यनेन तस्यापि प्रध्वंसः, सुबोधमन्यत्॥

अद्य स्फुरतु वाग्देव्याः कण्ठाभरणकौतुकं ।
मयि प्रक्रमनोद्दत्तौ तस्मान्ने रत्नदर्पणं ॥

Colophon. इति महोपाध्यायमनीषिरत्नश्रीरत्नेश्वरविरचिते रत्नदर्पणनाम्नि सरस्वतीकण्ठाभरणविवरणे अर्थालङ्कारः तृतीयः परिच्छेदः ॥

रत्नेश्वरो नाम कवीश्वरोऽसौ
विराजते काव्यसुधाभिषेकैः ।
दुस्तर्कवज्राहत + + + +
वसुन्धरां पल्लवयन्नजस्रं॥
संवत् । १८७४ । पौष ।

विषयः । भोजदेवकृतसरस्वतीकण्ठाभरणाभिधानालङ्कारसन्दर्भस्य व्याख्यानं ।

---

**No 3148.** त्रिमङ्गलं । Substance, country-made yellow paper, 14 × 7 inches. Folia, 106. Lines, 14 on a page. Extent, 3,895 ślokas. Character, Nágara. Date, Sm. 1930. Place of deposit, Government of India. Appearance, new. Verse. Generally correct.

**Trimangala.** Poems on diverse subjects. Anonymous.

**Beginning.** अथ त्रिमङ्गलनामग्रन्थो लिख्यते ॥ जय जयानन्दसिन्धो परमगुरो सर्व्वलोकाभिराम त्वत्पदकमलमकरन्द उरस्ययमेव कामशिरोमणिः ।

**End.** एतच्छुभश्रवणतः श्रवणानि सिद्धिं संयान्ति हि श्रवणसारफलस्य लाभात् । संकेतबुद्धिरखिलश्रवणस्य तस्य श्रीसद्गुरोर्वरसि यच्चरणौ सहायौ ॥

**Colophon.** इति श्रीत्रिमङ्गलनाम्नि वात्तिकस्वरूपसुन्दरीतिलकरसमङ्गलं सम्पूर्णं ॥

विषयः । अत्र एकोनषष्ट्यध्यायाः सन्ति तत्र १ अध्याये गुरुसंयोगकथनं । २ मायायुद्भवकथनं । ३ मायाब्रह्मविवेचनं । ४ इन्द्रियनिरूपणं । ५ प्रेमभक्तिप्रकाशनं । ६ प्रणवसंकेतार्थप्रकाशनं । ७ परमार्थसारसूचनं । ८ सूक्ष्मांशाव्यक्तनिरूपणं । ९ आत्मनः सर्व्वस्वरूपत्वकथनं । १० सर्व्वसंशयकथनं । ११ लक्ष्मीनारायणवर्णनं । १२ जगतः परस्परभेदसन्देहनिवारणकथनं । १३ सप्तसिन्धुवर्णनं । १४ सोपद्वीपभरतखण्डवर्णनं । १५ जम्बूद्वीपस्य अष्टभौमस्वर्गवर्णनं । १६ भूलोकविवरणं । १७ ज्योतिःप्रक्रमः । १८ सूर्य्यस्य गतिनिरूपणं । १९ प्रथममण्डलस्थचान्द्रौयस्थूलगतिवर्णनं । २० नक्षत्रराशियुक्तद्वितीयमण्डलवर्णनं । २१ सप्तर्षियुक्ततृतीयचतुर्थमण्डलवर्णनं । २२ ध्रुवमण्डलकालभेदवर्णनं । २३ भुवर्लोकादिवर्णनं । २४ भूर्लोकेश्वरविवरणं । २५ ईश्वरभेदप्रकाशनं । २६ अखण्डानन्दस्वरूपशतकोटिकल्पद्रुमवर्णनं । २७ कालिन्दीभेदवर्णनं । २८ द्विपङ्क्तिभेदवर्णनं । २९ द्वादशकल्पद्रुमवर्णनं । ३० सरोवरसमीपस्थशतमन्दिरवर्णनं ।

३१ सरोवरमध्यस्थैकशतस्तम्भवर्णनं। ३२ सकलोर्द्धभूरसभेदवर्णनं। ३३ आनन्दसरोवर्णनं। ३४ द्विपङ्क्तिपञ्चदशसोपानवर्णनं। ३५ मोहनमन्दिरस्तम्भोर्द्धभूमिभेदवर्णनं। ३६ सरोभेदगर्भस्तम्भभूमिवर्णनं। ३७ अष्टभुवां सर्व्वसिंहासनस्वरूपभेदवर्णनं। ३८ सोपानपथवर्णनं। ३९ नित्योज्ज्वलरसवर्णनं। ४० अष्टादशाक्षरमन्त्रप्रकरणं। ४१ देवलसंयोगकथनं। ४२ चिच्छक्तिविभक्तिपरिमाणसंबोधनं। ४३ सहजानन्दांशविभागसंबोधनं। ४४ नित्यानित्यविभागप्रकाशनं। ४५ व्रजविनोदसंकेतरसस्तूचनं। ४६ रासरहस्यवर्णनं। ४७ मथुरालीलोपसंहारः। ४८ द्वारकालीलोपसंहारः। ४९ वेदपूर्व्वार्थसन्देहनिवारणं। ५० कलौ साधुनिरूपणं। ५१ जीवपरिभाषानिर्द्देशः। ५२ ईश्वरपरिभाषानिर्द्देशः। ५३ सत्पदार्थपरिभाषानिर्द्देशः। ५४ आनन्दपदार्थपरिभाषानिर्द्देशः। ५५ अचिन्त्यशक्तिपरिभाषानिर्द्देशः। ५६ चैतन्यपदार्थपरिभाषानिर्द्देशः। ५७ श्रद्धापदार्थपरिभाषानिर्द्देशः। ५८ परलोकपठोद्घाटनं १।

---

**No. 3149.** वाणीभूषणं। Substance, country-made paper, 12 × 4½ inches. Folia, 21. Lines, 10 on a page. Extent, 718 ślokas. Character, Nágara. Date, SM. 1897. Place of deposit, S'ántipura, Rámanátha Tarkaratna. Appearance, new. Prose and verse. Correct.

**Váníbhúshaṇa.** A treatise on versification. By Dámodara Miśra, of Mithilá.

**Beginning.** राजत्कुञ्जरराजकृत्तिविमलोद्यद्दुकूलावृति
भाजङ्गोगिफणामणिप्रविलसम्भूत्तामणिग्रामणि।
पादाम्भोजभजत्प्रफुल्लनिरणम्मञ्जीरमञ्जुद्युति
श्रेयो वः शिवशैलराजसुतयोर्द्दयादभिन्नं वपुः॥
सन्तीह यद्यपि महाकविसम्प्रणीत-
ग्रन्थास्तथापि मम वाञ्छितताविलासः।
सम्पूर्णशारदविधावुदयं प्रपन्ने
किं नाम नाभ्युदयमञ्चति तारकापि॥
अलसधियः प्राकृतमधिसुधियः केचिद्भवन्तीह।
कृतिरेषा मम तेषामाननमादीषदपि तोषम्॥
दीर्घघोषकुलोद्भूतो दामोदर इति श्रुतः।
छन्दसां लक्षणं तेन सोदाहरणमुच्यते॥

**End.** मात्रावृत्तमिह प्रोक्तं चत्वारिंशत्त्रयाधिकं।
अयोदशाधिकशतं वर्णवृत्तमिदं शुभं॥

Colophon. इति श्रीमैथिलदामोदरमिश्रविरचितो वाणीभूषणं नाम छन्दोग्रन्थः समाप्तः। संवत् १८९७। मार्गशीर्ष।

विषयः। प्रथमे उल्लासे,—प्रस्तारनिरूपणं। षट्कल-पञ्चकल-चतुष्कल-त्रिकल-द्विकल-एककलेषु गणानां नामकीर्त्तनं। अष्टगणानां देवताकथनं। मकारादिगणानां शुभाशुभसूचकत्व-निरूपणं। मात्राणामुद्दिष्टनिरूपणं। मात्रानष्टनिरूपणं। वर्णानामुद्दिष्टकथनं। वर्णमेरुकथनं। मात्रामेरुकथनं। वर्णपताकाकथनं। मात्रापताकाकथनं। वर्णमर्क्कटीकथनं। मात्रामर्क्कटी-कथनं। गाथालक्षणोदाहरणकीर्त्तनं। उपगीतिनिरूपणं। विगाथा। गीतिः। गाथिनी। सिंहिनी। स्कन्धकं। दोहा। ललितं। रोला। गन्धानकं। चौपैया। घत्तारत्तं। षट्पदं। पद्मा-वती। कुण्डलिका। गगनाङ्गनं। द्विपदी। खञ्जा। पज्झटिका। अरिल्ला। पादकुलकं। शिखा। माला। चुलियाला। सोरठा। हाकलिः। मधुभारः। आभीरं। दुर्म्मिला। बलिरा। दीपकं। सिंहविलोकितं। प्लवङ्गमः। लीलावती। हरिगीतं। त्रिभङ्गी। हीरकं। जनहरणं। मदनगृहं। मरहट्टा। नवपदं। अत्र सर्व्वेषां लक्षणोदाहरणनिरूपणञ्च।

द्वितीये उल्लासे,—वर्णवृत्तनिरूपणं। तत्र श्रीवृत्तनिरूपणं। कामः। मधु। मही। सारु। माली। प्रिया। शशी। रमणः। पाञ्चालः। मृगेन्द्रः। मन्दरः। कमलं। तीर्णा। धारि। नगा-निका। सम्मोहा। हारी। हंसः। यमकं। शेषा। तिलका। विमोहा। चतुरंशा। मन्थानः। शङ्खनारी। सुमालतिका। दमनकः। समानिका। सुवासकं। करहञ्चि(?)। शीर्षा। विद्युन्माला। मल्लिका। प्रमाणिका। तुङ्गा। कमलं। माणवकक्रीडितं। अनुष्टुप्। महालक्ष्मी। सारङ्गिका। पाइत्ता। कमलं। बिम्बं। तोमरं। रूपमाली। संयुतका॥ चम्पकमाला। सारवती। सुषमा। अमृततिलका। बन्धुः। सुमुखी। शालिनी। दमनकं। सेनिका। मालती। इन्द्रवज्रा। उपेन्द्र-वज्रा। उपजातिः। रथोद्धता। स्वागता। विद्याधारः। भुजङ्गप्रयातं। लक्ष्मीधरं। तोटकं। सारङ्गं। मौक्तिकदाम। मोदकं। तरलनयनिः। सुन्दरी। प्रमिताक्षरा। मायावृत्तं। तारकं। कन्दं। पङ्क्तावलिः। पुष्पिताग्रा। वसन्ततिलका। चक्रं। सारङ्गी। चामरं। मालिनी। भ्रमरा-वली। मनोहंसः। शरभः। निशिपालः। नाराचः। नीलं। चञ्चला। ब्रह्मा। पृथ्वी। माला-धरः। शिखरिणी। मन्दाक्रान्ता। हरिणी। मञ्जीरा। चर्च्चरी। क्रीडाचन्द्रः। शार्दूलविक्री-डितं। चन्द्रः। धवलं। शम्भुः। गीतिः। गण्डका। स्रग्धरा। नरेन्द्रः। हंसी। सुन्दरिका। दुर्म्मि-लिका। किरीटं। शालूरं। सर्व्वत्र लक्षणोदाहरणकथनञ्च।

---

**No. 3150.** पर्य्यायरत्नमाला। Substance, country-made paper, 12 × 4 inches. Folia, 18. Lines, 8 on a page. Extent, 221 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Rámanátha Tarkaratna. Appearance, old. Verse. Incorrect.

**Paryáyaratnamálá** A vocabulary of medical terms. By Mádhava Kara.

**Beginning.** प्रणम्य परमं देवं दुःखत्रयहरं परं ।
संसारसागरोत्तारहेतुं सेतुमिवोत्थितं ॥
पर्य्यायरत्नमालेयमायुर्व्वेदार्णवोत्थिता ।
विविच्यते मया सारा नातिसंक्षेपविस्तरा ॥
(धार्य्या भिषग्भिर्दा कण्ठे नातिसंक्षेपविस्तरा) ।
किं करोति नरः शूरः समरे शस्त्रवर्ज्जितः ।
तद्वत्पर्य्यायरहितश्चिकित्सायां चिकित्सकः ।
तेन नामानि वक्ष्यामि श्लोकेनार्द्धेन पादतः ।
इत्यादि ।

**End.** सुरूपा सुपदन्यासा सत्कुलोत्था सुभाषिणी ।
प्रियेवास्तु सतां कण्ठे मालेय यावदोषधं ।
भिषजा माधवेनैषा शिलाह्रदनिवासिना ।
यत्नेन रचिता रत्नमाले + करसूनुना ॥

**Colophon.** इति भट्टमाधवकविरचिता रत्नमाला समाप्ता ।

विषयः । आयुर्व्वेदीयोक्तशब्दानां पर्य्यायकथनं ।

---

**No. 3151. राक्षसकाव्यटीका ।** Substance, country-made paper, 12 × 4 inches. Folia, 8. Lines, 7 on a page. Extent, 285 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Rámanátha Tarkaratna. Appearance, old. Prose. Correct.

**Rákshasakávya-ṭíká.** A commentary on a poem called the Rákshasakávya. By Premadhara S'armá. Other commentaries have been noticed in Vol. II, p. 186, No. 782; Vol. VII, p. 153, No. 2389; Vol. VIII, No. 2821.

**Beginning.** गौर्य्याः प्राणपतिं नत्वैव मत्वा श्रीप्रेमशर्म्मणा ।
टीका राक्षसकाव्यस्य क्रियते साधुबोधिनी ॥
कश्चित् अनिर्द्दिष्टः ना पुरुषः—इत्यादि ।

**End.** कीदृश्या देव्या रुचिरया दीप्तिमत्या सुन्दर्य्या इत्यर्थः ।

**Colophon.** इति श्रीप्रेमधरशर्म्मविरचिता राक्षसकाव्यटीका सम्पूर्णा ।

विषयः । राक्षसकाव्याभिधानप्रहेलिकामयकाव्यस्य व्याख्यानम् ।

**No. 3152.** भक्तिसन्दर्भः। Substance, country-made paper, 12 × 4 inches. Folia, 112. Lines, 12 on a page. Extent, 4,536 ślokas Character, Bengali Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, very old. Prose and verse Correct.

**Bhaktisandarbha.** An essay on the Bhakti system of religion as described in the Bhágavata Puráṇa, By Jíva Gośvámí. *Vide ante* Vol. IV, pp. 231, 243, 244, 245.

**Beginning.** तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ।
दाक्षिणात्येन भट्टेन पुनरेतद्विविच्यते॥
तस्याद्यं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितम्।
पर्य्यालोच्याथ पर्य्यायं कृत्वा लिखति जीवकः॥

तत्र पूर्व्वं सन्दर्भचतुष्टयेन सम्बन्धो व्याख्यातः। तत्र पूर्णसनातनपरमानन्दलक्षणपरतत्त्वरूपमित्यादि।

**End.** — — — — — —
यदेतभत् सर्व्वं चरणकमलं राजति ययोः।
कृपामाध्वीकेन स्नपितनयनाम्भोजयुगलौ
सदा राधाकृष्णावशरणगतौ तौ मम गतिः॥

**Colophon** इति कलियुगपावनस्वभजनविभजनप्रयोजनावतारश्रीभगवत्कृष्णचैतन्यदेवचरणानुचरविश्ववैष्णवराजसभासभाजनश्रीरूपसनातनानुशासनभारतीगर्भे श्रीभागवतसन्दर्भे भक्तिसन्दर्भो नाम पञ्चमः सन्दर्भः।

विषयः। स्वभावतो भगवद्भक्तानां मोपदेशान्तरापेक्षेति निरूपणं। भगवत्साम्मुख्योपदेशः। भगवतो गम्यत्वादिनिरूपणं। ज्ञानयोगकर्म्मणां भक्तिसचिवत्वकथनं। भक्तेः प्राधान्यं। भक्तेः स्वरूपगुणकथनं। स्वर्गादेः क्षयित्वकथनं। भक्तेर्निरपेक्षत्वं। भक्तिरेव अपवर्ग इति निरूपणं। परमात्मभगवतोर्वैलक्षण्यकथनं। अन्वयव्यतिरेकाभ्यां श्रीकृष्णतत्त्वनिरूपणं। भगवद्बहिर्मुखधर्म्मादीनां निन्दा। भगवदनर्पितकर्म्मणामनादरः। भक्तेर्नित्यत्वं। श्रवणादीनां लक्षणं। भक्त्याभासस्य दुष्टत्वकथनं। भगवतो निर्गुणत्वकथनं स्वप्रकाशतापरानन्दत्वकथनञ्च। निष्कामभक्तिप्रशंसा। तत्राधिकारादिभेदकथनं। सत्सङ्गः। भक्तिसाधकलक्षणं। भगवत्प्राप्तिनिदानं। महत्त्वलक्षणतद्भेदकथनं। विधिमार्गभक्तयोस्तारतम्यं। गुर्व्वाश्रयप्रकारः। भक्त्याविर्भावक्रमनिरूपणं। रुचिप्रधानमार्गस्य श्रेष्ठत्वं। साम्मुख्यभेदतल्लक्षणादिकथनं। अहंग्रहोपासना। भक्तेस्तटस्थलक्षणं। स्वरूपलक्षणञ्च। आरोपसिद्धा भक्तिः। सङ्गसिद्धा भक्तिः। स्वरूपसिद्धा भक्तिः। पुनः सकैतवाकैतवभेदेन भक्तेर्द्वैविध्यं। वैधीभेदकथनं। रागानुगा। श्रवणकीर्त्तनादिकं। अर्च्चनाविधिः। द्वात्रिंशदपराधाः। दास्यसख्यादि-

निरूपणं । अनुरागविचारः । भगवति पतिभावकर्त्तव्यता । भजनमाहात्म्यं । सिद्धिक्रमकथनञ्च । ग्रन्थोऽयं तत्त्वसन्दर्भादिवत् श्रीमद्भागवतटीकास्थानीयः ।

---

**No. 3153. वृषोत्सर्गकौमुदी** | Substance, country-made paper, 13 × 4 inches. Folia, 18. Lines, 11 on a page Extent, 952 ślokas. Character, Bengali Date, ? Place of deposit, S'ántipura, Guptipádá, Rámadhana Vidyálaṅkára. Appearance, old. Prose and verse. Correct.

**Vṛishotsarga-kaumudí.** A digest of the rules regarding the consecration of a bull at the first S'ráddha ceremony. By Rámkṛishṇa.

**Beginning.** ब्रह्माद्यं नन्दतनयं प्रणम्य वरदं हरिम् ।

तन्यते रामकृष्णेन वृषभोत्सर्गकौमुदी ॥

अशौचान्तद्वितीयदिनवृषोत्सर्गदिने किं कर्त्तव्यमित्याकांक्षायां तदुच्यते । आदावमुदयसमये आद्यश्राद्धाङ्गतया स्नानं कर्त्तव्यं । यथा श्राद्धाधिकारे देवलः ।

तथैवामन्त्रितो दाता प्रातःस्नातः सहाम्बरः ।

आरभेत नवैः पात्रैरन्वारम्भं सबान्धवः ॥ इत्यादि ।

**End.** प्रतोद्देश्यककर्म्मत्वमेव श्राद्धत्वं । उद्देश्यता च फलभागित्वेन स्वामित्वेन वेति । अन्ये तु अन्नघटश्राद्धमाद्यायेति वदन्ति ।

**Colophon.** समाप्तेयं वृषोत्सर्गकौमुदी ॥

विषयः । वृषोत्सर्गकालः । अरुणोदयकाले प्रेततर्पणनिषेधः । त्रिविधस्नानादिनिरूपणं । अशौचस्य अशुभत्वकथनं । महागुरुनिपाते पुत्रस्य अतिथिपूजादिनिषेधः । रात्रौ सद्यःशौचे परदिने शय्यादिदानं नास्तीतिकथनं । एकादशेऽह्नि पुत्रेण तर्पणं न कार्य्यमिति निरूपणं । सर्व्वत्र यजुर्व्वेदोक्ताग्निमन्त्रविधानं । तिलदानविचारादिकं । वैतरणीदानविधिः । अशौचान्तद्वितीय-दिनकृत्यं । दानविचारः । दक्षिणावाक्यविचारः । दाने इतिकर्त्तव्यता । दानफलं । दानदैवतं । वृषोत्सर्गफलं । तत्संकल्पः । नीलवृषलक्षणं । अनुपनीतस्यापि अमावास्याश्राद्धाधिकारः । मासिकेऽपि वृषोत्सर्गकथनं । यज्ञपात्रनियमः । होमप्रकारः । वत्सतर्य्यादिलक्षणं । यूपकाष्ठनियमः । षोडश-श्राद्धसंकल्पः ।

---

**No. 3154 चन्दनधेनुदानप्रमाणम्** | Substance, country-made yellow paper, 15 × 3 inches. Folia, 6. Lines, 6 on a page. Extent, 162 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágíśa; another copy at Dvárbháṅgá, Bábu Guṇeśvara Siṅha. Appearance, old. Prose and verse. Correct.

**Chandana-dhenudána.** A manual for the consecration of a bull by marking its sides with sandal-paste at a S'ráddha ceremony. By Váchaspati Miśra. The rite here described is a Vaishṇavite modification of the rite described in the next preceding work. In the former case branding with a hot iron is prescribed, and in this the branding is replaced by marking with sandal-paste.

**Beginning.** नत्वा शिवं चन्दनचर्च्चिताया धेनोः प्रदाने सविधिप्रयोगम् ।
रत्नाकरादेर्निखिलं विलोक्य तनोति वाचस्पतिरग्र्यबुद्धिः ॥
अथ चन्दनधेनुदानविधिः । तत्र रत्नाकरे देवलः ।
जीवद्भर्त्तृ तु या नारी पुत्रिणी म्रियते यदि ।
सवत्सामङ्कितां धेनुमाचार्य्याय प्रदापयेत् ॥ इत्यादि ।

**End.** यत्तु जीवत्पितृकवृषोत्सर्गनिषेधे पतिपुत्रवत्याः पृथगुपसंहारः सोऽपि तस्याः पुत्रानधिकारमात्रप्रयुक्तवृषोत्सर्गाभावः ।

**Colophon.** इति वाचस्पतिमिश्रविरचितं चन्दनधेनुप्रमाणं समाप्तम् ।

विषयः। पतिपुत्रवत्या मरणे चन्दनधेनुदानकर्त्तव्यता । तत्र वृषोत्सर्गनिषेधः । यूपलक्षणादिकं । धेनुलक्षणं । विदग्धिमन्न्यासिनां मरणे श्राद्धविधिः । न तु एकोद्दिष्टश्राद्धमिति निरूपणं । सपत्नीपुत्रेण चन्दनधेनुदानप्रतिषेधः। श्रेष्ठत्वनिरूपणं । धेनुदानप्रयोगः । तिर्य्यगधिकरणं। विरुद्ध-वचनानां समन्वयः।

---

**No. 3155.** तिथिद्वैधनिर्णयप्रकरणं वा तिथिविवेकः । Substance, country-made yellow paper, 15 × 3 inches. Folia, 12. Lines, 5—6 on a page. Extent, 297 ślokas. Character, Bengali. Date, ? Place of deposit, Sántipura, Kálidása Vidyáva'giśa. Appearance, old. Prose and verse. Correct.

**Tithiviveka** ALIAS **Tithidvaidhanirṇaya-prakaraṇa.** A dissertation on the lunar days with reference to the performance of a ceremony when two lunations occur in the same day. By S'úlapáṇi Mahámahopádhyáya. This is the original from which the Tithitattva of Raghunandana has been copied.

**Beginning.** वचनाद्द्वैधसञ्जातसंशयच्छिदुरः सताम् ।
तनोतु मुदमत्युच्चैर्द्विखण्डतिथिनिर्णयः ॥
प्रतिपदादितिथिविशेषविहितानां स्नानदानादिकर्म्मणां खण्डतिथौ निःसंशयमनुष्ठानमित्यादि।

End. न च तदा युग्मादरः कार्य्यः, द्वितीयातृतीयायुग्मदिने द्वितीयाविहितकर्म्मणि द्वितीयाविहितकालस्य अलाभादित्यर्थः ।

Colophon. इति साडड़ियालमहामहोपाध्यायश्रीशूलपाणिविरचितं तिथिद्वैधनिर्णयप्रकरणं समाप्तम् ।

विषयः । सखण्डतिथिव्यवस्थानिरूपणं । तृतीयाश्राद्धकालः । जन्माष्टमी । सुखदाविजयादीनां लक्षणादिकथनम् ।

---

No. 3156 गङ्गास्नानादिसंकल्पवाक्यदीपः । Substance, country-made paper, 12 × 4 inches. Folia, 8. Lines, 6 on a page. Extent, 243 ślokas. Character, Bengali. Date, ? Place of deposit, Sántipura, Guptipádá, Rámadhana Vidyálaṅka'ra. Appearance, old. Prose and verse. Correct.

**Gaṅgásnánádi-saṅkalpavákyadvípa** Rules for bathing in the river Ganges and the merit of bathing therein on particular ceremonial days. By Jayakrishṇa Bhaṭṭácharya. A chapter is given on bathing in the Brahmaputra river.

Beginning नत्वा ब्रह्ममयीं गङ्गां जयकृष्णेन धीमता ।
तज्जले स्नानसंकल्पवाक्यदीपः प्रकाश्यते ॥

अथ गङ्गाध्यानं । चतुर्भुजामित्यादि ।

End. ब्रह्महत्याफलं तेषां सततं संशयात्मनां ।

Colophon. इति श्रीजयकृष्णभट्टाचार्य्यविरचितः गङ्गास्नानादिसंकल्पवाक्यदीपः समाप्तः ।

विषयः । गङ्गापूजाप्रयोगः । तत्र स्नानादिसंकल्पवाक्यविचारः । गङ्गामाहात्म्यं । नक्षत्रपर्व्वस्नानादिनिरूपणं । ब्रह्मपुत्रस्नाननिरूपणं । दशहरा । गङ्गायात्रावीक्षणादिफलकथनं । गङ्गायां मरणादिफलकथनं । गङ्गात्यागदोषकीर्त्तनञ्च ।

---

No. 3157. प्राकृतकामधेनुः । Substance, country-made paper, 16 × 3 inches. Folia, 4. Lines, 5 on a page. Extent, 74 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, decayed. Prose. Correct.

**Prákrita-kámadhenu.** On the spelling, declension and conjugation of Prákrita words. By one whose name is in three places written "Vávana," but in the epithet Lankesvira, 'lord of Laṇka,' in the name of the next following work, there is a proof in support of the reading Rávana, and it is said that Rávaṇa wrote a work in connexion with

Prákṛit Grammar. It is futile, however, to suppose that any Prákṛit language had been formed when the antagonist of Ráma lived.

**Beginning.** ब्रह्माणमादौ शिरसा प्रणम्य पितामहं मातरमादिविद्यां ।
श्रीरावणेनामलबुद्धिभाजा विधीयते प्राकृतकामधेनुः ॥
विस्तारादुदितं पूर्व्वं संक्षेपादधुनोच्यते ।
बालबोधकरं सूत्रं दृष्टो यादृङ्नवोद्भवम् ॥
देशकृष्या प्रतीतानां तद्भवानां निगद्यते ।
लक्षणं नेह यत्सिद्धं तत्समं (ऽ)शजञ्च तत् ॥
कचटतपां प्रायेण लोपोऽनादौ इत्यादि ।

**End.** योषिति महिला । योषिदर्थे महिलाशब्दः प्रयुज्यते ॥

**Colophon.** इति रावणकृता प्राकृतकामधेनुः समाप्ता ।

विषयः । प्रकृतिप्रत्ययकथनपूर्व्वकं प्राकृतभाषायाः पदसाधनादि ।

---

**No. 3158. प्राकृतलङ्केश्वरः ।** Substance, country paper, 14 × 3 inches. Folia, 5. Lines, 4 on a page. Extent, 59 ślokas Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, decayed. Prose. Incorrect.

**Prákṛitalaṅkeśvara.** A gloss on the Prákṛita section of a grammar of the Sanskrit language by S'esha Nága. By Rávaṇa. The Rávaṇa in this and the next preceding work is obviously distinct from the ten-headed monster.

**Beginning.** मूलं,—दसोर्लोप इत्यादि ।
वृत्तिः,—शङ्करस्य पदाम्भोजं प्रणम्य परमादरात् ।
वक्ष्ये प्राकृतपादेऽहं शेषनागैर्यथोदितम् ।

**End.** मूलं,—योद्दिनः ।
वृत्तिः,—सवणं वचनं दवणं बोधवं ।

**Colophon.** इयं प्राकृतलङ्केश्वररावणेन विरचिता वित्तौ पढमपाअं सम्पूणम् ।

विषयः । शेषनागविरचितस्य प्राकृतव्याकरणसूत्रस्य सोदाहरणा वृत्तिः ।

---

**No. 3159. उत्कलिकामञ्जरीटीका ।** Substance, country paper, 16 × 4 inches. Folia, 12. Lines, 7 on a page. Extent, 357 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura Jayagopála Gosvámí. Appearance, new. Prose. Incorrect.

**Utkaliká-manjarí-ṭíká.** A gloss on Rúpa Gosvámi's poem named Utkalikámanjarí.

**Beginning.** आसीद्यस्मादुत्कलिकामञ्जरिरेषा
कर्कशचित्तग्रावनितान्तद्रुतिहेतुः ।
श्रीराधागोविन्दपदाब्जव्रतदायी
स श्रीरूपो भावुकभूपो जयतां नः ॥ इत्यादि ।

**End.** एकसप्तत्युत्तरचतुर्दशशतीगणिते ।१४७१। शालिवाहनस्य शाके अस्य स्तोत्रस्य निष्पत्तिः । षड्शीत्युत्तरषोड़शशतीगणिते (१६८६) तस्य शाके तु टीकाया उत्पत्तिः । शालिवाहनस्य संवत्सरगणनेन विक्रमादित्यस्यापि तद्बोध्यं विक्रमादित्यराजस्य पञ्चविंशोत्तरं शतं । पातयित्वा भवेच्छाकः स नृपः शालिवाहनः । इति वचनात् ।
इयमुत्कलिकावल्लरितत्प्रभावाल्पकाव्यकला ।
विद्याभूषणविहृता शश्वद्भावकविभूतये भूयात् ॥

**Colophon.** इति उत्कलिकामञ्जरीव्याख्या समाप्ता ।

विषयः । रूपगोस्वामिकृताया उत्कलिकामञ्जर्या व्याख्यानम् ।

---

**No. 3160. नाटकचन्द्रिका ।** Substance, foolscap paper, 13 × 1⅓ inches. Folia, 46. Lines, 5 on a page. Extent, 654 ślokas. Character, Bengali. Date, ? Place of deposit, Sántipura, Kálidása Vidyávágíśa. Appearance, new. Prose and verse. Incorrect.

**Náṭaka-chandriká.** A treatise on dramatic composition. By Rúpa Gosvamí.

**Beginning.** वीक्ष्य भरतमुनिशास्त्रं रसपूर्वसुधाकरञ्च रमणीयम् ।
लक्षणमतिसंक्षेपाद्विलिख्यते नाटकस्येदम् ॥
नातीवसङ्गतत्वाद्भरतमुनेर्मतविरोधाच्च ।
साहित्यदर्पणीया न गृहीता प्रक्रिया प्रायः ॥
दिव्येन दिव्यादिव्येन तथादिव्येन वा युतम् । इत्यादि ।

**End.** वीभत्से करुणे चारभटीवीरे भयानके ।
प्रायो रसेषु सर्वत्र भारतीकरुणादिषु ॥

**Colophon.** इति रूपगोस्वामिविरचिता नाटकचन्द्रिका समाप्ता ।

विषयः । नाटकस्वरूपकथनं । नायकभेदः । परोढोपपत्योस्तु गोपीः कृष्णञ्च विना गौणत्वकथनं । नाटकीयेतिवृत्तलक्षणं तद्भेदकथनञ्च । प्रस्तावना । नान्दीलक्षणोदाहरणादि । प्ररोचना । आमुखं । आमुखभेदः । तत्र कथोद्घात-प्रवर्तक-प्रयोगातिशयोद्घात्यकावलगितानां लक्षणादिकथनं । शृङ्गारो-

नरनाटके आमुखस्यावश्यकता। प्रस्तावनमास्थापनभेदादन्यमतेन आमुखस्य द्वैविध्यकथनादि। तयो-र्लक्षणोदाहरणानि। वीराद्भुतादिप्रायेषु प्रस्तावनौचित्यकीर्त्तनं। हास्य-वीभत्सादौ स्थापना-या आवश्यकत्वं। वीथीप्रहसननिरूपणं। सन्धिलक्षणं। वीजादिभेदेन पञ्चविधप्रकृतिनिरूपणं। तत्र वीज-विन्दु-पताका-प्रकरी-कार्य्याणां लक्षणादिकथनं। एषां विन्यासप्रकारः। कार्य्यस्य पञ्चविधा-वस्थाकथनं। तत्र आरम्भ-यत्न-प्राप्त्याशा-नियताप्ति-फलागमानां लक्षणादिकथनं। सन्ध्यङ्गानि। मुख-सन्धिलक्षणं। तस्य द्वादशाङ्गानि, तत्र उपक्षेप-परिकर-परिन्यास-विलोभन-युक्ति-प्राप्ति-समाधान विधान-परिभावणोद्भेद-करणानां लक्षणादिकथनं। प्रतिमुखसन्धिलक्षणं। अस्याङ्गानि, तत्र विलास-परिसर्प-विधुत-शम-नर्म्म-नर्म्मद्युति-प्रगमन-विरोध-पर्य्युपासन-पुष्प-वज्रोपन्यास-वर्णसंहाराणां लक्षणादिकथनं। गर्भसन्धिलक्षणं। अस्याङ्गानि, तत्र अभूताहरण-मार्ग-रूपोदाहरण-क्रम-संग्रहा नुमान-तोटकाधिवलोद्वेग-सम्भ्रमाक्षेपाणां लक्षणादिकथनं। अस्याङ्गानि, तत्र अपवाद-सम्फेट-विद्रव शक्ति-द्युति-प्रसङ्ग-छलन-व्यवसाय-विरोधन-प्ररोचना-विचलनादान-प्रतिषेध-च्छादनानां लक्षणादि-कथनं। निर्व्वहणसन्धिलक्षणं। अस्याङ्गानि, तत्र सन्धि-विरोध-ग्रहण-निर्णय-परिभाषण-प्रसादानन्द समय-कृति-भाषोपगूहन-पूर्व्वभावोपसंहार-प्रशस्तीनां लक्षणादिकथनं। सन्ध्यन्तराणि; तद्विन्यास-प्रकारः। तत्र साम-दान-भेद-दण्ड-प्रत्युत्पन्नमति-वध-गोत्रस्खलितौजो-धी-क्रोध-साहस-भय-माया-सं-वृति-भ्रान्ति-दूत्यहेत्ववधारण-स्वप्न-लेख-मद-चित्राणां लक्षणादिकथनं। नाटकभूषणानि, तत्र भूषणा-क्षरसंघात-हेतु-प्राप्त्युदाहरण-शोभातिशय-दृष्टान्ताभिप्राय-निदर्शन-सिद्धि-प्रसिद्धि-दाक्षिण्यार्थापत्ति-वि-शेषण-पदोच्चय-तुल्यतर्क-विचार-तद्विपर्य्यय-गुणातिपातातिशय-निरुक्त-गुणकीर्त्तन-गर्हणानुनय-भ्रंश-लेश क्षोभ-मनोरथानुक्तसिद्धि-सारूप्य-माला-मधुरभाषण-पृच्छोपदिष्ट-दृष्टानां लक्षणादिकथनं। शोभाप-दोच्चयादीनां केषाञ्चिदन्यमतेन लक्षणादिकथनं। चतुर्व्विधपताकास्थानलक्षणादिकथनं। अर्थो-पक्षेपकलक्षणादि। तत्र विष्कम्भलक्षणतद्भेदकथनं। चूलिकालक्षणं। अङ्कास्यलक्षणादि। अन्य मतेन अङ्कास्यलक्षणादिकथनं। अङ्कावतारलक्षणं। प्रवेशकलक्षणं। एषां विन्यासस्थानकथनादि। प्रकाशापवारितजनान्तिकानां लक्षणं। अङ्कस्वरूपकीर्त्तनं। गर्भाङ्कलक्षणादि। नाटकसामान्यकथनं। आकाशभाषितलक्षणं। भाषाविधानं। वृत्तीनामुत्पत्तिकथनं। भारतीवृत्तिलक्षणं। आरभटीलक्षणं। तत्र संक्षिप्तावपातन-वस्तूत्थापन-सम्फेटभेदेन आरभट्याश्चतुर्व्विधाङ्गकथनादि। सात्त्वतीलक्षणं। अस्या अङ्गानि, तत्र संलापोत्थापक-संघात्य-परिवर्त्तानां लक्षणादिकथनं। कैशिकीलक्षणं। अस्या अङ्गानि, तत्र नर्म्म-नर्म्मस्फुञ्ज-नर्म्मस्फोट-नर्म्मगर्भाणां लक्षणादिकथनं। रसविशेषे वृत्तिविशेषनियम-कीर्त्तनं। इति।

---

**No. 3161. अशौचचन्द्रिका।** Substance, country paper, 18 × 3½ inches. Folia, 22. Lines, 8 on a page. Extent, 825 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, fresh. Verse. Correct.

**Aśaucha-chandriká.** A digest of the rules regarding impurities of the person caused by accidents. By Rájakṛishṇa Tarkavágíśa, Bhaṭṭácháryya.

**Beginning.** श्रीकृष्णचरणं नत्वा श्रीराजकृष्णशर्म्मणा ।
स्मृतियुक्तिसुदीप्तेयं तन्यतेऽशौचचन्द्रिका ॥

**End.** एषां फलं विधानञ्च इतिकर्त्तव्यतादिकं ।
प्रयोगे चानुसन्धेयं विस्तराद्गदितं मया ॥

**Colophon.** इति महामहोपाध्यायश्रीराजकृष्णतर्कवागीशभट्टाचार्य्यगोस्वामिविरचिता अशौचचन्द्रिका समाप्ता ।

विषयः । श्राद्धाधिकारिक्रमः । जातिवाह्निकादिदेशत्रयप्राप्तिकथनं । पूरकपिण्डदानप्रयोजनसहितव्यवस्थानिर्णयः । नीरक्षीरदानं । षोडशश्राद्धकथनं । तत्राधिकारी । अशौचान्तद्वितीयदिनकृत्यं । वृषोत्सर्गकालाः । पितृसत्त्वे विमातुः स्वर्गादिकामनया तदकरणव्यवस्था । तत्र स्मार्त्तोक्तकर्म्मत्रयमैथिलोक्तकर्म्मपञ्चककथनं । वृषलक्षणं । चन्दनधेनुव्यवस्था । यूपलक्षणं । नित्यकाम्यभेदेन वृषोत्सर्गव्यवस्था । मासिकश्राद्धकालनिर्णयः । कुत्र सपिण्डनं नास्ति । प्रेतश्राद्धस्य नित्यता । एकोद्दिष्टविधिः । सपिण्डनाब्दिकयोः कालः । अशौचलक्षणं । तद्व्यवस्था । अशौचिनोऽन्नाशनेऽन्यस्याशौचं । कुत्र कुत्र अशौचं न प्रतिबन्धकं । महागुरवः । तन्मरणे वर्ज्जनीयद्रव्यनिरूपणं । परान्नकथनं । अक्षारलवणकथनं । सापिण्ड्यनिरूपणं । रजस्वलाशौचकथनं । गर्भस्रावाशौचकथनं । बालाशौचकथनं । सूतिकाषष्ठी । ऋणत्रयकथनं । पुत्त्रस्वर्णयोर्महिमा । ऊढ़कन्याशौचकथनं । असपिण्डाशौचकथनं । मृत्युविशेषाशौचकथनं । अशौचाभावव्यवस्था । प्रायश्चित्तविधिः । शवानुगमनाशौचकथनं । अस्थिसञ्चयकालः । अङ्गास्पृश्यत्वं । अशौचसङ्करः । अन्त्येष्टिपद्धतिः । सहगमनं । पर्णनरदाहः । अस्थिक्षेपः । अशौचशेषदिनकृत्यं । मुण्डनविधिः । दानं । पात्रं । देशः । दानप्रकारः । द्रव्यदेवताकथनं । भूम्यादिदाने फलविशेषकथनं । प्रतिग्रहविधिः । कलिधर्म्मः । अन्नदानकथनञ्च । इति समाप्तिः ।

---

**No. 3162. ज्योतिःसारसंग्रहः ।** Substance, country paper, $15\frac{1}{2} \times 3$ inches. Folia, 23. Lines, 6 on a page. Extent, 616 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Rámadhana Vidyávágíśa. Appearance, old. Prose and verse. Correct.

**Jyotihsára-sańgraha.** An essay on auspicious days for particular rites and ceremonies. By Hṛidaya'nanda Vidya'lańka'ra.

**Beginning** वन्देऽहं परमानन्दमज्ञानतिमिरापहं ।
भवसागरपाराय गीतं वेदाम्भोर्मुकः ॥
विद्यालङ्कारविख्यातहृदयानन्दशर्म्मणा ।
ज्योतिःशास्त्रं समालोक्य क्रियते सारसंग्रहः ॥ इत्यादि ।

**End.** पृथिव्यां चतुरो भागानेवं वर्षति वासवः ॥

**Colophon.** इति विद्यालङ्कारकृतज्योतिःसारसंग्रहः समाप्तः ॥

विषयः । विवाहः । तत्र विहिताविहितनक्षत्रसप्तशलाकादिकथनं । नाडीनक्षत्रकथनं । नक्षत्रविशेषे देवनरराक्षसगणकथनादि । निषेकः । तत्र चतुर्थदिनावधिषोड़शदिनपर्य्यन्तागमने प्रत्येकं फलकथनं । नामकरणं । अन्नप्राशनं । कर्णवेधः । उपनयनं । ऋग्वेदादीनामधिपतिकथनं । गृहनिर्म्माणयोग्यभूमिनिरूपणं । गृहनिर्म्माणप्रकारः । गृहारम्भः । लग्ननिर्णयः । गृहप्रवेशः । हलप्रवाहः । वीजवपनं । धान्यकर्त्तनं । नवान्नं । जातकनिरूपणं । यात्राकथनं । विद्यारम्भः । अश्विन्यादिनक्षत्राणां देवताकथनादि । लग्नकालनिर्णयः । ग्रहदृष्टिनिरूपणादि । विषुवादि-संक्रान्तिनिर्णयः । वारवेलाकथनादि । मृत्युयोगसिद्धियोगादिकथनं । प्रकीर्णकं । इति समाप्तिः ।

---

**No. 3163.** **विल्वमङ्गलटीका ।** Substance, country paper, 14½ × 3 inches. Folia, 19. Lines, 6 on a page. Extent, 520 ślokas. Character, Bengali, Date, SK. 1640. Place of deposit, S'ántipura. Harinátha Gosvámí. Appearance, old. Prose. Incorrect.

**Bilvamañgala-ṭíká.** A gloss on a hymn in praise of Krishṇa. By Bilvamañgala.

**Beginning.** तं श्रीकृष्णं ता गोपस्त्रियः अरीरमन्, रमो लङन्तात् लुङ् अन् । इत्यादि ।

**End.** हृदयात् मम मनसः यदि चेत् त्वं निर्यासि ।
तदा ते तव पौरुषं गणयामि महिमानम् ॥

**Colophon.** इति विल्वमङ्गलपुस्तकस्य टीका ।

विषयः । विल्वमङ्गलकृतश्रीकृष्णस्तवप्रबन्धस्य व्याख्यानम् ।

---

**No. 3164 पाणिग्रहादिकृत्यविवेकः।** Substance, country-made paper, 19 × 3 inches. Folia, 21. Lines, 5 on a page. Extent, 570 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántípura, Kálidása Vidyávágíśa. Appearance, fresh. Prose and verse. Correct.

**Páṇigrahádi-kṛitya-viveka.** A digest of the rules regarding the marriage ceremony and the most appropriate astrological conjunctions for the same. By Raghunátha Tarkabágíśa Bhaṭṭáchárya.

**Beginning.** कुञ्चिताधरेण पूरयन् वंशिकां प्रचलदङ्गुलिपंक्तिः।
मोहयन्निखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः॥
श्रीमता मथुरानाथतर्कवागीशधीमता।
पाणिग्रहादिकृत्यानां विवेकः क्रियते मया॥ इत्यादि।

**End.** कौर्म्मिभङ्गः प्रतिष्ठायां ग्रहे चौराग्नयाध्वनि।
चूड़ोद्वाहे भवेन्मृत्युरित्यादि मुनिसम्मतम्॥

**Colophon.** इति महामहोपाध्यायश्रीयुतमथुरानाथतर्कवागीशभट्टाचार्य्यकृते पाणिग्रहादिकृत्यविवेके मासादिविवेकः समाप्तः॥

विषयः। मासभेदकथनं। मुख्यचान्द्रमासलक्षणं तत्र मलमासलक्षणादिकञ्च। गौणचान्द्रमासलक्षणं। सावनमासलक्षणादि। चान्द्रसावनभेदेन द्विविधनाक्षत्रमासकथनं। पुनर्मलमासविवेकः। क्षयमासलक्षणादिकथनं। सौरचान्द्रसावननाक्षत्रभेदेन चतुर्व्विधवर्षलक्षणपरिमाणादिकथनं। संवत्सर-परिवत्सर-इद्वत्सर-अनुवत्सर-उद्वत्सरभेदात् पञ्चविधसौरवर्षकथनं। तत्र वल्लालसेनकृतदानसागरग्रन्थरचनाकालकथनं। समयाशुद्धिविचारः। तत्र विवाहादीनां व्यवस्थाकथनादिकञ्च। इति।

---

**No. 3165. विवादार्णवः।** Substance, country-made yellow paper, 17 × 4 inches. Folia, 59. Lines, 8 on a page. Extent, 1,632 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, fresh. Prose and verse. Generally correct.

**Vivádárṇava.** An essay on jurisprudence and civil law of the Hindus.

**Beginning.** विश्वेषां शरणं भवाम्बुदरविः सङ्कल्पचिन्तामणिः
प्रत्यूहतमोविनाशमिहिरः कीनाशभीनाशनः।
संसारैकमहार्णवे निपततां निस्तारबीजं सतां

गोविन्दः कृपया सुरासुरमहैर्वेन्द्यश्चिरं पातु वः ॥

स्मार्तश्रीरघुनन्दनप्रभृतयश्चण्डेश्वरः श्रीकरः

श्रीगोविन्दश्चलायुधौ च सरलाकारश्च धारेश्वरः ।

भट्टोदायविभागकश्च रघुनाथाख्यश्च लक्ष्मीधरो-

मिश्राचार्य्यमिताक्षराकृत इमे चान्या निबन्धादिकः ॥

एतेषान्तु मतानि सम्यगवलोक्यादाय सारं ततो

धीरश्रीयुतराजवल्लभमहाराजेन सम्प्रार्थिताः ।

नानाशास्त्रयथानुशीलनपरिश्रान्ताः स्वग्रन्थार्थदं

नानादेशनिवासिनोऽत्र मिलिताः कुर्म्मो विवादार्णवम् ॥ इत्यादि ।

End. तदभावे अर्द्धसकुल्यानामधिकारः । तदभावे समानोदकानां तदभावे सगोत्राणामित्यतः खण्डितत्वात् परिशेषवाक्यं नास्ति ॥

विषयः । वक्तव्यप्रतिज्ञा । वर्णादिप्रवृत्तिः । धर्मा इत्ययः । राजप्रशंसा । राजकर्त्तव्यलक्षणं । मन्त्रिलक्षणं । लेखकलक्षणं । दूतलक्षणं । राजवासस्थाननिरूपणं । राजधर्म्मः । ऋणादान विवाद-पदं । वृद्धिकथनं । कृतवृद्धिः । परमवृद्धिः । वृद्धिनिषेधः । आधिसिद्धिः । उद्धारणविधिः । ऋणदानविधिः । दायभागः । अपुत्रधनाधिकारी । वानप्रस्थयतिब्रह्मचारिणां धनभागिनः । स्त्रीधननिरूपणं । स्त्रीधनाधिकारिणः । अतः खण्डितम् ॥

---

No. 3166. शान्तिशतकटीका । Substance, country-made paper, 14 × 4 inches. Folia, 25. Lines, 10 on a page. Extent, 875 ślokas. Character, Bengali. Date, Sk. 1725. Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, old. Prose. Correct.

**S'ántiśataka-ṭíká**. A commentary on S'ilhana's century of verses on emancipation called *S'ánti-s'ataka*. By Rámánanda Tírtha.

**Beginning**. नत्वा गुरुं शिवं शक्तिं विष्णुं लम्बोदरं विभुम् ।

श्रीशान्तिशतकव्याख्यां कुर्व्वे सर्व्वसुखेच्छया ॥

इह किल सकललोकहितावतारः परमकारुणिकश्रीशिह्लनाचार्य्यः सकलरसमनुभूय संसार-विषदग्धानामुपशमनाय नवमरसेन श्लोकशतेन परमामृतं निर्म्मितवानित्यादि ।

**End**. भाष्यकाराश्च,—

यद्दृष्ट्वा न परं दृश्यं यद्भूत्वा न पुनर्भवः ।

यज्ज्ञात्वा न परं ज्ञेयं तद्ब्रह्मेत्यवधारय ॥

यन्न ज्ञानान्न परं ज्ञानं यत्सुखान्न परं सुखम् ।
यल्लाभान्न परो लाभस्तद्ब्रह्मेत्यवधारय ॥

Colophon. इति रामानन्दतीर्थकृतायां शान्तिशतकटीकायां जीवन्मुक्तिर्नाम चतुर्थः परिच्छेदः समाप्तः ॥

विषयः । शिल्हनकविकृतशान्तिशतकस्य व्याख्यानम् ।

---

No. 3167. चैतन्यचन्द्रामृतम् । Substance, country-made paper, 14 × 3½ inches. Folia, 64. Lines, 6 on a page. Extent, 284 ślokas. Character, Bengali, Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, old. Prose Incorrect.

Chaitanya-chandrámṛita. A hymn to Chaitanya in the course of which his attributes are described. By Prabodhánanda Sarasvatí.

Beginning. सुमत्तं चैतन्याकृतिमतिविमर्य्यादपरमा-
द्भुतौदार्य्यं वर्य्यं व्रजपतिकुमारं रसयितुम् ।
विशुद्धस्वप्रेमोन्मदमधुरपीयूषलहरीं
प्रदातुं चान्येभ्यः परपदमवद्वीपप्रकटम् ॥ इत्यादि ।

End. दृष्टं न शास्त्रं गुरवो न दृष्टा विवेचितं नापि बुधैः स्वबुद्ध्या ।
यथा यथा जल्पति बालभावात् तथैव मे गौरहरिः प्रसीदतु ॥

Colophon. इति प्रबोधानन्दसरस्वतीविरचितं श्रीचैतन्यचन्द्रामृतं समाप्तम् ।

विषयः । गौराङ्गस्तवनव्याजेन तद्रूपचरितादिवर्णनम् ।

---

No. 3168. महिम्नस्तवटीका । Substance, country paper, 13 × 4 inches. Folia, 13. Lines, 6 on a page. Extent, 297 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Rámayádava Chúḍámaṇi. Appearance, old. Prose. Incorrect.

Mahimnastava-ṭíká. A gloss on the hymn called Mahimnastava. By Parmánanda Chakravartí. Other glosses on the work are described under Nos. 1065, 2206, 2388.

Beginning. नत्वा गिरीशचरणौ गुरुरूपमाख्याति सूक्ष्मदैः ।
आचार्य्यः परमानन्दो महिम्नस्तवं मतः ॥

सर्व्वानन्दकवेर्ज्ञातो चिरण्यो यशश्चोदरौ ।
देवानन्दभवानन्दौ मिश्राराधितशङ्करौ ॥
श्रीमच्छिम्नस्तवपाठाच्छिन्नप्रीतिरभूद्यया ।
स चाप्युद्धविशुद्ध्यर्थं व्याख्यानं कुरुते ततः ॥

प्राक् दक्षिणापथे श्रीशान्तिकर्णिनामा नरपतिरासीत् । तस्यानित्युरभिपुष्पोद्याने प्रत्यहं पुष्पं चौरैर्नीयते । इत्यादि ।

**End.** साधकोऽपि शिवसायुज्यमाप्नोतीति शम् ।

**Colophon.** इति परमानन्दचक्रवर्त्तिकृतमहिम्नस्तुतिटीका समाप्ता ॥

विषयः । पुष्पदन्तकृतमहिम्नस्तुतिप्रबन्धस्य व्याख्यानम् ॥

---

**No. 3169.** काव्यदर्पणम् । Substance, palm-leaf, 13 × 2 inches. Folia, 251. Lines, 5 on a page. Extent, 2176 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágísa. Appearance, decayed. Prose. Correct.

**Kávyadarpaṇa.** A commentary on Mammaṭa Bhaṭṭa's Kávya-prakáśa. By Manodhara.

**Beginning.** आदितोऽष्टाद्यपद्यानि खण्डितानि——चमता इत्यनेन व्याजनिद्रायाः सफलत्वं चिरमित्यनेन लज्जापनयनद्वारा सम्भोगाङ्गीकरणं व्यज्यते । इत्यादि ।

**End.** 'गङ्गेव प्रवहतु' इत्यत्र विधिभेदं दर्शयति । 'गङ्गा प्रवहतु'।

**Colophon.** इति गङ्गाप्रवहणे । अतः खण्डितत्वात् समाप्तिवाक्यं नास्ति ॥

विषयः । मम्मटकृतकाव्यप्रकाशस्य व्याख्या ।

---

**No. 3170.** ज्योतिःसागरसारः । Substance, country-made yellow paper, 10 × 4½ inches. Folia, 29. Lines, 10 on a page. Extent, 717 ślokas. Character, Bengali. Date, ? Place, of deposit. S'ántipura. Rámadhana Vidyávágísa. Appearance, old. Verse. Correct.

**Jyotihságara-sára.** A treatise on astrology. By Vidyánidhí.

**Beginning.** जगदीशं रविं नत्वा लोकानुग्रहकारिणम् ।
ज्योतिःसागरसारोऽयं श्रीविद्यानिधिनोच्यते ॥

**End.** शीर्षे चत्वारि राज्यं युगपरिगणितं दक्षिणे चापि लक्ष्मी-
रेकं कण्ठे विभूतिर्मदनशरमितं वक्षसि प्रीतिलाभः ।
पादस्थाः षट् च पीड़ां विदधति च चतुर्व्वामहस्ते च मृत्यु-
र्लोष्टृत्वाण्येव नेत्रे नृपतिसमसुखं वाक्पतेः संक्रमेण ॥

**Colophon.** इति ज्योतिःसागरसारे पञ्चमोऽध्यायः ॥

विषयः । वारकथनं । वारगुणाः । वारवेला । कालवेला । कालरात्रिः । शुक्लाष्टम्यादि-तिथ्यङ्गाः । नन्दाभद्राजयादिकथनं । सिद्धियोगः । तिथ्यमृतयोगः । मृत्युयोगः । दग्धदिनकथनं । विष्टिकथनं । मासदग्धकथनं । कालघण्टायोगः । अवमदिनं । चन्द्रस्पर्शकथनं । नक्षत्राणि । नक्षत्र-देवताः । ध्रुवादिनक्षत्रगणः । अधोमुखनक्षत्रगणः । पार्श्वमुखनक्षत्रगणः । ऊर्द्धमुखनक्षत्रगणः । अमृत-योगः । विषयोगः । यमघण्टकयोगः । उत्पाटादियोगः । करकचाः । करणानि । सामान्ययोगाः । योगानां वर्ज्यदण्डकथनं । देशविशेषे योगव्यवस्था । राशिनक्षत्रविभागः । मासाः । राशयः । क्षेत्रा-धिपाः । होरा । द्रेक्काणाः । लग्नपरिमाणं । लग्नादिकथनं । रविभोगः । क्रूरसौम्यादिकथनं । चन्द्रादिशुद्धिः । वामवेधशुद्धिः । पक्षादिशुद्धिः । ताराशुद्धिः । नाडीनक्षत्राणि । सर्व्वौषधिः । चन्द्रयोगः । जन्मतिथिव्यवस्था । अष्टमचन्द्रादिप्रतीकारः । इति प्रथमोऽध्यायः ।

संक्रान्तौ रविशुद्धिः । भौमादिशुद्धिः । ग्रहभोगकथनं । ग्रहणादिकथनञ्च । इति द्वितीयो-ऽध्यायः । विवाहः । योटकादिविचारः । प्रीतिषड्ष्टककथनं । गणशुद्धिः । ग्रहशुद्धिः । दशयोगभङ्गः । सप्तशलाकाकथनं । विवाहयात्रा । यामित्रकथनं । नक्षत्राणां वर्ज्यादण्डकथनं । तिथिवारादिदोष-कथनं । दिवाविवाहदोषः । विहितलग्नकथनं । सुतहिबुकयोगः । गोधूलिकथनं । नववध्वागमनं । गर्भाधानं । षठीदानं । पञ्चामृतं । पुंसवनं । सीमन्तोन्नयनं । इति तृतीयोऽध्यायः ।

जातकसंज्ञादिकथनं । केन्द्रकथनं । ग्रहाणां दिक्कथनं । पापशुभकथनञ्च । उच्चनीचकथनं । मूलत्रिकोणकथनं । ग्रहाणां दृष्टिकथनं । अदृष्टिकथनञ्च । नवांशवर्गोत्तमकथनं । लग्ननिर्णयः । प्रसवकाले तत्स्थमनुष्यज्ञानं । गण्डनिरूपणं । नामकरणं । अन्नप्राशनं । नवान्नं । चूड़ाकरणं । नित्यक्षौरकथनं । कर्णवेधः । विद्यारम्भः । उपनयनं । व्रात्यलक्षणं । वेदवर्णाधिपकथनं । शयनकथनं । समावर्त्तनं । धनुर्व्विद्यारम्भः । राज्याभिषेकः । नववस्त्रपरिधानं । अलङ्कारधारणं । तैलदानं । नवशय्यादिसम्भोगः । औषधभक्षणं । आरोग्यस्नानं । नक्षत्रविशेषे ज्वरितस्य शुभा-शुभकथनं । नौकानिर्म्माणं । कृषिकर्म्म । वीजवपनं । अम्बुवाची । धान्यच्छेदनं । गृहारम्भः । गृहप्रवेशः । परीक्षा । इति चतुर्थोऽध्यायः ।

यात्रा । तत्र दिक्प्रशस्तवारकथनं । दिक्शूलकथनं । विहिताविहितनक्षत्राणि । योगिनी-निर्णयः । राहुकालानलचक्रं । उषायोगः । पुनर्भद्रकथनं । संक्रान्तिकथनञ्च । इति पञ्चमोऽध्यायः ।

---

**No. 3171.** रामानुजदर्शनम् । Substance, country-made yellow paper, 14 × 5 inches. Folia, 138. Lines, 12—13—14 on a page. Extent, 5,878 slokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágísa. Appearance, old. Prose. Correct.

**Rámánuja-darśana.** A metrical commentary on the Brahma-sútra, in course of which the theory of the qualified is developed. By Rámánuja.

**Beginning.** अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीपे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा ॥
पाराशर्य्यवचःसुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां
संसाराग्निविदीपनव्यपगतप्राणात्मसंजीवनां ।
पूर्व्वाचार्य्यसुरक्षितां बहुमतिव्याघातदूरस्थिता-
मानीतान्तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम् ॥

भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्व्वाचार्य्याः संचिक्षिपुः तन्मतानुसारेन सूत्राक्षराणि व्याख्यास्यन्ते ।

'श्री अथातो ब्रह्मजिज्ञासा श्री' । अत्रायमथशब्द आनन्तर्य्ये भवतीत्यादि ।

**End.** श्रुतिविरुद्धार्था कपिलस्मृतिरुपेक्षणीया । उपबृंहणञ्च, श्रुतिप्रतिपन्नार्थविशदीकरणं, तच विरुद्धार्थया स्मृत्या न शक्यते कर्त्तुं । न चैतासां स्मृतीनामित्यतः खण्डितत्वात् परिसमाप्तिवाक्यं नास्ति ।

**Colophon.** (द्वितीयाध्यायप्रथमपादकियदंशपर्य्यन्तं वर्त्तते ।)

विषयः । ब्रह्मसूत्रव्याख्यानप्रसङ्गेन विशिष्टाद्वैतमतसंस्थापनम् ।

---

**No. 3172.** घटकर्परटीका । Substance, country-made paper, 15½ × 3½ inches. Folia, 5. Lines, 5 on a page. Extent, 112 ślokas. Character, Bengali. Date, Sk. 1650. Place of deposit, S'ántipura, Bhuvaneśvara Tarkálaṅkára. Appearance, old. Prose. Incorrect.

**Ghaṭakarpara-ṭíká.** A gloss on a poem by Ghaṭakarpara on the rainy season. By Bharata Mallika.

Beginning रघुवंशप्रदीपस्य पदपङ्कजम् ।
नत्वा टीकां प्रयत्नेन तनोति भरतो भिषक् ॥ निश्चितमित्यादि ।

End. तस्मै कवये कुम्भपा—उदकं पाणीयं वच्चामि इत्यर्थः ।

Colophon इति भरतमल्लिककृतौ घटकर्परटीका समाप्ता ॥

विषयः । घटकर्परकृतवर्षावर्णनस्य व्याख्यानम् ।

---

**No. 3173.** देवीसूक्तभाष्यम् । Substance, country-made paper, 15 × 4 inches. Folia, 2. Lines, 8 on a page. Extent, 67 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Bhuvaneśvara Tarkálañkára. Appearance, old. Prose. Incorrect.

**Devísúkta-bháshya.** A commentary on a certain Vedic hymn called Devísúkta.

Beginning. अहमित्यष्टर्चं त्रयोदशसूक्तं । अम्भृणस्य महर्षेर्दुहिता वाग्यानाम्नी ब्रह्मविदुषी स्वात्मानमस्तौषीत् । इत्यादि ।

End. उदात्तनिहितस्वरेण तस्या उदात्तत्वं । छन्दसामालापः । इत्यष्टमस्य सप्तमे द्वादशो वर्गः ।

Colophon. इति देवीसूक्तभाष्यं समाप्तम् ।

विषयः । "अहं रुद्रेभिरित्यस्य ब्रह्माद्या ऋषय" इत्यादिदेवीसूक्तव्याख्यानम् ।

---

**No. 3174.** मेघदूतटीका, मनोरमा । Substance, country paper, 14 × 3 inches. Folia, 36. Lines, 7 on a page. Extent, 1,104 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Bhuvaneśvara Tarkálañkára. Appearance, decayed. Prose. Correct.

**Manoramá** ALIAS **Megdúta-ṭiká.** A commentary on the celebrated 'Cloud Messenger' of Kálidása, by Kavichandra. This is distinct from the commentaries noticed in Nos. 221, 399, 1966, 2103, 2383, 2740, 3076.

Beginning नत्वा गणेशपादाब्जं कविचन्द्रेण धीमता ।
टीका मनोरमा नाम मेघदूतस्य निर्म्ममे ॥ इत्यादि ।

End. इष्टार्थसम्पादनं भवति । प्रणयः प्रेम्णि विश्रम्भे । इति कोषः ॥

**Colophon.** इति महामहोपाध्यायश्रीकविचन्द्रकृता मेघदूतस्य मनोरमाटीका समाप्ता।
विषयः। कालिदासकृतमेघदूतस्य व्याख्यानम्।

---

**No 3175.** श्राद्धविवेकार्थकौमुदी। Substance, country-made paper, 16½ × 3 inches. Folia, 102. Lines, 7 on a page. Extent, 3,746 ślokas Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, decayed. Prose. Generally correct.

**S'ráddhaviveka-kaumudí.** A commentary on S'úlapáni's treatise on S'ráddhas. By Govinda.

**Beginning.** गोपीमोचनमन्त्रः सुधाभिषेको मुनीन्द्रचित्तानां।
श्रवणकरीन्द्र + + मुररिपुमुरलीध्वनिर्जयति॥
श्रीगोविन्दपदद्वन्दनखेन्दुरुचिसन्ततिः।
अन्तश्चिन्ताभिरुद्धान्तचित्तध्वान्तं धुनोतु नः॥
विरचितवानपि विदुषामतिहृद्यं श्राद्धकौमुदीतन्त्रम्।
शिष्याभ्यर्थनवशगः सम्प्रति गोविन्दो + + + श्रीमान्॥
कविकङ्कनपण्डितः पितुश्चरणाम्भोजयुगप्रसादतः।
विदुषां स हितोऽर्थकौमुदीं तनुते श्राद्धविवेकदीपनीं॥ इत्यादि॥

**End.** पलोदुहितृवदकिञ्चित् सकुल्यतया सम्बन्धः। अपकर्षादित्युक्तं प्रत्यक्तापि मातामहानां दौहित्राः। अतः खण्डितम्।
विषयः। शूलपाणिकृतश्राद्धविवेकस्य व्याख्यानम्।

---

**No. 3176.** शिशुपालबधटीका। Substance, country-made paper, 15 × 4 inches. Folia, 113. Lines, 7 on a page. Extent, 3,479 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Krishnamaya Gosvámí. Appearance, old. Prose. Incorrect.

**S'iśúpálbadha-ţíká.** A commentary on the *S'iś'úpálbadha* of Mágha. By Bharata Mallika.

**Beginning.** प्रणम्य शम्भुं भुवनाधिनाथं सपार्वतीकं भजदिष्टसिद्धिम्।
गौराङ्गमल्लीकसुतः सुबोधां माघस्य टीकां भरतः करोति॥

यद्यपि टीकामस्य प्राज्ञा बह्वो गरीयसीं चक्रुः ।

तथापि पठद्गृपपुत्रप्रीत्यै स्पष्टां लघुं कुर्व्वे ॥ इत्यादि ।

**End.** सुरसुन्दरीणां समागमेन ।

**Colophon.** इत्यतः खण्डितत्वात् परिसमाप्तिवाक्यं नास्ति ।

विषयः । माघकृतशिशुपालबधकाव्यस्य व्याख्यानम् ।

---

**No. 3177.** उपसर्गवृत्तिः । Substance, country-made paper, 13 × 3½ inches. Folia, 6. Lines, 6 on a page. Extent, 94 ślokas. Character, Bengali. Date, Sk. 1758. Place of deposit, S'ántipura, Kṛishṇamaya Gosvámí. Appearance, new. Verse. Incorrect.

**Upasarga-vṛitti.** A treatise on the uses of prefixes. By Bharata Mallika.

**Beginning.** पार्व्वतीशङ्करौ नत्वा बालानामुपकारिका ।

भरतेनोपसर्गाणां वृत्तिः स्वल्पा विधीयते ॥

प्रपरापसंन्यवान्वित्यादि ।

**End.** धातूपसर्गसंसर्गसम्भवाः कतिचिन्मया ।

प्रसिद्धाः सङ्गता अर्थाः शेषा ज्ञेयाः प्रयोगतः ॥

**Colophon.** इति भरतमल्लिककृतोपसर्गवृत्तिः समाप्ता ।

शाकेऽष्टशरसप्तेन्दुमिते चाषाढ़के कुजे ।

समाप्ता चोपसर्गाणां वृत्तिः प्रतिपदीन्दुभे ॥

विषयः । सोदाहरणं धातुसंसर्गजनितानां उपसर्गार्थानां प्रदर्शनम् ।

---

**No. 3178.** उत्कलिकामञ्जरी । Substance, country-made paper, 15 × 4 inches. Folia, 8. Lines, 5 on a page. Extent, 190 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Jayagopála Gosvámí. Appearance, new. Verse. Correct.

**Utkaliká-maṇjarí.** A hymn in praise of Rádhá and Kṛishna. By Rúpa Gos'vámí. A commentary on this has been noticed under No. 3159.

**Beginning.** प्रपद्य वृन्दावनमध्यमेकः क्रोशन्नसावुत्कलिकाकुलात्मा ।

उद्घाटयामि ज्वलतः कठोरां बाष्पस्य मुद्रां हृदि मुद्रितस्य ॥ इत्यादि ।

**End** पशुपालवरेन्द्रनन्दनौ वरमेतं मुहुरर्थये युवां ।
भवतु प्रणयो भवे भवे भवतोरेव पदाम्बुजेषु मे ॥
उद्गीर्णाभूदुत्कलिकावल्लरिरग्रे वृन्दाटव्यां नित्यविलासव्रतयोर्वां ।
वाङ्मात्रेण व्याहरतोऽप्युज्ज्वलमेतामाकर्ण्येशौ कामितसिद्धिं कुरुतं मे ॥
चन्द्राश्वभुवने शाके पौषे गोकुलवासिना ।
इयमुत्कलिकापूर्व्वा वल्लरी निर्म्मिता मया ॥

**Colophon.** इति श्रीरूपगोस्वामिविरचितोत्कलिकामञ्जरी समाप्ता ।

विषयः । अलब्धाभीष्टस्य तदुत्कण्ठया विगलितहृदयस्य च तदधिगमे स्वायोग्यत्वस्फूर्त्या उद्भिद्यमानदैन्यस्य भक्तस्य सक्रन्दोऽश्रुनिर्भरः पततीति स्तोत्रेणानेन सम्पाद्य तत्प्रसङ्गेन राधाकृष्णयोः सौन्दर्य्यवर्णनम् ।

---

**No. 3179. विशुद्धिदर्पनः ।** Substance, country-made paper, 16½ × 2½ inches. Folia, 31. Lines, 5 on a page. Extent, 441 ślokas. Character, Bengali. Date, SK. 1628. Place of deposit, S'ántipura, Harinátha Gosvámí. Appearance, decayed. Prose and verse. Correct.

**Viśuddhidarpana.** A treatise on religious purification. By Raghunandana.

**Beginning.** प्रणम्य बालगोपालं लसन्मकरकुण्डलम् ।
विशुद्धिदर्पणं चक्रे धीरः श्रीरघुनन्दनः ॥
तत्र विशुद्धिर्विहितकर्म्मार्हत्वप्रयोजकोऽदृष्टविशेषः । इत्यादि ।

**End.** तथापि मरणस्य अशौचहेतुत्वे षाण्मासाभ्यन्तरे यदशौचं स्यात् तदेवं स्यादिति जातमृते मरणस्यैव हेतुत्वात् तत्र तेनैव शुद्धिः ।

**Colophon.** इति विशुद्धिदर्पणः समाप्तः ।

विषयः । विशुद्धिलक्षणं । अशुद्धिपदार्थनिरूपणञ्च । एकादशाहादौ कथं शुद्धिरित्यादौ विचारः । ब्राह्मणक्षत्रियादीनामशौचकथनं । अशौचमध्ये यावत् सूर्य्योदयं तद्दिनेनैव सह गणनीयं । पक्षिणीव्यवस्था । जननाशौचनिरूपणं । पुत्रजनने सूतिकाया अशौचनिरूपणं । पुत्रकन्याजनने पितुः शुद्ध्यादिकथनं । जनकं सूतिकाञ्च वर्ज्जयित्वा जननाशौचे सपिण्डानां संस्पर्शो न दोषायेति कथनं । अशौचे विधिनिषेधनिरूपणं । तत्र सन्ध्यावन्दनादीनां व्यवस्था । नाडीच्छेदात् प्राक् दानादिग्रहणे न दोषः । सूतिकाषष्ठीपूजाविधानादि । अन्याशौचपातेऽपि पूजा कार्य्येति-कथनं । अशौचिनः सकाशात् आदानयोग्यद्रव्यादिकथनं । अतिक्रान्तेऽशौचे तच्छ्रवणव्यवस्था ।

अशौचादिपतितश्राद्धव्यवस्था । विदेशस्थाशौचं । स्नाशौचं । गर्भस्रावाशौचं । सपिण्डाद्यशौचं । भिन्नकुलजाताद्यशौचं । सद्यःशौचविधिः । मृत्युविशेषाशौचं । अशौचसङ्करव्यवस्थाकथनादि । इति समाप्तिः ।

---

**No 3180.** मुकुन्दचतुर्द्दशः । Substance, country-made paper, 16½ × 2½ inches. Folia, 2. Lines, 4 on a page. Extent, 43 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Harinátha Gosvámí. Appearance, decayed. Prose. Correct.

**Mukunda-chaturdaśa.** Fourteen stanzas in praise of Mukunda. By S'añkara A'chárjya.

**Beginning.** करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥

**End.** मन्दारैर्दिव्यमालाविरचितचिकुरो वेणुरन्ध्रेषु दृष्टि-
स्तिर्य्यग्ग्रीवाभिरामो ध्वनिषु मधुरिपुर्गेयसुद्गीयमानः ।
गोपानां दिव्यनारीनयनयुगशतैः साध्वसं वीक्ष्यमानः
क्रीड़ागोपालमूर्त्तिः स हरतु दुरितं देवदेवो मुरारिः ॥

**Colophon.** इति शङ्कराचार्य्यविरचितो मुकुन्दचतुर्द्दशाख्यस्तवः परिसमाप्तः ॥

**विषयः ।** श्रीकृष्णस्तवनम् ।

---

**No. 3181.** निर्व्वाणतन्त्रम् । Substance, country-made paper, 15 × 4 inches. Folia, 24. Lines, 7 on a page. Extent, 524 ślokas. Character, Bengali. Date, Sk. 1747. Place of deposit, S'ántipura, Háradhana Bhaṭṭáchárya. Appearance, very old. Prose. Incorrect.

**Nirváṇa-tantra.** An original Tantra discoursing on the leading Tanteric topics. It is distinct on the Mahánirvána Tantra.

**Beginning.** कैलासपर्व्वते रम्ये नानारत्नोपशोभिते ।
विपरीतरतासक्ता चण्डी पप्रच्छ शङ्करं ॥ इत्यादि ।

**End.** इति ते कथितं चण्डि सन्न्यासधारणं परं ।
न वक्तव्यं पशोरग्रे प्राणान्तेऽपि कदाचन ॥

**Colophon.** इति निर्व्वाणतन्त्रे सन्न्यासधारणं नाम चयोदशः पटलः समाप्तः । शकाब्दाः । १७४७ ॥

**विषयः।** देवीसमीपे देवदेवस्य जगदुत्पत्तिप्रकारकथनं। तत्र यथाक्रममाकाशवायुरविजला-दीनामुत्पत्तिः। कूर्म्मपृष्ठस्थानन्तकर्त्तृकब्रह्माण्डधारणं। संक्षेपेण ब्रह्माण्डवर्णनं। सत्यलोकस्थिताया निराकारायाः शिवशक्तेः, ब्रह्मविष्णुसदाशिवानां तथा सावित्रीश्रीविद्ययोरुत्पत्तिकथनं। सावित्रीश्रीभ्यां सह ब्रह्मविष्ण्वोर्विवाहः। भुवनसुन्दर्य्या समं सदाशिवस्य विवाहकथनञ्च। इति १ पटलः।

वह्नेर्विस्फुलिङ्गवत् जीवानां अनादिपुरुषांशत्वं। चतुरशीतिलक्षजन्मग्रहणानन्तरं मानवजन्म-लाभवर्णनं। मायादेहकथनादि। ब्राह्मणक्षत्रियवैश्यशूद्राणां विद्याप्रमादेन क्रमेण महामोक्ष-सायुज्य-सारूप्य-सालोक्यरूपमुक्तिलाभकथनं। इति २ पटलः।

प्रकृतिमाहात्म्यवर्णनं। गायत्रीस्वरूपकथनपूर्व्वकं तज्जपप्रकारकथनं। अङ्गन्यासमन्त्रकीर्त्तनादि। गायत्रीध्यानं। मन्त्रपीठकथनं। गायत्रीजपमाहात्म्यं। गायत्रीपुरश्चरणविधिः। आपोमार्ज्जनमन्त्र-प्रकारकथनादि। इति ३ पटलः।

सन्न्यासिलक्षणं। अवधूतलक्षणं। बृहद्ब्रह्माण्डसंस्थानकथनं। योगविवरणं। इति ४ पटलः।

गोलोकवैकुण्ठयोर्माहात्म्यवर्णनमुखेन कैलास-चन्द्रलोक,वरुणलोकादीनां संस्थानकथनं। महा-विष्णोः साकारनिराकारत्ववर्णनं। राधिकास्वरूपवर्णनं। साकारस्यैव द्विभुजस्य महाविष्णो-र्मुरलीधरत्वं। रागिणीभिः सह षड्विधरागाणामालापेन तत्समीपे ब्रह्मणो वेदगानं। तत्र वेदवि-शेषे रागविशेषनिरूपणं। राधासमीपे महाविष्णोराधाष्टोत्तरशतनामयुगलमन्त्रमाहात्म्यकथनादि। इति ५ पटलः।

स्वर्लोककथनं। तत्र रुद्रलोककीर्त्तनं। भद्रकाल्या सह रुद्रस्य पूजने फलश्रुतिः। भद्रकाली-प्रसादात् ब्रह्मादीनां महाविष्णोश्च स्वस्वपदप्राप्तिः। इति ६ पटलः।

महर्लोकवर्णनं। ब्रह्मणो भूर्लोकावस्थितिः। जनार्द्दनस्य भुवर्लोके वासकथनं। शम्भोः स्वर्गलोके वासकथनं। ईशानस्य महर्लोके वासकथनञ्च। गोलोकादपि महर्लोकमाहात्म्यकथनं। इति ७ पटलः।

जनलोकवर्णनं। तत्र गौरीसदाशिवयोरूपकीर्त्तनादि। इति ८ पटलः।

तपोलोकवर्णनं। तत्र सिद्धकालीशिवयोरवस्थितिकथनादि। सकललोकादपि तपोलोकस्य महिमाधिक्यं। एतत्तन्त्रपाठफलश्रुतिः। इति ९ पटलः।

महाब्रह्माण्डकथनं। सत्यलोकवर्णनं। तत्र महारुद्रस्यावस्थितिः। महारुद्रस्य निरञ्जनत्वनिर्व्वि-कारत्वकथनादि। सहस्रारपद्मस्य परब्रह्माश्रयत्वकथनं। तत्र उपासनाप्रकारः। ब्रह्मादयो देवाः कालिकायाः प्रजायन्ते प्रलये च तत्रैव प्रविशन्तीतिकथनं। कालिकामाहात्म्यं। कालिकाया दक्षि-णनामनिरुक्तिः। सत्यलोकशोभावर्णनं। इति १० पटलः।

तत्त्वज्ञानमाहात्म्यं। मद्यमांसमत्स्यमुद्रामैथुनभेदेन पञ्चविधतत्त्वकथनं। मद्यादिसेवनफलक-थनं। दिव्यभाववीरभावाभ्यां तत्त्वसेवाधिकारः। पशुभावे तन्निषेधः। पञ्चतत्त्वसाधनविधानं।

श्रीचक्रपूजामाहात्म्यं । कौलिकलक्षणं । शैवशाक्तगाणपत्यसौरवैष्णवानां तत्त्वज्ञाननिरूपणं । इति ११पटलः ।

गुरुतत्त्व-मन्त्रतत्त्व-वर्णतत्त्व-देवतत्त्व-ध्यानतत्त्वभेदात् पञ्चविधवैष्णवतत्त्वकथनं । तत्त्वानामेषां स्वरूपकथनञ्च । इति १२पटलः ।

दशाक्षरमन्त्रोद्धारप्रकारः । दण्डिप्रशंसा । दण्डग्रहणविधिः । गुरुणानिना जीवन्मातापितृकैश्च दण्डग्रहणं महान् प्रत्यवाय इति कथनं । दण्डिनां कर्त्तव्यनिर्द्देशः । इति १३पटलः ॥

---

No 3182. शाक्तानन्दतरङ्गिणी । Substance, country-made yellow paper, 16 × 4 inches. Folia, 146. Lines, 6 on a page. Extent, 2838 ślokas. Character, Bengali Date, ? Place of deposit, S'ántipura, Govindachandra Bhaṭṭáchárya. Appearance, fresh. Prose and verse. Correct.

**S'áktánanda-taraṅginí.** A treatise on Sákta rituals.

**Beginning.** प्रणम्य प्रकृतिं नित्यां परमात्मस्वरूपिणीं ।
तन्यते भुक्तिमुक्त्यर्थं शाक्तानन्दतरङ्गिणी ॥
अथ का प्रकृतिः । तथा हि गुणत्रयसाम्यावस्था प्रकृतिः । इत्यादि ।

**End.** प्राणप्रयाणपाथेयं संसारव्याधिनाशनं ।
दुर्गार्णवपरित्राणं दुर्गानामाक्षरद्वयं ॥

**Colophon.** इति शाक्तानन्दतरङ्गिण्यां होमनिर्णयोऽष्टादश उल्लासः ॥ समाप्तेयं शाक्तानन्दतरङ्गिणी ॥

विषयः । १प्रथम उल्लासे,—प्रकृतिपुरुषयोरभेदकथनं । वक्तव्यनिर्द्देशश्च । शरीरोत्पत्तिविवरणं । नाडीकथनं । शरीरे पृथिव्यादीनां गुणाः । देहपिण्डमध्ये सप्तपाताल-सप्तस्वर्ग-सप्तद्वीप-सप्तसमुद्र-नवग्रहाणां व्यवस्थितिकीर्त्तनं । गर्भाभ्यन्तरे बालस्य चिन्ता । पुत्रकन्यादिजननकारणं । शैशवपौगण्डाद्यवस्थाकथनं । आतिवाहिकशरीरं मनुष्याणामेव नान्येषामितिकथनं । सपिण्डीकरणे कृते प्रेतदेहं परित्यज्य कर्म्मानुसारेण स्वर्गे नरके वा यातीतिकथनं । कर्म्ममाहात्म्यं । मानुषजन्मदुर्लभता । तत्त्वज्ञानं मनुष्याणामेवेतिकथनं । ब्रह्मादीनामनित्यत्वकथनं । अपवर्गोपायकीर्त्तनं । शरीरस्यानित्यतादिनिरूपणं । सत्कर्म्मणः कर्त्तव्यता । विद्याऽविद्याभेदेन द्विविधमायाकथनं ।

२उल्लासे,—दीक्षाया आवश्यकत्वं । कलौ आगमोक्तविधानेनैव पूजादिविधानं । आगमनामनिरुक्तिः । आम्नायभेदकथनं । असदागमस्य निन्दा । वर्णाश्रमोचितं धर्म्ममविचार्य्य सदा मांसादिना पूजाकरणे दोषकथनं । दीक्षाशब्दार्थकथनं । निर्व्वचनकथनपूर्व्वकं गुरुलक्षणं । सर्व्वत्र द्विज एव गुरुर्मान्य इति कथनं । गोपालादीनां मन्त्रो देयः शूद्रायेत्यादिकथनं । मन्त्रदानाधिकारिनिरूपणं ।

सिद्धमन्त्रं वर्ज्जयित्वा विधवाया मन्त्रदानानधिकारः। गोपालादीनां मन्त्रकथनं। तत्र मन्त्रग्रहण-स्थानकालादिकथनं। यत्र रत्नविधानेन दीक्षाविशेषः। मन्त्रसंस्कारादिकथनं। सूर्य्यचन्द्रग्रहणे देवभेदे दीक्षाकर्त्तव्याकर्त्तव्यताकथनं। मातृकायन्त्रं। मन्त्रागुरुनिपाताशौचेऽपि शक्तिपूजाकर्त्तव्यता। गुरुमाहात्म्यं। गुरुसेवाकर्त्तव्यता। तदभावे तत्पत्नीपुत्रादेः सेवनस्यावश्यकता। गुरुमन्दिरमाहात्म्यं। तदुच्छिष्टभोजनविधिः। तत्पत्नीपुत्रयोर्देवीगणेशरूपेण भावना। गुरुचिन्तनमाहात्म्यादिकथनं।

३उल्लासे,—उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पनेतिकीर्त्तनं। बीजाद्देवताशरीरोत्पत्तिः। स्थूलसूक्ष्मयोरैक्यं। परमात्मजीवात्मनोरभेदकथनं। योगकथन। ब्रह्मणः स्त्रीपुरुषरूपत्वं। स्त्रीरूपावतारकथनं। पुरुषरूपावतारकथनञ्च। दुर्गाशिवविष्णुप्रभृतिदेवताभेदज्ञानकरणे दोषः। देव्या उपासकानामायु भुक्तिमुक्तिप्राप्तिकथनं।

४उल्लासे,—प्रातःकृत्यविधिः। तत्र गुरुध्यानं मानसपूजा मन्त्रोद्धारश्च। गुरुस्तोत्रं। षट्चक्रव्यवस्था। तेषां शोभादिवर्णनं। तत्र परशिवस्थानवर्णनं। तस्य ध्यानकथनादि। षट्चक्रेषु डाकिनीकाकिनीप्रभृतिशक्तिकथनं। कुण्डलिन्या योगकथनं। ऊर्द्धाधोमुखपद्मादिषु भावनाकथनं। प्रवृत्तिनिवृत्तियोगयोः स्वरूपकीर्त्तनं। अपरविधयोगप्रकारः। कुण्डलिनीध्यानकथनादि। तत्र स्वयम्भूलिङ्गध्यानं। तत्र प्रार्थना च। दन्तधावनविधिः। स्नानविधिः। अधिकारिभेदे वस्त्रभेदः। तिलकत्रिपुण्ड्रादिविधानं। मध्यच्छिद्रत्रिपुण्ड्रकरणे दोषः। मर्ज्जनीमध्यमाभ्यां रजतकाञ्चनधारणविधानं। सन्ध्याविधिः।

५उल्लासे,—आसननियमः। नानाविधासनोपयोगिद्रव्यकथनं। आसनविशेषे गुणदोषकीर्त्तनं। योगोपयोगिपद्मस्वस्तिकाद्यासनलक्षणानि। नित्यादिपूजाविधिः। निशायां शक्तिपूजने फलश्रुतिः। पद्मसन्निधौ पूजादिनिषेधः।

६उल्लासे,—अन्तर्यजनविधिः। तत्र मानसपूजाप्रकारकथनादि। तत्र फलश्रुतिः। अन्तर्यागं कृत्वा वहिर्यागविधानं।

७उल्लासे,—नित्यपूजाविधिः। तत्र स्थानशुद्ध्यादिकथनं। प्राणायामभूतशुद्ध्यादिकथनञ्च। मातृकान्यासादिकथनं। प्राणायामप्रक्रियाकथनादि। ध्यानादिकथनं।

८उल्लासे,—करमालादिकथनं। मालासंस्कारः। वर्णमालाकथनं।

९उल्लासे,—जपविधिः। तत्र मानसोपांशुनिगदभेदात् त्रिविधजपस्य लक्षणकीर्त्तनं। जपकाले मन्त्रोच्चारप्रकारः। मन्त्रार्थकथनादि। मन्त्रस्य हृदयनेत्रादिकथनं। ककारतत्त्वं। तत्र ध्यानं। पुनः ककारस्य नवविधतत्त्वकथनं। मन्त्रचैतन्यादि। योनिमुद्राकथनं। मन्त्रशिखाकथनं। सूतकद्वयकथनं। ब्राह्मणक्षत्रियवैश्यशूद्राणां सेतुकथनं। तन्त्रोक्तप्रणवस्वाहयोर्जपे शूद्रस्याधिकारः। अक्षतरक्तपर्व्वादिभिर्जपसंख्याकरणे दोषः। लाक्षादिना गुटिकां निर्म्माय जपसङ्ख्याकर्त्तव्यता।

१०उल्लासे,—महासेतुकथनं। कवचसेतुकथनं। कुल्लुकादिकथनं।

११उल्लासे,—मुखशोधनविधिः। निद्रितमन्त्रस्य जपोपायादिकीर्त्तनं। स्त्रीपुरुषनपुंसकमन्त्रलक्षणं। दीपनीकथनं।

१२उल्लासे,—पुरश्चरणविधिः। तत्र पूर्व्वदिनकृत्यं। पुरश्चरणदिनकृत्यं। आरब्धपुरश्चरणं अशौचेऽपि कर्त्तव्यमितिकथनं। होमाभावे जपसङ्ख्यानियमः। दिव्यवीरपशूनां लक्षणं। दिवारात्रिभेदेन पुरश्चरणभेदकथनं। ग्रहणपुरश्चरणं। ग्रहणकाले श्राद्धाद्यनुरोधेन जपाकरणे दोषकथनं। राश्यादिगणनया ग्रहणादर्शने दोषकथनं। जन्मसप्तादिस्थचन्द्रादिवचनानां विषयकथनं। स्वयमशक्तौ प्रतिनिधिद्वारा पुरश्चरणं कर्त्तव्यमितिकथनं।

१३उल्लासे,—यन्त्रप्रकरणं। यन्त्रसंस्कारः। पञ्चगव्यपञ्चामृतप्रमाणं। प्राणप्रतिष्ठाबीजोद्धारः। बलिदानविधिः। दिग्विशेषे बलिमस्तकादिपतने दोषकथनं। वैधहिंसाविचारः।

१४उल्लासे,—अष्टादशोपचारकथनं। जवापराजिताकरवीरादिपुष्पमाहात्म्यं। पुष्पाणां पर्य्युषितत्वनिरूपणं। अङ्गसंस्पर्शाघ्राणस्वयम्पतनभूमिपतनादौ दोषनिरूपणादि। माघादिद्वादशमासेषु दातव्यपुष्पाणि। देवताविशेषे पुष्पादिदाननियमः। नाक्षतैरर्च्चयेद्विष्णुमित्यादिवचनानां मीमांसा। सुन्दरीभैरवीकालीप्रभृतिविद्यानां पूजने तुलसीदाने फलविशेषकीर्त्तनं। पुष्पचयनविधिः। वामहस्तेन पुष्पचयने तच्च संस्थाप्य दाने च दोषकीर्त्तनं। मध्याह्नस्नानात्परं पुष्पचयननिषेधः। धूपदीपदाने विशेषः। पृथिव्यामकार्य्यपादाघातदीपदाननिषेधः। दीपनिर्व्वापननिषेधः। कन्दुपक्वादिनैवेद्यदानं। बालकप्रियं स्त्रीप्रियञ्च नैवेद्यं देयमितिकथनं। देवभेदे नमस्कारभेदकथनं। पश्चात्करणादिना नमस्कारनिषेधः। आसनस्वागतादिदानादौ विशेषः। नैवेद्यसंस्कारः। ग्रासमुद्राप्रमाणं। मणिमुक्तादेर्निर्म्माल्यकालः।

१५उल्लासे,—समयाचारकथनं। तत्र कुलवृक्षनिरूपणं। पीठनिर्णयः। कामरूपादिपीठविशेषे पूजायाः फलाधिक्यं। गृध्रादिदर्शने नमस्कारमन्त्रकथनादि। नित्यसङ्केतस्तवराजः। उपासकाः। शिवाबलिः। देवीप्रणामफलं।

१६उल्लासे,—संसर्गदोषकथनं। कलिकाले वैष्णवमन्यानां प्रकृतिवर्णनं। स्वधर्म्मे स्थित्वा हरिनामोच्चारणे फलश्रुतिः। सन्ध्यां गायत्रीञ्च विहाय हरिपूजनादौ दोषकथनं। संसर्गप्रायश्चित्तं। धृतकवचनाशप्रायश्चित्तं। कवचधारणविधिः। यन्त्रनाशादिप्रायश्चित्तं। मालानाशादिप्रायश्चित्तं। गुरुक्रोधोपशमनप्रायश्चित्तं। अनिवेदितभक्षणप्रायश्चित्तं। शिवनैवेद्यभक्षणे विशेषः। निवेदितभक्षणस्यावश्यकता। पशोरन्नभक्षणे दोषः। निष्कामानां मुक्तिलक्षणादिकथनञ्च।

१७उल्लासे,—कुण्डविधिः।

१८उल्लासे,—अग्निजननं। कुण्डसंस्कारादि। अग्नेर्न्यासादि। हुतशेषसम्पातक्रमः। सर्व्वमङ्गलादिनाममाहात्म्यं॥ इति समाप्तिः।

**No. 3183.** **सुबोधा** । Substance, country-made paper, 20 × 3½ inches. Folia, 65. Lines, 10—11—12 on a page. Extent, 3,160 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Rámayádava Chúḍámaṇi. Appearance, old. Prose. Generally correct.

**Subodhá.** A commentary on the *Kirátárjuníya* of Bháravi. By Bharata Sena Yas'chandra Ráya.

**Beginning.** प्रणम्य शम्भुं भुवनेशमीशामपीदृशं भारविकाव्यटीकां ।
गौराङ्गमल्लीकतनुप्रसूतो वैद्यः सुबोधां भरतः करोति ॥
महाकविर्भारविः किरातार्ज्जुनीयं नाम महाकाव्यं चिकीर्षुरित्यादि ।

**End.** अमरभर्त्तुरिन्द्रस्य अक्ष्णां नयनानां सहस्रं कर्त्तुं द्रष्टुमलं समर्थं न बभूव ।

**Colophon.** इति वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लिकात्मजश्रीभरतसेनयशश्चन्द्रराय-कृतायां किरातार्ज्जुनीयटीकायां सुबोधायां षष्ठः सर्गः ॥

विषयः । भारविकृतकिरातार्ज्जुनीयकाव्यस्य व्याख्यानं ।

---

**No. 3184.** **साधनमुक्तावली** । Substance, country-made paper, 14 × 4 inches. Folia, 50. Lines, 6 on a page. Extent, 1,132 s'lokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Háràdhana Bhaṭṭá-chárya. Appearance, old. Verse. Incorrect.

**Sádhana-muktávalí.** Extracts from Tantras about witchcraft, occult arts, rare prescriptions, &c. By Kavis'ekhara. The manuscript is incomplete.

**Beginning.** आगमजलनिधिजाता विलसतु सततं मनीषिणां हृदये ।
नवकविशेखररचिता साधनमुक्तावली चेयं ॥ इत्यादि ।

**End.** तैलकर्पूरजम्बीरसंयोगाद्गजजं विषं ।
नारिकेलाम्बुकर्पूरसंयोगाद् गजजं विषं ॥

**Colophon.** इत्यतः खण्डितत्वात् परिसमाप्तिवाक्यं नास्ति ।

विषयः । वशीकरणाकर्षणादौ ऋतुतिथियोगनक्षत्रप्रभृतिनिरूपणं । तत्र अङ्गुलिनिर्णयः । कीदृशस्य हस्तस्य मूलादिकमादेयमिति तत्कथनं । हस्तमिमन्त्रणमन्त्रादिकथनं । खननविधिः । छेदनविधिः । वशीकरणविधिः । तत्साधनयन्त्राणि । विजयकरणं । अत्र यन्त्राणि । सौभाग्यवर्द्धनं । अत्र यन्त्राणि । गजनिवारणं । अत्र यन्त्रं । व्याघ्रनिवारणं । अत्र यन्त्रं । स्तम्भनविधिः । अत्र यन्त्राणि । गोमहिषचौरादीनां गमनादिस्तम्भनं । अत्र यन्त्राणि । मोहनविधिः । अत्र यन्त्रं ।

रचनविधानं । तत्र दन्तरञ्जनं । मुखरञ्जनं । केशरञ्जनञ्च । सौगन्ध्यकरणं । केशस्थकीटादिनाशनं । (टाक्) इन्द्रलुप्तनिवारणं । वाजीकरणं । तत्र मङ्कोचकरणं । द्रावणं । दृढीकरणं । स्तनबन्धनं । वराङ्गसंस्कारकथनं । लोमशातनं । षण्डीकरणं । तन्निवारणसाधनञ्च । अनङ्गरङ्गवन्धनं । रजः-करणं । गर्भस्रावणं । अतिशयरक्तनिवारणं । वन्ध्यादीनां गर्भधारणोपायकथनं । अत्र चक्राणि । काकवन्ध्याचिकित्सा । मृतवत्साचिकित्सा । फलकल्याणघृतं । गर्भस्रावरक्षाविधिः । अथ चक्राणि । सुखप्रसवसाधनं । बालानां प्रसूतेश्च दुष्टग्रहादिनिवारणं । अत्र चक्राणि । सर्व्वेषां निद्राकरणं । स्त्रीणां पुष्परक्षा । स्त्रीणां दौर्भाग्यकरणं । कलहकरणञ्च । सर्व्वारिष्टनाशनं । बन्धनमोचनं । निग-डभञ्जनं । अत्र चक्राणि । गृहद्वारभञ्जनं । मत्कुण-मशक-मूषिकादिनाशनं । उच्चाटनविधिः । अत्र चक्राणि । व्याधिकरणं । शत्रुभ्रामणं । उन्मत्तीकरणं । शत्रुकुलक्षयकरणं । अश्वनाशनं । शस्य-नाशनं । रजकस्य वस्त्रनाशनं । धीवरस्य मत्स्यनाशनं । कुम्भकारस्य भाण्डनाशनं । तैलिकस्य तैलनाशनं । गोपालस्य दुग्धनाशनं । ताम्बूलिकस्य पर्णनाशनं । शाकनाशनं । तन्तुवायस्य सूत्र-नाशनं । शौण्डिकस्य मद्यनाशनं । कर्म्मकारस्य लौहनाशनं । धनधान्यात्ययकरणं । श्रुतिधरकवि-त्वादिकरणं । किन्नरीकरणं । चाक्षुष्यं । वधिरतादिनाशनं । दन्तदार्ढ्यं । अत्याचारकरणं । अना-चारकरणं । पादुकासाधनं । अनावृष्टिनिवारणं । अदृश्यकरणं । मृतसञ्जीवनं । विषनाशनं । तत्र सर्पविषनाशनं । वृश्चिकविषनाशनं । मूषिकस्य । कुक्कुरस्य । मत्स्यभेकादीनां । व्याघ्रस्य । कीटानां । उपविषनिवारणं । कृत्रिमविषनिवारणं । गजविषनिवारणं । अतः खण्डितं ।

---

**No. 3185. योनितन्त्रम्।** Substance, country-made paper, 15 × 3½ inches. Folia, 15. Lines, 7—8 on a page. Extent, 305 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Háradhana Bhaṭṭá-chárya. Appearance, decayed. Verse. Incorrect.

**Yoni-tantra.** Rites and rituals in honor of the pre-eminence of the female principle in religion.

**Beginning.** कैलासशिखरारूढं देवदेवं जगद्गुरुं ।
सदा स्मेरमुखी दुर्गा पप्रच्छ नगनन्दिनी ॥ इत्यादि ।

**End.** सर्व्वां पूजां परित्यज्य योनिपूजां समाचरेत् ।
गुरुं विना महेशानि मन्त्रो नापि सिद्ध्यति ॥

**Colophon.** इति योनितन्त्रे अष्टमः पटलः समाप्तः ।

विषयः । गिरिजायाः समीपे गिरिशस्य योनिपीठप्राधान्यकथनं । हरिहरादीनां योनिस-म्भूतत्वं । शक्तिमन्त्रमुपास्य योनिपूजनाकरणे दोषकीर्त्तनं । दिव्यभाववीरभावप्रशंसा । योनिपूजन-विधिः ॥ इति १२श्लः ।

रजकीमापिताङ्गनाप्रभृतिनवकन्याकथनं। द्वादशाब्दमारभ्य षष्टिवर्षपर्य्यन्तं मातृयोनिं परित्यज्य सर्व्वासां योनिताडननियमः। योनिपूजाकथनपूर्वकं लिङ्गपूजाविधिः। योनिपूजास्थानकालनैवेद्यादिनिरूपणं। योनिलिङ्गप्रक्षालनतोयेन संपूज्य तत्पानविधानं। विपरीतरतिप्रशंसा॥ इति २पटलः।

योनिपूजाफलश्रुतिः। योनिमुखे मुखं संस्थाप्य मन्त्रजपफलकथनं। योनिगर्त्ते छिन्नमस्ताबगलामुखीप्रभृतीनां पूजाविधिः। योनिमध्ये चण्डालनायिकायाः प्राधान्यकथनं। क्षतयोनौ पूजाविधानं। अक्षतयोनौ तन्निषेधः। इति ३पटलः।

गङ्गाया उत्तरपश्चिमे कोचाख्याने च देशे माधवीनाम योनिकथनं। तत्प्रशंसा। रामकृष्णादीनां योन्युपासकत्वं। वेद-वैष्णव-शैव-दक्षिण-वाम सिद्धान्त-कौलशास्त्राणामुत्तरोत्तरप्राधान्यं। पञ्चतत्त्वकथनं। "अन्तः शाक्तो बहिः शैव" इत्यादिकौलिकनानारूपत्वं। कौलिकप्रशंसा। इति ४पटलः।

गुरुपत्नीरमणे दोषकथनं। योनितत्त्वविच्छितिलकयुक्तभालदर्शने फलश्रुतिः। श्राद्धे कौलिकभोजने फलकथनं। योनितत्त्वमिश्रितशुक्रद्वारा पूजाविधानं। मातृयोनिं पुरस्कृत्य पूजाकरणं मैथुननिषेधः। कौलिकगुर्व्वाश्रयकर्त्तव्यता। योनिकेशमाहात्म्यं। योनिरूपा महामाया लिङ्गरूपः शिव इति कथनादि। इति ५पटलः।

स्नानकाले योनिदर्शनमाहात्म्यं। गृहे स्वयोनिपरयोनिकन्यायोनिविद्यमानतायां फलकथनं। योनितत्त्वप्रशंसा। रेतोमद्यमांसैस्तर्पणविधानं। योनिनिन्दादिकरणे दोषकथनं। पशुसन्निधौ हरिमन्दिरादिकरणपुरःसरं कौलिकस्य विहारः। इति ६पटलः।

वीरसाधनविधानं। वीरदर्शनादिमाहात्म्यं। पूजास्थानादिकथनं। शिष्या-कन्या-बधूयोनिषु भक्तिभावेन पूजनमात्रविधानं। इति ७पटलः।

वीरसाधनकाले नायिकाया उर्व्वश्या साम्यं। नायिकाया विष्णुलोकप्राप्तिकथनं। पशूनां मोहनाय श्रुत्यादिशास्त्राणि॥ कलौ योनिपूजनमेव श्रेयः। जिह्वादौ योनिचक्रचिन्तनं। इति ८पटलः।

---

**No. 3186.** **आगमतत्त्वविलासः।** Substance, country-made yellow paper, 15 × 5 inches. Folia, 204. Lines, 10 on a page. Extent, 7,377 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Krishṇamaya Gośvámí. Appearance, fresh. Prose and verse. Correct.

**A'gamatattva-vilása.** An elaborate digest of Tántric doctrines and rituals. By Raghunátha Tarkavágísa. The author cites the following works of the Tantra class and Sañhitás for his authorities.

A'dijámala-tantra.
A'gamadípiká-tantra.
A'gamottara-tantra.
Agastya-sañhitá.
Amrita-tantra.
Bálátantra.
Bhairava-tantra.
Bhairaví-tantra.
Bhaktimanjarí-tantra.
Bhávachudámani-tantra.
Bhúta-bhairava-tantra.
Bhúta-dámara-tantra.
Bhuvanes'varí-párijáta-tantra.
Brahmajámala-tantra.
Brahma-sañhitá.
Brihachchhíkrama-tantra.
Brihadjámala-tantra.
Chámundá-tantra.
Chandrapítha-tantra.
Chatuhs'atí-tantra.
Chintámani-tantra.
Daksha-sañhitá.
Dakshinámúrtti-sañhitá.
Dámara-tantra.
Devaprakásiní-tantra.
Gándharva-tantra.
Ganeśa-vimarśiní-tantra.
Gautamíya-tantra.
Gaváksha-tantra.
Hañsamáheśvara-tantra.
Hañsaparameśvara-tantra.
I'śána-sañhitá.
Jnánamálá-tantra.
Jnánárnava-tantra.
Kálíhridaya-tantra.
Káliká-kulasarvvasva-tantra.
Kálí-kulárnava-tantra.
Kálí-tantra.
Kálottara-tantra.
Kalpadruma-tantra.
Kalpasúkta-tantra.
Kalpa-sútra-tantra.
Kámadhenu-tantra.
Kamarája-tantra.
Kámaratna-tantra.
Kramadípiká-tantra.
Kriyására-tantra.
Kukkuteśvara-tantra.
Kulachudámáni-tantra.
Kuladdíśa-tantra.
Kulámrita-tantra.
Kulánanda-sañhitá.
Kulaprakáśa-tantra.
Kulárnava-tantra.
Kulasára-tantra.
Kulasarvvasva-tantra.
Kulávalí-tantra.
Kumárí-tantra.
Kuvjiká-tantra.
Lakshmíkulárnava-tantra.
Lakshya-nirnaya-tantra.
Lalitá-tantra.
Lingágama-tantra.
Mahámohesvara-tantra.
Maháphetkárí-tantra.
Mahá-tantra.
Mahogra-tantra.
Máliní-tantra.
Máliní-vijaya-tantra.
Mánasollása-tantra.
Mantradarpana-tantra.
Mantra-muktávali-tantra.
Mantratantra-prakás'a.
Manu-sañhitá.
Mátrikárnava-tantra.
Mátriká-tantra.
Matsya-súkta-tantra.
Máyá-tantra.
Meruchandra-tantra.
Mundamálá-tantra.
Nandikeśvara-sañhitá.
Náráyana-tantra.
Navaratneśvara-tantra.
Níla-tantra.
Nrisiñha-tápaníya.
Párijáta-tantra.
Phetkárí-tantra.
Pingalá-tantra.
Prapanchasára-tantra.
Prayogasára-tantra.
Pújápradípa-tantra.
Purascharana-chandriká
Rájarájeśvarí-tantra.
Ratnávali-tantra.
Rudrajámala tantra.
S'akti-tantra.

Sammohana-tantra.
Samayá-tantra.
Sanatkumára-sañhitá.
Sanatkumára-tantra.
Sañketa-chandrodaya-tantra.
Sáradátilaka-tantra.
Sárasamuchchaya.
Sárasañgraha.
Shaṭtriñśat-tattva-tantra.
Siddhajámala-tantra.
Siddhántaśekhara-tantra.
Siddhasárasvata-tantra.
S'ivágama-tantra.
Somabhujagábála-tantra.
S'ríkrama-tantra.
S'rírámárchchana-chandriká-tantra.
S'rívináyaka-sañhitá.
Svachchhanda-bhairava-tantra.
Svachchhanda-sárasañgraha-tantra.
Svatantra-tantra.
S'yámárahasya-tantra.
Tantra-chuḍámaṇí.
Tantra-kaumudi.
Tantra-pradípa.
Tantrarája.
Tantra-ratna.
Tantrárṇava-tantra.
Tantrasára.
Tárárṇava-tantra.
Tárápradípa-tantra.
Tárárahasya-tantra.
Táráviläsa-tantra.
Táriṇí-tantra.
Tattvaságara-tantra.
Tattvabodha-tantra.
Toḍala-tantra.
Trailakyamohana-tantra.
Trailakyasára-tantra.
Tripurárnava-tantra.
Tripura-tantra.
Triśákti-tantra.
Uḍḍísa-tantra.
Unmatta-bhairava-tantra.
Uttara-tantra.
Vaisampáyana-sañhitá.
Vaishṇvámṛita-tantra.
Vámakeśvara-tantra.
Váráhí-tantra.
Varṇavilása-tantra.
Vaśishṭha-sañhitá.
Vásishṭha-tantra.
Váyavíya-tantra.
Vijnánalatiká-tantra.
Vírabhadra-tantra.
Víra-tantra.
Vishṇudharmottara-tantra.
Visuddhesvara-tantra.
Visvamátriká-tantra.
Visvasára-tantra.
Vṛihadgautamíya-tantra.
Yakshaḍámara-tantra.
Yoginíhṛidaya-tantra.
Yoginíjálakuraka-tantra.
Yoginí-tantra.

---

**Beginning.** ॐ नमः श्रीमते तस्मै गुरुदेवाय योगिने ।
अशेषासारसंसारसाराय शिवरूपिणे ॥
स्वगुरोश्चरणसरोजं शिरसि सरसिजे स्मरन् मुहुः श्रीमान् ।
आगमतत्त्वविलासं रचयति रघुनाथतर्कवागीशः ॥

**End.** अथ विनतासुतं तद्दिक्ष्विन्द्रादीन् वज्रादीन् संपूज्य धूपादिविसर्जनान्तं कर्म कुर्य्यात् ।

**Colophon.** (इति प्रथमखण्डं) (अस्य द्वितीयखण्डमत्र साम्प्रतं नास्ति) ।

विषयः । वीजवर्णनिर्णयः । वर्णक्रमः । दीक्षाप्रकरणं । दीक्षानित्यत्वकाम्यत्वनिरूपणं ।

दीक्षानामनिरुक्तिः। गुरुलक्षणं। गुरुदोषकथनं। पितृ-मातामह-कनिष्ठादितो दीक्षानिषेधः। स्वप्नलब्धमन्त्रविधिः। तत्र गुरुलाभे कर्त्तव्यताकथनं। शिष्यलक्षणं। दीक्षायां मासादिनियमः। समयाशुद्ध्यादिनिरूपणं। देवपर्व्वकथनं। षट्पदचक्रं। अष्टवर्गचक्रं। नक्षत्रचक्रं। तारामैत्रीविचारः। अकथहादिचक्रं। अंशकचक्रं। अकडमचक्रं। ऋणिधनिचक्रं। विशिष्टमन्त्राङ्ककथनं। ऋणिधनिचक्रस्य प्रकारान्तरं। हरचक्रं। महाविद्यानिरूपणं। उपासनानिर्णयः। मन्त्राणां दशविधसंस्कारकथनं। दशसंस्कारप्रयोगकथनञ्च। मातृकायन्त्रक्रमः। दीक्षायां पूर्व्वकृत्यानि। दीक्षाप्रयोगः। संक्षेपदीक्षा। सर्व्वतोभद्रमण्डलं। गुरुशिष्ययोर्दीक्षानन्तरं निषिद्धानि। करमालानिरूपणं। मालाभेदकथनं। मालासंस्कारः। तत्र प्रयोगः। रुद्राक्षसंस्कारः। महाशङ्खमालासंस्कारः। कपालपात्रशुद्धिः। यन्त्रसंस्कारः। त्रिलोहीमुद्राकथनं। तत्प्रयोगकथनञ्च। बलिविधानं। तत्प्रयोगः। स्वगात्ररुधिरदानव्यवस्था। पूजास्थाननियमः। अशौचादौ वर्ज्यावर्ज्यनियमः। व्रताशौचव्यवस्था। क्षौरादिकर्म्मविशेषव्यवस्था। प्रातःकृत्यनिरूपणं। स्नानविधिः। सन्ध्याविधिः। विष्ण्वादिदेवतागायत्री। शक्त्यादिदेवतागायत्री। गायत्रीध्यानप्रकरणं। वस्त्रादिपरिधानं। त्रिपुण्ड्रव्यवस्था। पादप्रक्षालनविधिः। कुशाङ्गुरीयधारणक्रमः। आचमनविधिः। द्विराचमनप्रकरणं। आसनादिशुद्धिः। आसनप्रमाणं। तत्र मृदुचूड़कोमललक्षणं। काष्ठासनप्रमाणं। पूजादौ मुखनियमः। भूतशुद्धिः। मातृकान्यासः। प्राणायामः। पीठन्यासः। ऋष्यादिन्यासः। व्यापकन्यासः। अर्घ्यस्थापनविधिः। प्राणप्रतिष्ठाकथनं। सामान्यार्घ्यविधिः। अष्टादशोपचाराः। षोड़शोपचाराः। दशोपचाराः। पञ्चोपचाराः। मणिमुक्तादिद्रव्याणां निर्म्माल्यकालः। आसननियमः। पाद्यादिपात्रनियमः। अर्घ्यप्रमाणं। आचमनीयं। मधुपर्कः। पुनराचमनीयं। वसनाभरणे। गन्धः। पुष्पाणि। धूपः। दीपः। नैवेद्यप्रमाणं। पूजाकाले द्रव्यादिदाननियमः। प्रदक्षिणनमस्कारनियमः। शङ्खादिनियमः। वाद्यनियमः। योगाङ्गासनानि। धारणमन्त्राणि। मन्त्रलेखनद्रव्यकथनं। संक्षेपतः सर्व्वदेवनित्यपूजाविधिः। पञ्चायतनीपूजा। नैमित्तिकविधिः। भुवनेश्वर्य्याः प्रयोगः। त्वरितायाः। दुर्गायाः। सरस्वत्याः। लक्ष्म्याः। गणेशस्य। सूर्य्यस्य। श्रीरामस्य। श्रीकृष्णस्य। नृसिंहस्य। भैरव्याः। सुन्दर्य्याः। छिन्नमस्तायाः। श्यामायाः। तारायाः। तर्पणविधिः। निग्रहोपायकथनं। तत्र आकर्षणं। वशीकरणं। विद्वेषणं। उच्चाटनं। स्तम्भनञ्च। अभिचारकथनं। षट्कर्म्मलक्षणं। तत्र आसनादिकथनं। भूतानामुदयः। भूतानां मण्डलानि। जपनिरूपणं। जपक्रमः। सेतुः। महासेतुः। ऋष्यादिन्यासः। सप्तच्छदा विद्याः। अमृता। जिह्वाशोधनं। चौरन्यासः। कामकला। योनिमुद्रा। जपप्रयोगः। जपफलं। युगसेवानियमः। पुरश्चरणं। तत्र भक्ष्यादिनियमः। तत्र वर्ज्यानि च। पुरश्चरणजपकालावधिकथनं। जपसंख्याकरणे विशेषकथनं। कूर्म्मचक्रं। पुरश्चरणप्रयोगः। ग्रहणपुरश्चरणप्रयोगश्च। रहस्यपुरश्चरणं। वीरसाधनं। तत्र पूजाद्रव्यादिकथनं। शवसाधनं। योगिनीसाधनं। मनोहरायाः। कनकवत्याः। रतिसुन्दर्य्याः। पद्मिन्याः। नटिन्याः। मधुमत्याश्च एतासां मुद्राकथनं। षट्किन्नरीसाधनं। पिशाचीसाधनं। मधुमतीपिशाचीसाधनं।

यच्चपत्न्यादिसाधने स्थानसमयादिकथनं। अदर्शनसिद्धिः। अन्यविधसिद्धिः। मन्त्रसिद्धिलक्षणं। मन्त्रसिद्धेरुपायकथनं। मन्त्राणां दोषादिनिरूपणं। तच्च दोषशान्त्युपायकथनं। बालकस्य संस्कार-विधानं। शिवाबलिः। आचारकथनं। भावरहस्यं। अन्तर्यागः। तच्च प्रकारान्तरं। पूजाकथनं। होमकथनं। कुमारीपूजा। तच्च क्रमकथनं। दूतीयागः। तच्च सम्विदादिशोधनकथनं। जयन-प्रकारः। तच्च कन्यानिरूपणं। शक्तिशोधनं। वीराणां पुरश्चरणं। मांसादिनिरूपणं। भक्ष्यविशेषस्य मुद्रापरिभाषा। वामाचारानुकल्पः। यन्त्रदर्शनफलकथनं। चक्रपादोदकमाहात्म्यं। चक्रादिना-शप्रायश्चित्तकथनं। पूजाकाले यन्त्रादिपतनप्रायश्चित्तकथनं। पूजाधारनिरूपणं। लिङ्गद्वयादिपूजा-निषेधः। कुण्डनिरूपणं। स्रुक्स्रुवौ। हस्तप्रमाणं। कर्षादिमानं। एकहोमपद्धतिः। संक्षेपहोमप्रयो-गः। शाक्ताभिषेकनिरूपणं। मन्त्रादिभिर्देवतानिरूपणं। मन्त्रान्तरं। अथ ध्यानं। हेरम्बध्यानादि-कथनं। हरिद्रागणेशः। उच्छिष्टगणेशः। सूर्य्यः। मार्त्तण्डभैरवः। अजपामन्त्रः। चन्द्रः। अथ प्रयोगः। विष्णुप्रकरणं। तत्त्वन्यासः। श्रीरामस्य पूजादिकथनं। श्रीकृष्णस्य। रमाभिषेकमन्त्रकथनं। बालगोपालस्य मन्त्रपूजादिकथनं। वासुदेवस्य लक्ष्मीवासुदेवस्य दधिवामनस्य हयग्रीवस्य नृसिंहस्य वराहस्य हरिहरस्य च। शिवस्य मन्त्रादिकथनं। मृत्युञ्जयस्य दक्षिणामूर्त्तेः नील-कण्ठस्य चण्डेश्वरस्य च।

(इति प्रथमखण्डस्य)।

अत्रोल्लिखिततन्त्रादिनामानि यथा,—

"स्वतन्त्रतन्त्रं फेत्कारीतन्त्रमुत्तरतन्त्रकं। नीलतन्त्रं वीरतन्त्रं कुमारीतन्त्रमुज्ज्वलं॥
कालीनारायणीतन्त्रे तारिणीतन्त्रमुत्तमं। बालातन्त्रञ्च समयातन्त्रं भैरवतन्त्रक॥
भैरवीत्रिपुरातन्त्रे वामकेश्वरतन्त्रकं। कुक्कुटेश्वरतन्त्रञ्च मातृकातन्त्रमेव च॥
सनत्कुमारतन्त्रञ्च विशुद्धेश्वरतन्त्रकं। सम्मोहनाख्यतन्त्रञ्च गौतमीयञ्च तन्त्रकं॥
बृहद्गौतमीयतन्त्रं भूतभैरवतन्त्रकं। चामुण्डापिङ्गलातन्त्रे वाराहीतन्त्रकं तथा॥
मुण्डमालाख्यतन्त्रञ्च योगिनीतन्त्रमुत्तमं। मालिनीविजयं तन्त्रं तन्त्रं स्वच्छन्दभैरवं॥
महातन्त्रं शक्तितन्त्रं तन्त्रं चिन्तामणिं परं। उन्मत्तभैरवं तन्त्रं त्रैलोक्यसारतन्त्रकं॥
विश्वसाराख्यं तन्त्रं तथा तन्त्रामृताभिधं। महाफेत्कारीयतन्त्रं वायवीयञ्च तोडलं॥
मालिनीललितातन्त्रे त्रिशक्तितन्त्रकं तथा। राजराजेश्वरीतन्त्रं महामोक्षस्वरोत्तरं॥
गवाक्षतन्त्रं गान्धर्वं तन्त्रं त्रैलोक्यमोहनं। हंसमाहेश्वरं हंसपरमेश्वरतन्त्रकं॥
कामधेन्वाख्यतन्त्रञ्च तन्त्रं वर्णविलासकं। मायातन्त्रं मन्त्रराजं कुब्जिकातन्त्रमुत्तमं॥
विज्ञानलतिकां लिङ्गागमं कालोत्तरं तथा। ईशानसंहितां तद्वत् श्रीविनायकसंहितां॥
अगस्त्यसंहितां पुण्यां नन्दिकेश्वरसंहितां। वशिष्ठसंहितां दक्षसंहितां मनुसंहितां॥
ब्रह्मणः संहितां दिव्यां सनत्कुमारसंहितां। कुलानन्दसंहिताञ्च वैशम्पायनसंहितां॥
नृसिंहतापनीयञ्च दक्षिणामूर्त्तिसंहितां। ब्रह्मज्ञानलकचादिज्ञानलं वद्रज्ञानलं॥

रुद्रयामलकं सिद्धयामलं कल्पसूत्रकं । मत्स्यसूक्तं कल्पसूत्रं कामराजं शिवागमं ॥
उड्डीशञ्च कुलोड्डीशमुड्डीशं वीरभद्रकं । भूतडामरकं तद्वत् डामरं यक्षडामरं ॥
कालिकाकुलसर्व्वस्वं कुलसर्वस्वमेव च । कुलचूड़ामणिं दिव्यं कुलसारं कुलार्णवं ॥
कुलामृतकुलावल्यौ तथा कालीकुलार्णवं । कुलप्रकाशं वाशिष्ठं सिद्धसारस्वतं तथा ॥
योगिनीहृदयं कालीहृदयं मातृकार्णवं । योगिनीजालकुरकं तथा लक्ष्मीकुलार्णवं ॥
तारार्णवं चन्द्रपीठं मेरुचन्द्रं चतुःशती । तत्त्वबोधं महोग्रञ्च स्वच्छन्दसारसङ्ग्रहं ॥
ताराप्रदीपं सङ्केतचन्द्रोदयमतिस्फुटं । षट्त्रिंशत्तत्त्वकं लक्ष्यनिर्णयं त्रिपुरार्णवं ॥
विष्णुधर्म्मोत्तरं मन्त्रदर्पणं वैष्णवामृतं । मानसोल्लासकं पूजाप्रदीपं भक्तिमञ्जरीं ॥
भुवनेश्वरीं पारिजातं प्रयोगसारमुत्तमं । कामरत्नं क्रियासारं तथैवागमदीपिकां ॥
भावचूड़ामणिग्रन्थं तन्त्रचूड़ामणिं परं । रुद्रचक्रीक्रमसंज्ञञ्च तथा श्रीक्रमसंज्ञकं ॥
सिद्धान्तशेखरं ग्रन्थं तां गणेशविमर्शिनीं । मन्त्रमुक्तावलीं तत्त्वकौमुदीं तन्त्रकौमुदीं ॥
मन्त्रतन्त्रप्रकाशाख्यं श्रीरामार्च्चनचन्द्रिकां । शारदातिलकं ज्ञानार्णवं सारसमुच्चयं ॥
कल्पद्रुमं ज्ञानमालां पुरश्चरणचन्द्रिकां । आगमोत्तरकं तत्त्वसागरं सारसङ्ग्रहं ॥
देवप्रकाशिनीं तन्त्रार्णवञ्च क्रमदीपिकां । तारारहस्यं श्यामाया रहस्यं तन्त्ररत्नकं ॥
तन्त्रप्रदीपं तारायाः विलासं विश्वमातृकां । प्रपञ्चसारं तं तन्त्रसारं रत्नावलीं तथा ॥

एवं षड्युत्तरशतं ग्रन्थानां स्फुटमागमे ।
कल्पान् कुमारीकल्पादीन् श्रुतीश्चोपनिषद्गणान् ।
ज्योतिःस्मृतिपुराणानि पाणिनीयादिकौशलं ॥ इति ।

---

**No. 3187.** जीवभेदसङ्ग्रहदीपिका । Substance, country-made paper, 10 × 3 inches. Folia, 9. Lines, 6 on a page. Extent, 137 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Harinátha Gośvámí. Appearance, old. Prose and verse. Generally correct.

**Jívabheda-sañgraha-dípiká.** Vaishṇavite philosophy, showing the distinction between the created and the creator, and that the creator is identical with Kṛishṇa. By Kálímohana S'armá.

**Beginning.** सर्व्वमूर्द्धण्यमूर्द्धण्यं सर्व्वसुन्दरसुन्दरं ।
सर्व्वोत्तमोत्तमं वन्दे वृन्दारण्यकलानिधिं ॥

जीवस्य चित्स्वरूपत्वे मुक्तस्वभावत्वादित्यादि ।

**End.** वैष्णवस्य च जीवस्य भेदसंग्रहदीपिका ।

समाप्तेयं पदाम्भोजदर्शनाय मतां चित मत् ॥
नामादर्शननैपुण्येन कथमप्यन्यायमारे चरौ
नानादिग्गजधौरधारणमतेषा स्वमुज्जृम्भते ।
नामादुर्घटवासमाविसदृशं चित्तं भूतं त्वणां
नामानिर्भरकेलिमोक्षनघनश्यामाभिरामे कुतः ॥

**Colophon.** इति समाप्तिः । (क्वचित् २ लुप्तप्रायः) ।

विषयः । सप्रयोजनप्रतिज्ञाकथनं । जीवस्य ईश्वरांशत्वेन चित्स्वरूपत्वकथनं । भक्तिलक्षणं । भक्तिसंस्कारेण अविद्योपाधिनिरासः । ईशलक्षणं । जीवलक्षणं । ब्रह्मैवाहमित्यभिमानिनां न भक्तावधिकारः । ब्रह्मजीवयोर्भेदः । साधूनां सिद्धविग्रहत्वं । ईश्वरस्य संसारार्णवतरणे प्लवत्वकथनादि । 'तमेव विदित्वा अतिमृत्युमेति' इत्यादौ पुंलिङ्गेन श्रीकृष्ण एव लक्ष्यते इत्यादिकथनं । भक्तियोगस्यैव परमपुरुषार्थत्वं । परमपुरुषार्थशब्दनिर्व्वचनं । पुरुषोत्तमनामनिरुक्तिः । अतिप्रसङ्गवादिमतनिरासः । भक्तियोगस्य मोक्षसाधनता नास्ति इत्यत्र आक्षेपपरीहारः ।

---

**No. 3188. अशौचनिर्णयः** | Substance, country-made paper, 15½ × 3 inches. Folia, 42. Lines, 6 on a page. Extent, 850 ślokas. Character, Bengali. Date, Sk. 1614. Place of deposit, S'ántipura, Kálidása Vidyávágíśa. Appearance, old. Prose and verse. Correct.

**Aśaucha-nirṇaya.** An abstract of the rules regarding impurities of the person resulting from birth or death in a clan. By Gopála Nyáyapanchánana Bhaṭṭáchárya.

**Beginning.** नत्वा नीलोत्पलश्यामं कृष्णं राजीवलोचनं ।
न्यायपञ्चाननो विद्वान् कुरुतेऽशौचनिर्णयं ॥ इत्यादि ।

**End.** शाके शरैर्वह्निशरेन्दुमाने मन्वादिशास्त्राणि विचार्य यत्नैः ।
धीराः कृतेयं परिपालनीया विभाव्य दोषाः परिभावनीयाः ॥

**Colophon.** इति श्रीगोपालन्यायपञ्चाननभट्टाचार्य्यकृताशौचनिर्णयनामपुस्तिका समाप्ता । शकाब्दाः । १६१४ ॥

**विषयः ।** निर्गुणाशौचनिर्णयः । अङ्गास्पृश्यत्वनिरूपणं । पुत्रकन्याजनने मातुरशौचनिर्णयः । बालाद्यशौचनिर्णयः । तत्र अविषयविशेषे विशेषकथनं । स्त्र्यशौचनिर्णयः । गर्भस्रावाशौचं । विदेशस्थाशौचनिरूपणं । अशौचस्य गुरुत्वादिनिरूपणं । अशौचसङ्करव्यवस्था । अपिण्डाशौचनिरूपणं । मृत्युविशेषाशौचनिर्णयः । सद्यमरणाशौचनिरूपणं । परपूर्व्वाद्यशौचनिर्णयः । राजस्थाशौचनिर्णयः । प्रवासगमनाद्यशौचनिरूपणञ्च । इति ।

**No. 3189** कृष्णभक्तिप्रकाशः । Substance, country-made paper, 14 × 3 inches. Folia, 12 Lines, 10 on a page. Extent, 1,608 ślokas. Character, Bengali Date, ? Place of deposit, S'ántipura, Harinátha Gosvámí. Appearance, old. Prose and verse. Generally correct.

**Krishṇabhakti-prakáśa.** On devotion to Krishṇa. The manuscript is incomplete, and the author's name is not apparent.

**Beginning** श्रीकृष्णचरणाम्भोजं प्रणम्य परया मुदा ।
नानापुराणवाक्येन तस्य भक्तिः प्रकाश्यते ॥
अज्ञानतिमिरध्वंसी परमार्थप्रकाशकः ।
कृष्णभक्तिप्रकाशोऽस्तु प्रमोदाय सतां सदा ॥ इत्यादि ।

**End.** स वस्तारयते सर्व्वान् कलौ गोविन्दकीर्त्तनात् ।

**Colophon.** इत्यतः खण्डितत्वात् परिसमाप्तिवाक्यं नास्ति ।

विषयः । ग्रन्थोऽयं काण्डद्वयेन विभक्तः । तत्र प्रथमकाण्डस्य १म प्रकरणे श्रीकृष्णभक्तप्रशंसा । २प्र, श्रीकृष्णाभक्तनिन्दा । ३प्र, श्रीकृष्णभजनादिकथनं । ४प्र, तद्भजनस्य सार्व्वकालिकत्व-कीर्त्तनं । ५प्र, तद्भजनेऽधिकारिनियमाभावकथनं । ६प्र, भगवद्भक्तिकारणादिकथनं । २काण्डस्य १प्र, निष्कामभक्तेर्गरीयस्त्वकथनं । २प्र, उत्तमादिभक्तिलक्षणं । अपारब्धपापहरत्वादिभक्तिफलक-थनञ्च । ३प्र, गुरुपादाश्रयादिभक्त्यङ्गकथनं । ४प्र, साधनभक्तिनिरूपणं । तत्र कर्म्मादीनां भक्त्यङ्ग-त्वकथनं । श्रवणकीर्त्तनादिस्वरूपकीर्त्तनञ्च । अतः खण्डितं ।

---

**No. 3190.** न्यायबोधिनी । Substance, country-made yellow paper, 17½ × 3½ inches. Folia, 8. Lines, 8 on a page. Extent, 268 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Harinátha Gosvámí. Also another copy at Jápharaganja, Baḍa A'khḍá Post Nasipura, Zilá Mursidábáda, Gopáladása Mohanta. Appearance, new. Prose. Generally correct.

**Nyáyabodhiní** A commentary on the Tarkasaṅgraha. By Govardhana S'armá.

**Beginning.** अखिलागमसञ्चारि श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्द्धनसुधीस्तनुते न्यायबोधिनीं ॥

चिकीर्षितस्य ग्रन्थस्य निर्व्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानमस्काराात्मकं मङ्गलं शिष्यशिक्षार्थं ग्रन्थतो निबध्नाति । निधायेतीत्यादि ।

**End.** आकाशगतैकत्वपरिमाणादेः । अतोऽनेक इति विशेषणं ॥ इति शब्दपरि-च्छेदः ।

**Colophon**. इति न्यायबोधिन्यां टीकायां गोवर्द्धनविरचितायां चतुर्थः परिच्छेदः।
विषयः। तर्कशास्त्रस्य व्याख्यानं।

---

**No. 3191.** ऋतुसंहारचन्द्रिका। Substance, country-made paper, 17 × 4 inches. Folia, 37. Lines, 6 on a page. Extent, 863 slokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Krishnamaya Gosvamí. Appearance, old. Prose. Generally correct.

**Ritusañhára-chandriká**. A commentary on Ritusañhára of Kálidása. By Manirám Sármá, son of Nilkantha.

**Beginning**. यः समस्तविदुषां शिरोमणिर्येन राजति सभा विपश्चितां। तं महीश्वरक-माङ्घ्रिवन्दनं नीलकण्ठपितरं नमाम्यहं॥

शृङ्गारिकप्रधानं यदृतुसंहारनामकं काव्यं तत्कालिदासीयं व्याख्यास्येऽहं यथामति।

अप्रचारतमोमग्ना कालिदासकृतिर्यतः।क्रियतेऽत्रचन्द्रिकेयं विबुधानन्ददायिनी॥ इत्यादि।

**End**. पूजितो न जगदीश्वरो मया नापि विश्वजननी सुसेविता।
किन्तु यत् प्रजल्पितं निजेच्छया तत्र सद्गुरुकृपैव कारणं॥

**Colophon**. इति श्रीमणिरामविरचितायां ऋतुसंहारचन्द्रिकाभिधायां टीकायां षष्ठः सर्गः समाप्तः।

विषयः। कालिदासकृत-ऋतुसंहारस्य व्याख्यानं।

---

**No. 3192.** विश्वसारतन्त्रम्। Substance, country-made yellow paper, 17 × 3½ inches. Folia, 224. Lines, 6 on a page. Extent, 5,108 slokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Kálidása Vidyávágísa. Appearance, new. Verse. Generally correct.

**Viśvsára-tantra**. An elaborate digest of the doctrines of the Tantras, and various Tantric rituals. Attributed to Mahákála.

**Beginning**. प्रणम्य शङ्करं गौरीं जगदानन्दवर्द्धिनीं।
सुखदुःखप्रदां रम्यां महाकालेन धीमता।
क्रियतेऽद्योमहातन्त्रं तन्त्राणां सारमुत्तमं। इत्यादि।

**End**. स भवति पदमुख्यैः सम्पदापद्मवक्षः-
क्षितिपमुकुटलक्ष्मीर्लक्षणानां चिरायुः॥

Colophon. इति विश्वसारतन्त्रे सरस्वत्याः कवचं समाप्तं। समाप्तश्चाष्टमः पटलः। (अत्र पटलसंख्यावैपरीत्यं वर्त्तते)।

विषयः। पार्व्वतीश्वरसंवादः। आगमनामनिरुक्तिः। सच्चिदानन्दरूपस्य सदाशिवस्य लीलावशात् सृष्टिः। मायामाहात्म्यकथनादि। मूलप्रकृतिरेव मायेतिकथनं। परब्रह्मैव स्त्रीपुरुषरूपेण द्विधा भूत्वा चराचरं सृजतीतिकथनञ्च। ब्रह्मविष्णुरुद्रप्रभृतीनां मायामयदेहप्राप्तिकथनं। जगतो ब्रह्मानतिरिक्तत्वं। आगमप्रशंसा। महामायैव पूजनीया सन्तुष्टायाञ्च तस्यां हरिहरादीनां सर्वेषां प्रीतिरितिकथनं। मोक्षकारणकीर्त्तनं। घोषप्रघोषसंघोषमहाप्राणादिकथनं। शक्तिं विना सृष्ट्यभावकथनं। मानसीमैथुनीभेदेन द्विविधसृष्टिः। विन्दुनादयोः स्वरूपं। विन्दुरेव जगत्कारणं। प्रणवनिरूपणं। रौद्री-वामा-ज्येष्ठाभेदात् त्रिविधा शक्तिः। इच्छाज्ञानक्रियाविमलादिभेदेन सदाशिवस्य शक्त्यानन्त्यकथनं। शब्दब्रह्मनिरूपणं। ककारादिवर्णानामुत्पत्तिः। तन्मात्रेभ्य आकाशादीनामुत्पत्तिः। जरायुजस्वेदजादिकथनं। उद्भिदादिदेहकथनं। आकाशादीनां मण्डलकथनं। पञ्चविंशतिसङ्ख्यकतत्त्वकीर्त्तनं। संक्षेपेण कलिकालवर्णनं। पञ्चवीजकथनं। शिवस्य विद्याविद्ये तनू। सृष्टिप्रक्रिया। कर्म्मप्रशंसा। गर्भे सन्तानोत्पत्तिप्रकारः। नाडीकथनं। वायूनां रूपस्थानादि। षट्कोषकथनं। स्त्रीपुरुषजननकारणं। बाल्यशैशवादिदशाकीर्त्तनं। अष्टैश्वर्य्यकथनं। सर्वस्यैव जगतो महामायात्मकत्वं। दीर्घस्वरवर्णानां पार्वत्यङ्गत्वं। ह्रस्वानाञ्च शिवाङ्गत्वं। एकस्यैव ब्रह्मणो नानावर्णात्मकत्वं। वैखरीकथनादि। कवर्गादीनां देवताकथनं। वर्णानां शक्तियन्त्रणा। वर्णन्यासकथनं। सरस्वतीमहाकाल्यादिशक्तयः। केशवनारायणादिन्यासः। मातृकाकथनं। मेषादिराशीनां यथास्थानं वर्णचिन्तनं। नक्षत्रन्यासः। तिथिन्यासः। पीठपूजाप्रकारः। तत्त्वन्यासादिकथनं। भूतशुद्धिप्रकारः। षट्चक्रस्थाननिर्देशादि। डाकिनीहाकिन्यादिकथनं। प्राणायामः। पाशवीजलक्ष्मीवीजादिनिरूपणं। प्राणप्रतिष्ठाकथनञ्च। इति प्रथमः पटलः।

योगलक्षणादिकथनं। तत्र ध्येयस्वरूपकीर्त्तनं। यमनियमादिलक्षणं। पद्म-स्वस्तिक-भद्र-वज्र-वीरासनानां लक्षणं। योगप्रक्रिया। योगाभासस्य त्रिविधलक्षणं। इडापिङ्गलादीनां संस्थानादिकथनं। कुण्डलिनीकथनं। तत्र ध्यानप्रकारः। शान्तिकपौष्टिकादिषट्कर्म्मकालनिरूपणं। योगमभ्यस्यतो हृदयाभ्यन्तरे भ्रमरगुञ्जनादिवत् नादो जायते—इति कथनं। नादप्रशंसा। नाद एव परब्रह्मेति कथनं। कर्म्मयोगकथनं। गुरुशिष्ययोर्लक्षणं। हविष्यान्नकथनं। पुंनिरूपणं। पूजास्थानकथनप्रसङ्गेन तीर्थस्थानकीर्त्तनं। श्रीमद्भागवतोक्तस्थानकथनं। (अत्र भागवतनामोल्लेखोऽप्यस्ति)। भैरवध्यानादिकं। कुण्डनिर्म्माणप्रकारः। अष्टविधकुण्डकीर्त्तनं। कर्म्मविशेषे कुण्डविशेषव्यवस्था। स्थण्डिलकथनं। मण्डलपद्मादिनिर्म्माणप्रकारः। पञ्चवर्णकचूर्णकथनं। वास्तुयागविधिः। षोडशमातृकाकथनं। मङ्गलकर्म्मभावे नान्दीश्राद्धविधानादि। शिष्याय मन्त्रदानप्रकारः। होमविधिः। होमद्रव्याणि। वह्निमुखादिस्थानविशेषे होमकरणे फलविशेषकथनं। कर्म्मविशेषे वह्नेर्नामविशेषकथनं। वह्नेरूपगन्धादिकीर्त्तनं। तत्र फलकथनञ्च। अकथहचक्रकथनं। राशिचक्रं। नक्षत्रचक्रं। कुलाकुलचक्रं।

चतुर्विधनिचक्रं। कूर्मचक्रं। अकडमचक्रं। एषां प्रशंसा। अङ्गन्यासः। मन्त्रोत्पत्तिः। पुंमन्त्रादिकथनं। छिन्न-रुद्ध-शक्तिहीनप्रभृतिमन्त्रलक्षणं। एतन्मन्त्रग्रहणे दोषः। छिन्नदुष्टादिमन्त्राणां शोधनप्रकारः। दीक्षाशब्दनिरुक्तिः। क्रियावती-वर्णमयी-कलावती-वेदमयीभेदेन चतुर्विधदीक्षानिरूपणं। कुत्र स्नातव्यं कथङ्कारश्चेति तन्मन्त्रादिकथनं। मन्त्रे भौमादिसप्तविधस्नानकथनं। पूजाप्रणाली। शाल्यादिषोडशमात्रकाख्यानं। गुरुकर्त्तृकशिष्याधिवासकर्त्तव्यता। तत्र मन्त्रादिविधानं। दीक्षाप्रचयविधिः। तत्र पूजाविधानादि। मन्त्रसंस्कारः। तत्र जनन-जीवन-ताडनप्रभृतिलक्षणं। धूपकथनं। मधुपर्कविधानं। पञ्चगव्यनिरूपणं। पञ्चामृतकथनञ्च। षोडशोपचारपञ्चोपचारादिपूजाकथनं। दीक्षायां विहिततिथयः। विहितनक्षत्राणि च। सामान्यकाले मनःप्रसन्नतानिबन्धनदीक्षानिरूपणं। मासविशेषे दीक्षाफलं। चन्द्रादिग्रहणे तत्फलकथनञ्च। गुरुशिष्ययोः कर्त्तव्यता। मन्त्रजपस्थानादिकथनं। इति द्वितीयः पटलः।

मनुष्यजन्मप्रशंसादि। विद्याकथनं। गायत्रीकथनं। मन्त्रबीजकथनमादि। पुरश्चरणप्रकारः। सकल-निष्कल-कलातीतभेदात् त्रिविधध्यानकथनं। छिन्नमस्तामन्त्रकथनमादि। अस्या ध्यानं। अस्या अन्यविधमन्त्रकथनपूर्वकं तत्र पूजाविधानादि। प्रचण्डचण्डिकास्तोत्रं। प्राणाग्निहोत्रकथनं। कौशिकीस्तवराजः। छिन्नमस्तामन्त्रयोः ऋषिच्छन्दआदिकथनं। अस्याः कवचकथनं। पुनः सपार्षदविष्णुपूजाकथनपूर्वकमस्याः पूजान्तरप्रणालीकथनं। अस्याः क्रमस्तोत्रकीर्त्तनं। आत्मसमर्पणमन्त्रादिकथनं। प्रचण्डचण्डिकासहस्रनामस्तोत्रं। मद्यमांसादिबलिदानपूर्वकं रजस्वलाया अङ्गविशेषदर्शनपुरःसरञ्च नानाविधसाधनविधानं। पुनश्छिन्नमस्ताया मन्त्रोद्धारादिकथनं। षड्चक्रीस्तवराजः। षड्चक्रीकवचं। अद्वैतचिन्तनप्रकारः। इति तृतीयः पटलः॥

कालिकार्चनविधिः। आसनादिकथनं। कुक्कुट-महिष-मार्ज्जार-नरमांस-मद्यादिभिर्बलिविधानं। दिवसे हविष्यान्नभोजनश्रीमद्भागवतकथाश्रवणादिना कृतवैष्णवाचारो रात्रौ सामिषान्नभोजनपूर्वकं दन्ताक्षमालिकया तन्मन्त्रजपविधानादि। तत्र भक्ष्याभक्ष्यविचारादिकं नास्तीतिकथनं। मिथ्याभाषणपरित्यागविधानं। दक्षिणाया ध्यानकथनमादि। तत्साधनप्रकारः। काल्या जन्ममन्त्रादिकथनं। कुण्डगोलविधानं। कुलकुल्यादिपूजाकथनं। कालिकाया गायत्रीपुरश्चरणकथनादि। श्मशानकालीगुह्यकालीप्रभृतिपूजाविधिः। अपरविधध्यानद्वयकथनं। बलिदानादि। कर्पूरादिस्तुतिः। दक्षिणाकवचं। अस्या अन्यविधमन्त्रकथनं। तत्र ध्यानपुरश्चरणादि। तत्र साधनभेदकथनं। पुनस्तस्याः स्तोत्रञ्च॥ इति चतुर्थः पटलः।

दुर्गामन्त्रकथनादि। ध्यानं। अस्याः साधनबीजपुरश्चर्यादिकथनं। दुर्गाकवचं। दुर्गानामनिरुक्तिः। दुर्गासहस्रनामस्तोत्रं। दुर्गानामशताष्टकं स्तोत्रं। हरिद्रागणेशस्य बीजकथनं। अस्य ध्यानादिस्तवकथनं। लक्ष्म्याद्याकामाख्यादिदुर्गाबीजकथनं। इति पञ्चमः पटलः॥

गुह्यकालिकाया बीजकथनमादि। अस्या माहात्म्यप्रकाशकश्रुतिप्रदर्शनं। पराशरवशिष्ठादि तत्सेवककीर्त्तनं। षोडशीविद्या। चतुर्दशीविद्या। महाविद्या। भद्रकाल्या बीजादिकथनं। एकविंश-

निविद्याकीर्त्तनं । आसां ध्यानकथनादि । त्रिपञ्चारचक्रं । तत्र पूजनप्रक्रिया । कालीगायत्रीकथनं । कालीस्तुतिः । अस्या अष्टोत्तरशतनामस्तोत्रं । कालीकवचं । गुह्यकालिकाक्रमस्तवः । इति षष्ठः पटलः ।

त्रिपुरसुन्दरीबीजकथनादि । वह्नेर्दशकलानामकथनं । एवं सूर्य्यस्य द्वादशकलानामकथनं । चन्द्रस्य षोड़शकलानामकीर्त्तनञ्च । त्रिपुरसुन्दर्य्या रत्नामन्त्रस्तवराजः । अस्या ध्यानादिकथनं । त्रिपुरसुन्दरीकवचं । त्रिपुरसुन्दरीशतनामस्तोत्रं । अस्या यन्त्रकथनादि । अस्याः षोड़शी शक्तिः । अस्याः सहस्रनामस्तोत्रं । अस्याः षोड़शाक्षरी विद्या । अत्र मन्त्रोद्धारः । ध्यानादिकथनञ्च । त्रिपुरसुन्दरीश्रीविद्याकवचं । त्रिपुरभैरव्या मन्त्रोद्धारादिकथनं । अस्याः शान्तिकवचं । अस्याः सहस्रनामस्तोत्रं । इति सप्तमः पटलः ।

महिषमर्द्दिन्याः पूजोपयोगिद्रव्यादिकथनं । अस्या मन्त्रोद्धारादि । ध्यानादिकथनञ्च । महिषमर्द्दिनीकवचं । महिषमर्द्दिनीसहस्रनामस्तोत्रं । नन्दिसमीपे महादेवस्य वेदमातुराविर्भाववृत्तान्तवर्णनं । भवानीसहस्रनामस्तोत्रं । सरस्वतीकवचकथनञ्च । इति अष्टमः पटलः । इति ।

---

**No. 3193** पूर्णप्रज्ञदर्शनम् । Substance, country-made paper, 17 × 4 inches. Folia, 104. Lines, 6—8 on a page. Extent, 3,072 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Rádhikánátha Gośvámí. Appearance, decayed. Prose and verse. Incorrect.

**Púrṇaprajṇa-darśana.** An exposition of the Vedánta system of Vyása with a view to establish the theory of the Daitaváda and the supreme godship of Vishṇu. By A'nanda Tírtha.

**Beginning.** नारायणं गुणैः सर्व्वैरुपेतं दोषवर्ज्जितं ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥

द्वापरे सर्व्वत्र ज्ञाने आकुलीभूते तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरभ्यर्थितो भगवान् नारायणो व्यासरूपेण अवततार । इत्यादि ।

**End.** यस्य त्रीण्युदितानि वेदवचने दिव्यानि रूपाण्यलं
भक्त्या दर्शितमित्यमेव निचितं देवस्य भर्गो महत् ।
वायो रामवचोनतं (?) प्रथमकं भीमो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि ॥

**Colophon.** इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादविरचिते चतुर्थाध्यायस्य चतुर्थपादः समाप्तः । समाप्तश्चायं ग्रन्थः ॥

विषयः। व्यासकृतब्रह्मसूत्रव्याख्यानमुखेन विष्णुतत्त्वमेव सर्व्वोत्तममिति शुद्धद्वैतवादमतसंस्थापनं ॥

---

**No. 3194.** षट्कर्म्मदीपिका। Substance, country-made yellow paper, 18 × 3 inches. Folia, 11. Lines, 9 on a page. Extent, 466 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Rámadhana Vidyávágíśa. Appearance, old. Prose and verse. Generally correct.

**Shaṭkarma-dípiká.** A collection of rituals for the worship of some of the Hindu divinities. Anonymous.

**Beginning.** अथ त्र्यम्बकमन्त्रप्रयोगः। शनैश्चरदिने अन्यदिने वा अश्वत्थमूलं स्पृष्ट्वा जपेत्। इत्यादि।

**End.** यन्त्रादीनां सर्व्वेषां निषेधमन्त्रनः। इत्यादिमन्त्रैः शिरआदिस्थानं स्पृष्ट्वाऽभिमन्त्रयेत्।

**Colophon.** इति षट्कर्म्मदीपिकायां नानाप्रकारशान्तिनियमस्तृतीय उद्देशः।

विषयः। त्र्यम्बकमन्त्रादेवपूजाप्रयोगः। सुखप्रसवमन्त्रः। निगड़भञ्जनं। तत्र पूजाप्रयोगः। वृष्टिकरणं। चण्डीपाठावृत्तिफलकथनं। पार्थिवशिवलिङ्गपूजाकथनं। तद्दर्शनफलकीर्त्तनं। लिङ्गप्रमाणं। स्फाटिकादिलिङ्गकथनं। रुद्राक्षरणादिमन्त्रकथनं। भस्मत्रिपुण्ड्रावश्यकता। शिवस्याष्टौमूर्त्तयः। लिङ्गमुद्रास्वरूपं। मुखवाद्यफलं। लिङ्गस्तुतिकथनञ्च। शिवभक्तस्य विष्णुनिन्दा-परहिंसादिवर्ज्जनकथनं। शिवपूजाप्रयोगः। अन्यविधशान्तिविधिः। अथर्व्वोक्तशान्तिविधानञ्च। शारीतोक्तज्वरशान्तिविधानं। शूलरोगप्रतीकारकथनं। मृतसञ्जीवनी। निगड़मोक्षविधिः। शिरोरोगनिवारणविधानकथनञ्च॥ इति।

---

**No. 3195.** ज्योतिःश्लोकसञ्चयः, अथवा, सर्व्वकर्म्म। Substance, country-made paper, 14 × 5 inches. Folia, 65. Lines, 7 on a page. Extent, 1,483 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Rámadhana Vidyávágíśa. Appearance, old. Verse. Incorrect.

**Jyotih-śloka-sanchaya** ALIAS **Sarvakarma.** Astrological maxims with regard to every work of civil life pointing the most appropriate times for the same. By Rámají Sena.

**Beginning.** श्रीकृष्णं सच्चिदानन्दं प्रणम्य जगदीश्वरं।

हिताय ज्योतिषः श्लोकान् सञ्चिनोमि यथोचितं॥

सूर्य्येन्दुक्ष्मेन्दुपुत्रविदशगणगुरुं भार्गवं सूर्य्यपुत्रं

राहुं केतुञ्च नत्वा धरणिसुरमुदे सर्व्वकर्म्माभिधानं ।
जाम्नाग्रामाधिवासी कविवरचतुरो राणिहाटप्रदेशी
श्रीमान् वैद्यः सविद्यः प्रथयति सुहृदां रामजोसेनधीरः ॥ इत्यादि ॥

End. सुविक्रमः सत्यवचाः सुधीरः प्रियंवदो धर्म्मधनेश्वरश्च ।
सौम्ये च तुङ्गेऽपि बलप्रधानो विचक्षणः कीर्त्तियुतो बलिष्ठः ॥

Colophon अतः परं विलुप्ततया परिसमाप्तिवाक्यं नास्ति ॥

विषयः । नवपञ्जीश्रवणफलकीर्त्तनं । वारकथनं । तिथयः । नक्षत्राणि । योगाः । दग्धदिनकथनं । वारवेला । कालवेला । विष्टिः । चन्द्रशुद्धिः । वामवेधशुद्धिः । घातचन्द्रकथनं । घातचन्द्रचक्रं । ताराशुद्धिः । यात्रिकतिथिः । तिथिदेवता । नक्षत्रदेवता । उत्पाटादिकथनं । कालघण्टायोगः । उग्रगणनक्षत्रकथनं । उग्रादिगणचक्रं । वारनक्षत्रामृतं । अमृतयोगः । अमृतयोगचक्रं । अवमदिनं । त्र्यहस्पर्शनिरूपणादि । सिद्धियोगः । अमृतयोगः । पापयोगः । मृत्युयोगः । करणानां भद्राभद्रकथनं । अशुभयोगत्यागः । एकाङ्गयात्रा । सप्ताङ्गयात्रा । सर्व्वाङ्गयात्रा । खनामिहिरयोर्वचनेन यात्राकथनञ्च । नववाहनयात्रादिनकीर्त्तनं । यमघण्टादिकथनं । क्षुतचरित्रकथनं । राशिनिर्णयः । लग्ननिरूपणं । रव्यादिभुक्तिमानं । नवांशसङ्ख्यादिकथनं । दिगीशानां नामकरणः । क्षेत्राधिपतयः । शत्रुमित्रकथनं । अत्र चक्रकथनञ्च । विवाहजोटनादिकथनं । वर्णनिर्णयः । गणकथनं । राशिज्ञानं । समयशुद्धिः । सप्तशलाकवेधः । पञ्चशलाकवेधः । तयोरपवादः । चन्द्रवेधः । विवाहलग्ननिरूपणं । सर्पचक्रकथनं । सूर्य्यवेधादिकथनं । रविशुद्धिः । विद्धनक्षत्रकथनं । युतयामित्रकथनं । तयोरपवादः । मूलत्रिकोणकीर्त्तनं । गोधूलिकथनादि । नववध्वागमनं । प्रथमर्त्तुनिरूपणं । तत्र वारनक्षत्रमासफलकथनादि । नामकरणं । अन्नप्राशनं । चूड़ाकरणं । कर्णवेधः । विद्यारम्भः । उपनयनं । अत्र नक्षत्रचक्राणि । यात्रा । तत्र तिथिभद्राभद्रकथनं । योगिनीस्थितिकथनादि । यात्रिकानक्षत्रनिर्णयचक्रं । तत्र उत्तमतादिकथनं । नक्षत्रदण्डकथनं । यात्रिकलग्नकथनं । चन्द्रवर्णकथनं । उषस्यादिनिषेधः । राहुकालामलचक्रं । तन्वादिद्वादशस्थानकथनं । वास्तुकथनं । वर्णध्वजादिकथनं । नागविचारः । वास्तुदिनं । गर्भिण्याः पञ्चामृतं । पुत्रकन्याजननगणना । नववस्त्रधारणं । शङ्खादिधारणं । नक्षत्रविशेषजातव्याधिफलकथनं । अत्र विरिञ्चिचक्रं । पञ्चस्वरचक्रं । औषधभक्षणं । वारभेदे वैद्योपवेशनप्रकारः । आरोग्यस्नानं । हलप्रवाहः । वीजवपनं । मुष्टिग्रहणं । नवान्नं । क्रयविक्रयदिनकथनं । जन्मपताकी । जातककथनं । रव्यादिभोगः । दशाभोगः । नक्षत्रादिदशा । वेलानियमः । ग्रहाणां भावः । भोजनशयनादिफलं । जन्मनक्षत्रफलाफलं । केतुपताकी । केतुकुण्डली । गुरुकुण्डली । जयपराजयौ । बन्धननक्षत्रकथनं । वर्षपातलक्षणानि । क्षौरविधिः । ज्येष्ठीपतनफलं । ग्रहणे दर्शनादर्शनविचारः । संक्रान्तिः । सप्तनाड़ीफलं । सर्व्वतोभद्रचक्रं । ऋणादानं । नौकादिनिर्म्माणं । नावारम्भदिनं । जातचक्रं । यात्राया दिनफलं । दिनदशाप्रश्नगणना । केरलिमतेन भविष्यद्गणना । बृहस्पतिसञ्चारगणना । नवग्रहस्तुतिः । ग्रहाणां

जन्मस्थाननिरूपणं । ग्रहाणामधिदेवताः । ग्रहाणां प्रत्यधिदेवताः । ग्रहाणां मूर्त्तिकथनं । दशाङ्ग-धूपकथनं । षोड़शाङ्गधूपकथनञ्च । पञ्चोपचारादिकथनं। केन्द्रग्रहकथनं । तुङ्गीग्रहफलकथनादि ॥ ।

---

**No. 3196.** स्मृतिदर्पणः । Substance, country-made yellow paper, $18\frac{1}{2} \times 3\frac{1}{2}$ inches Folia, 117. Lines, 6—7 on a page Extent, 3,612 Slokas. Character, Bengali. Date, ? Place of deposit, Sántipura, Bhuvanesvara Tarkálaṅkára. Appearance, fresh Prose and verse. Generally correct.

**Smṛitidarpaṇa.** A digest of the rules of the Smṛiti for civil rites.

**Beginning.** प्रणम्य जगदानन्दं सानन्दं नन्दनन्दनं ।
बालानां सुखबोधाय तन्यते स्मृतिदर्पणः ॥ इत्यादि ।

**End.** हृद्दामाश्रमेतद्धि शङ्करेण च भाषितं ।
एतन्निवेदयेत् सर्व्वं गुरवे भक्तिमान् नरः ॥
युगाद्यावयने पुण्ये मन्वादौ च विशेषतः ॥

**Colophon** इति स्मृतिदर्पणः समाप्तः ।

विषयः । उद्वाहनिरूपणं । सापिण्ड्यकथनं । पितृबान्धवादिकथनं । कीदृशी कन्या उद्वाह्या तन्निरूपणादि । गोविन्दविवाहपद्धतिः । अनध्यायनिरूपणं । उपनयनादिव्यवस्था । अकालवृष्टि-व्यवस्था । संकल्पविचारादि । मलमासलक्षणादि । चान्द्रसौरादिभेदात् पञ्चविधमासकथनं । मासादीनां कुत्र कथमुल्लेख इति कथनं । विधिविचारः । तत्र विधिनियमपरिसंख्यानां लक्ष-णादि । त्रिविधार्थवादनिरूपणं । निषेधनिरूपणं । पर्य्युदासकथनं । विकल्पकथनं । इच्छाविकल्प अष्टविधदोषकीर्त्तनं । युग्मादितिथिव्यवस्था । जन्मतिथिकथनं । प्रतिपत् । द्वितीया । तृतीया । चतुर्थी । पञ्चमी । मनसादेवीपूजा । षष्ठी । सप्तमी । आरोग्यसप्तमी । विधानसप्तमी । अष्टमी । जन्माष्टमी । दूर्व्वाष्टमी । भीष्माष्टमी । अशोकाष्टमी । नवमी । श्रीरामनवमी । दशमी । दश-हरा । दुर्गोत्सवः । कल्पारम्भव्यवस्था । चण्डीपाठप्रणाली । बोधनव्यवस्था । सप्तम्यादिपूजाव्यवस्था । बलिदानं । धूपलक्षणं । उपचाराः । एकादशी । चातुर्मास्यव्रतारम्भः । आरब्धव्रतत्यागे प्राय-श्चित्तकथनं । मत्स्यादित्यागफलं । हरिशयनव्यवस्था । द्वादशी । श्रवणद्वादशी । त्रयोदशी । वारुणत्रयोदशी । चतुर्द्दशी । अनन्तव्रतं । उल्कादानविधिः । रटन्ती । शिवरात्रिः । मदन-चतुर्द्दशी । पौर्णमासी । महाज्यैष्ठी । कोजागरः । दोलयात्रा । स्नानयात्रा । संक्रान्तिव्यवस्था । कार्त्तिककृत्यं । ग्रहणं । अमावस्या । अर्द्धोदययोगः । युगाद्याव्यवस्था । प्रायश्चित्तव्यवस्था । प्राय-श्चित्तलक्षणं । अतिपातकानि । अनुपातकानि । उपपातकानि । महापातकानि । एषां प्राय-श्चित्तानि । संसर्गप्रायश्चित्तकथनं । धेनुमूल्यव्यवस्था । प्रायश्चित्तपूर्व्वाहकृत्यं । बाल्यादिभेदेन प्राय-श्चित्तव्यवस्था । ज्ञानकृतादिव्यवस्था । एकहायनादिगोवधप्रायश्चित्तव्यवस्था । रोधादिनिमित्तक-

गोबधप्रायश्चित्तव्यवस्था । अस्थिभङ्गादिप्रायश्चित्तव्यवस्था । अपालननिमित्तगोबधप्रायश्चित्तव्यवस्था । गोबधापवादः । क्षत्रियादिबधप्रायश्चित्तव्यवस्था । स्त्रीबधप्रायश्चित्तं । गर्भबधप्रायश्चित्तं । मार्ज्जारबध-प्रायश्चित्तं । मत्स्यादिबधप्रायश्चित्तं । देवगृह्यादिभेदनप्रायश्चित्तं । अभिचारप्रायश्चित्तं । अभक्ष्याणि । तद्भक्षणे प्रायश्चित्तं । शूद्राद्यन्नभक्षणप्रायश्चित्तं । भूमिदानं । सुवर्णदानं । शुद्धाशुद्धिकथनं । सह-मरणानुमरणयोर्व्यवस्थानिरूपणं । अनयोरशौचसङ्करः । अतिक्रान्ताशौचकथनं । अशौचे विधि-निषेधौ । अशौचसङ्करः । गर्भस्रावाशौचं । सद्यःशौचं । बालाद्यशौचं । विदेशस्थाशौचं । सपिण्डाद्य-शौचं । अशौचमध्ये वर्ज्यावर्ज्यानि । मातामहाद्यशौचं । मृत्युविशेषाशौचं । अशौचापवादः । शवानु-गमनाशौचं । अस्थिसञ्चयनाङ्गस्पर्शयोः कालः । द्रव्यशुद्धिः । वापीकूपतडागेषु मृते तज्जलशुद्धि-कथनं । गृहे मरणे तच्छुद्धिकथनं । सूतिकादिदाहव्यवस्था । मुमूर्षुकृत्यं । प्रेततर्पणव्यवस्था । पुत्रस्य वर्षमध्यकृत्यं । पिण्डदानं । अशौचान्तिमदिनकृत्यं । अशौचान्तद्वितीयदिनकृत्यं । वृषोत्सर्गः । वत्सतरधेनुः । अनयोः पद्धतिः । दाननिरूपणं । दानाभासाः । दानपरिपाटी । षोडशदानं । प्रेतक्रियाधिकारिणः । अनधिकारिणः । दत्तकपरिपाटी । सपिण्डीकरणादिश्राद्धं । उभयतोमुखी-दानं । विपुलगृहदानं । गृहदामान्नदानकथनञ्च । इति ।

---

**No. 3197.** ज्योतिःप्रदीपः । Substance, country paper, $14\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 44. Lines, 8 on a page. Extent, 1,144 ślokas. Character, Bengali. Date, ? Place of deposit, S'ántipura, Harádhana Bhaṭṭáchárya. Appearance, decayed. Prose and verse. Incorrect.

**Jyotih-pradípa.** Astrology and horoscopy.

**Beginning.** जगद्धाम्नाघ+घघ्नं जगतामेकलोचनं ।
वन्दे बन्धूकसङ्काशमहःपतिमहर्निशं ॥
जगत्प्रकाशको ज्योतिर्ग्रन्थः सूर्य्योपमो महान् ।
ततः संक्षेपतो ज्योतिःप्रदीपः क्रियते परः ॥ इत्यादि ।

**End.** दुर्भिक्षं राजपीड़ा मरणभयकरा शस्यहानिश्च भूमिः ।

**Colophon.** इति ज्योतिःप्रदीपः समाप्तः ।

विषयः । तिथिनक्षत्रोद्देशः । नक्षत्रदेवताकथनं । योगकथनं । निषिद्धयोगाः । करणकथनं । करणाधिपकथनं । तिथीनां नन्दादिसंज्ञाकथनं । चन्द्रशुद्धिः । नक्षत्रशुद्धिः । नक्षत्रदोषप्रतीकारः । रविशुद्धिः । सर्व्वग्रहशुद्धिः । यमघण्टकथनं । दग्धदिनकथनं । तिथिपापयोगकथनं । मासदग्ध-कथनं । विष्टिकथनं । नक्षत्रपापयोगकथनं । मृत्युयोगकथनं । निषिद्धकथनं । दिवारात्रिकाल-वेलाकथनं । वारवेलाकथनं । तिथ्यमृतकथनं । अमृतयोगफलं । तिथिसिद्धियोगकथनादि । राश्युत्पत्तिकथनं । राशिस्वरूपकथनं । क्षेत्रकथनं । मेषादीनां संज्ञाकथनं । नवांशवर्गोत्तमव्यवस्था ।

द्रेक्काणकथनं। केन्द्रस्थानकथनं। लग्नभोगमानकथनं। दिवामानकथनं। ग्रहाणां दृष्टिकथनादि। ग्रहाणामुच्चनीचकथनं। ग्रहाणां मित्रामित्रकथनं। इति १ म प्रकाशः।

यात्रादौ निषिद्धमासकथनादि। तत्र वारफलं। तिथिफलं। विद्धिताविद्धितनक्षत्रकथनं। लग्नफलं। तिथियोगिनीकथनादि। राहुस्थानकथनादि। उषायोगः। इति २ य प्रकाशः।

जातके गण्डकथनं। रात्रिदिवासङ्केतकथनादि। तनुस्थानादिकथनं। लग्नादिफलकथनं। सूर्य्यसोमादिविष्टिकथनं। मातृहा योगः। जारजयोगः। शुभवीक्षणकथनं। सप्तमस्थभौमादिफलं। केन्द्रगुरुप्रशंसा। कर्म्मस्थानग्रहायुःकथनं। कोष्ठीफलकथनादि। कनकदण्डयोगः। अनफादि-योगकथनं। उच्चनीचग्रहफलकथनादि। ३ य प्रकाशः।

अन्नप्राशनं। नरान्नं। ४ र्थ प्रकाशः। चूड़ाकरणं। विद्यारम्भः। उपनयनं। विवाहप्रकरणं। ५ म प्रकाशः।

वीजवपनं। नागक्रोड़ादिकथनं। गृहकरणे मासादिकथनं। गृहप्रवेशादिकथनं। ६ ष्ठ प्रकाशः।

निषिद्धचन्द्रनक्षत्रयोराहुदर्शने दोषकथनादि। भूकम्पादिकथनं। आग्नेयादिमण्डलविचार-कथनं। ७ म प्रकाशः। इति।

---

**No. 3198.** यतिस्वधर्म्मभिक्षाविधिः। Substance, country-made paper, $9\frac{1}{2}$ × 4 inches. Folia, 16. Lines, 9 on a page. Extent, 288 ślokas. Character, Nágara. Date, Sk. 1750. Place of deposit, Calcutta, Government of India. Appearance, fresh. Verse. Generally correct

**Yatidharma-bhikshávidhi.** Rules for mendicancy on the part of Yatis. By S'añkara A'chárya.

**Beginning.** श्राद्धान्नं यस्य कुक्षौ तु मुहूर्त्तमपि वर्त्तते।
भिक्षोश्चत्वारि नश्यन्ति आयुः प्रज्ञा यशो बलं॥
अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः।
रात्रौ भक्ष्यन्तु नाश्नीयाद्भुक्त्वा चान्द्रायणं चरेत्॥
उपरागे तु सम्प्राप्ते तीर्थयात्रादिसङ्कटे।
दिवा यदि न भुक्तं स्याद्रात्रौ भुक्त्वा न दोषभाक्॥
नापो मूत्रपुरीषाभ्यां नाग्निर्दहनकर्म्मणा।
न वायुः स्पर्शदोषेण नान्नदोषेण मस्करी॥ इत्यादि।

**End.** अयने मकरे कर्के विषुवे तुलमेषयोः।
उपवासं प्रकुर्व्वीत मुनिर्मोक्षपरायणः॥

(अवत्यारवयावधि (?)) ॥

**Colophon.** इति श्रीमच्छङ्कराचार्य्यविरचितो यतिस्वधर्म्मभिक्षाविधिः समाप्तः ।

शाके १७५० ।

विषयः । सन्न्यासिनामाचारादिविधिनिरूपणं । तत्र तेषां भोज्याभोज्यतद्भोजनादिकालनिरूपणं । वस्त्रादिशुद्धिनिरूपणं । भिक्षाविधिकथनं । गुरुशुश्रूषणादिविधिकथनं । अवस्थितियोग्यदेशादिनिरूपणं । यत्यभिवादनविधिकथनं । पितॄनुद्दिश्य श्राद्धादिकरणे सन्न्यासिनां दोषकथनं । शूद्रसम्भाषणादिनिषेधनिरूपणं । वैराग्यावश्यकताकथनं । अथ कुटिचक-बहूदक-हंस-परमहंसभेदेन सन्न्यासिनां चातुर्व्विध्यनिर्णयः । माधुकर्य्यादिभेदेन पञ्चविधभिक्षाकथनं । पीड़ादौ औषधसेवनविधिकथनं । मृतकसूतकनिरूपणं । उपवासविधिकथनञ्च । इति ।

---

**No. 3199.** यतिधर्म्मसङ्ग्रहः । Substance, country-made paper, $10\frac{1}{2}\times5\frac{1}{2}$ inches. Folia, 51. Lines, 11 on a page. Extent, 1,542 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh Prose and verse. Incorrect.

**Yatidharma-sańgraha.** A code of rules regarding the duties of Yatis, civil and religious. Anonymous.

**Beginning** श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः । परमगुरुभ्यो नमः । परमेष्ठिगुरुभ्यो नमः । परात्परगुरुभ्यो नमः ॥ अथ यतिधर्म्मसङ्ग्रहो लिख्यते । तत्रादावाचार्य्यपरम्परा । यद्बोधसमुद्भूतं यद्बोधात् प्रविलीयते । नामरूपात्मकं विश्वं तस्मै पूर्णात्मने नमः । तत्पूर्णसच्चिदानन्दाद्वयसमस्तब्रह्मादिकाचार्य्यप्रसादादित्यादि ।

**End.** यदस्ति यद्भाति तदात्मरूपं नान्यत् ततो भाति न चान्यदस्ति ।
स्वभावसंवित् प्रतिभाति केवला ग्राह्यं ग्रहीतेति मृषैव कल्पना ॥

**Colophon.** इति काशीमृतिमोक्षः । ध्यानादिकथनञ्च । इति सामान्ययतिधर्म्मसङ्ग्रहणालम् ॥

विषयः । आचार्य्यपरम्पराकथनं । आचार्य्यलक्षणादिकथनं । शङ्कराचार्य्यजन्मादिकथनं । तत्कृतसाधनकथनञ्च । मठाम्नायसम्प्रदायनामव्याख्यानादिकथनं । पञ्चद्रविड़पञ्चगौड़भेदकथनं । दण्डस्वरूपलक्षणनामसुद्रादिकथनं । दण्डस्पर्शनतद्वन्दनादिविधिकथनं । यतिपात्रनिरूपणं । तत्र कमण्डलुसंस्कारादिविधिकथनं । काषायवस्त्रकौपीनादिनिरूपणं । निषिद्धवस्त्रकथनं । तीर्थस्वामिनां प्रातःकृत्यादिमृत्तिकास्नानादिनिरूपणं । निषिद्धोदकादिनिरूपणं । सचेलस्नाननिमित्तानि । आचमनविधिकथनं । प्रत्याम्नायतावशेषकथनं । तिलकादिविधिकथनं । आसनादिविधिकथनं । प्राणायामप्रकारकीर्त्तनं । न्यासध्यानादिविधिकथनं । मालाभेदनिरूपणं । रुद्राक्षधारणादिफलकथनं ।

प्रणवगायत्र्यादिजपविधिकथनं। सन्ध्याप्रशंसाकीर्त्तनं। वन्दनादिविधिकथनं। प्रार्थनास्तोकादि-कथनं। सन्न्यासिप्रशंसाकीर्त्तनं। गुरोर्मातापित्रोश्च मरणादौ सन्न्यासिनां कर्त्तव्यताकथनं। सद्गुरु-जलादिग्रहणे प्रतिबन्धकादिनिरूपणं। वास्तुविषये अशौचादिनिरूपणं। भिक्षाविषये माधुकर्य्यादि-विधानकथनं। मण्डलपर्य्यवेक्षणादिविधिकथनं। उच्छिष्टस्पर्शादिनिमित्तशौचादिनिरूपणं। प्राय-श्चित्तप्रकारकथनं। छत्रादिलक्षणं। सायन्तनविधिकथनं। पर्य्यटनादिविधिकथनं। चातुर्मास्यादि-विधिकथनं। क्षौरकालादिनिरूपणं। तत्र स्नानादिविधिकथनं। मठे गुरुपूजागुरुपूजादिविधि-कथनं। विश्वरूपयात्राविधिकथनं। तत्र गीतापाठादिविधिकथनं। काशीवासादिमाहात्म्य-कथनञ्च। इति शम्।

---

**No. 3200.** दर्शपौर्णमासाख्ययागप्रयोगः। Substance, country-made paper, 8 × $3\frac{1}{2}$ inches. Folia, 16. Lines, 8 on a page. Extent, 232 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Correct.

**Darśapaurṇamásákhyayágaprayoga.** A manual for the performance of the Darśa and the Paurṇamása rites, giving all the mantras. The codex is defective at the end, and the author's name has not been found. Frequently the names of the authors of Prayogas are not given in MSS.

**Beginning.** श्रीगणेशाय नमः। याजमानं व्याख्यास्यामो यजमानस्य ब्रह्मचर्य्यं दक्षिणा-दानं द्रव्यप्रकल्पनं कामानां कामनं। प्रत्यगो (प्रत्यगा) शिषो मन्त्रान् जपति अकरणानुपतिष्ठते-ऽनुमन्त्रयते। अथ दर्शपूर्णमासयोः (दर्शपौर्णमास्योः) शुचिः शुक्लवासा दर्भवासीनो दर्भान् धारयमाणः पवित्रपाणिः पत्न्या सह प्राणानायम्य अद्येत्यादिकालादिसंकीर्त्तनानन्तरं पौर्णमासेन यक्ष्ये दर्शेन यक्ष्ये। इति संकल्प्य केशश्मश्रून् वापयेत्।

**End.** शेषखण्डितत्वात् परिसमाप्तिसूचकवाक्यं नास्ति।

विषयः। दर्शपौर्णमासाख्ययागस्यानुष्ठानकथनं।

---

**No. 3201.** त्रिशङ्कुवेदानुवचनं। Substance, country-made paper, $8\frac{1}{2}$ × 4 inches. Folia, 2. Lines, 8 on a page. Extent, 22 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Correct.

**Trisaṅku-vedánuvachana.** Apparently a collection of the Sánti mantras, but the MS. is too defective to show what it really is.

**Beginning.** श्रीगणेशाय नमः। ॐ नमः परब्रह्मणे। शन्नो मित्रः शं वरुणः शन्नो भवत्व-र्य्यमा शं न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः। नमो ब्रह्मणे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि

त्व (त्वा) मेव प्रत्यक्षं ब्रह्म वदिष्यामि ऋतुञ्च वदिष्यामि सत्यञ्च वदिष्यामि तन्मामवतु तद्वक्तार-मवतु अवतु मां अवतु वक्तारं ।

End. शेषखण्डितत्वात् समाप्तिसूचकवाक्यं नास्ति ।

विषयः । त्रिशङ्कुवेदानुवचनादिकथनं ।

---

**No. 3202.** विधुरौपासनप्रयोगः । Substance, country-made paper, 12½ × 4 inches. Folia, 2. Lines, 11 on a page. Extent, 38 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

**Vidhuropásana-prayoga.** A guide to the performance of the rite called Vidhuropásana. Anonymous.

**Beginning.** श्रीगणेशाय नमः । अथ विधुरौपासनप्रयोगो वक्ष्यते । आदावभ्यङ्गस्नानं ततः पुण्याहवाचनं । ततः प्राणानायम्य एवंगुणपुण्यतिथौ मम भार्य्यानाशनिमित्तार्थं नष्टौपासनविच्छिन्न (?) दोषपरिहारार्थं विधुरौपासनहोमं करिष्ये ।

**End.** शेषखण्डितत्वात् समाप्तिसूचकवाक्यं नास्ति ।

विषयः । शान्त्यर्थं विधुराणामपत्नीकानाञ्च औपासननामकहोमविधिप्रयोगकथनं ।

---

**No 3203.** विधुराधानप्रयोगः । Substance, country-made paper, 9½ × 4 inches. Folia, 6. Lines, 8 on a page. Extent, 111 ślokas. Character, Nágara. Date, Sk. 1755, Sm. 1890. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Correct.

**Vidhurádhána-prayoga.** A guide to the performance of the A'dhána rite by a widower. Anonymous.

**Beginning.** श्रीगणेशाय नमः । अथ मृतपत्नीकस्य विवाहेऽप्यसमर्थस्य तदग्न्याधानप्रयोगोऽभिधीयते । दारकर्म्मा सम्भवे आधानमग्निद्वारा पत्नीयजमानोभयार्थं तदसम्भवे आत्मार्थं तदा आत्मार्थमेव । तथापस्तम्बः । पत्नीयज्ञाद्मरणे विधुरत्वं प्रपेदिरे । विवाहेऽप्यसमर्थस्य आश्रमस्य निवृत्तये ।

**End** रामोऽपि कृत्वा सौवर्णीं सीतां पत्नीं यशस्विनीं ।
ईजे बहुविधैर्यज्ञैः सह भ्रातृभिरच्यते ।

**Colophon.** इति विधुराधानप्रयोगः समाप्तः ।

विषयः । मृतपत्नीकस्य विवाहेऽसमर्थस्य अग्न्याधानानुष्ठानकथनं ।

---

**No. 3204.** विहृतषोड़शी । Substance, country-made paper, 10¾ × 4¾ inches. Folia, 2. Lines, 12 on a page. Extent, 118 ślokas. Character, Maháráshtríya. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally correct.

**Vihṛita-shoḍaśí** Sixteen hymns in regard to the Shoḍaśí rite.

**Beginning.** श्रीगणेशाय नमः। अथ विहृतषोड़शी। ॐभूर्भुवःस्वरों अध्वर्य्यो शो शों मावो-मिन्द्र जुषस्व प्रवहाय चि प्ररस्वरी इव। पिवासुतस्य मतिनं मध्वश्च कामनश्रोत्ममंदायोन् चिः।

**End.** ॐ थामो दैवमादे। मदामो दैवो मयेति प्रतिगरः। अवसाने प्रपाव चंक्र-मेण प्रप्रव इत्यादि प्राक्तनप्रतिमरः।

**Colophon.** इति विहृतषोड़शी समाप्ता।

विषयः। अतिरात्रविहारे षोड़शीग्रहणविधिः।

---

**No. 3205.** योगार्णवः। Substance, country-made paper, 10½ × 4¾ inches. Folia, 12. Lines, 10 on a page. Extent, 337 ślokas. Character, Nágara. Date, SM. 1815. Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Correct.

**Yogárṇava.** Calculations of conjunctions with reference to the places of the planets in a horoscope, and their effect on the destiny of the person concerned. By Veṅkaṭeśa.

**Beginning.** नत्वा तं मनसा म × त्ववदनं श्रीवेङ्कटेशः मतां श्रीमानप्ययभूसुरात्म-जवरो होराविदां प्रीतये। ज्योतिःशास्त्रमहार्णवे प्रतरणे संगृह्य शास्त्रान्तराद्वद्ये जातकशास्त्र मार्गफलदं योगार्णवाख्यं प्लवं ॥१॥

**End.** आचार्य्यवर्य्योऽनिगमाङ्गशास्त्रे विनिश्चितार्थः सुमतिः सुशीलः। श्रीवेङ्कटेशो भुवि मानवानां चकार योगार्णवमत्र भूमौ।

विषयः। राशिचक्रे ग्रहाणां स्थितिविशेषेण योगकथनं।

---

**No 3206.** योगसारः सटीकः। Substance, country-made paper, 10 × 4½ inches. Folia, 10. Lines, 5—11 on a page. Extent, 794 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Correct.

**Yogasára**. The essentials of the Yoga meditation according to the Jains. By Yogachandra Muni. The text is elucidated by a gloss, *Tabbá*.

**Beginning**. मूलस्य—

।८५। श्रीजिनाय नमः। णिम्मल झाणपरिथिया कम्मकलङ्क दहेवि अप्पालद्ध उ जेणपरु ते परमप्पणवेवि ।१।

टीकायाः—

।८५। श्रीगुरुभ्यो नमः। निर्म्मलध्याननैविषे स्थिनथई नइ। कर्म्मरूपजे कलङ्क मैलतेहनै आत्मानुं स्वरूपप्रत्यक्ष अनुभवे परमात्मापरमे ध्यानरूपअग्निवडीनै वालीनुं स्वरनै नमस्कारनै जणइ परमात्मालाधो कहतां करीने आत्मा ॥

**End**. मूलस्य—

संसारह भयभीय एह जोगचन्दमुणि पण अप्पासंबोहणकया दोहाइकमणेणिं ।१०८।

इति श्रीयोगसारः सम्पूर्णः। हिंसादिकपरिहरु कि करिजो अप्पाइववेइ सोवियउ चारित्र-मुणिजो पञ्चमगइणिइ ।१०।

टीकायाः—

णिज्यो संसारचतुर्गतिउ हतो एहवो जे जोगचन्दमुनइ संबोधइं प्रतिबोधि वाका एकमनेकइ-कोधा दोहानामच्छन्द सहितकीधा।

**Colophon**. इति श्रीयोगसारे टवार्थः सम्पूर्णः। हिंसादिकथा अवनइं परिजे जीव आत्मानइं विषइं ते वीजउ चारित्रवेदोपस्थापनीजे चारित्रपञ्चमगतिमुक्तिनइं करीनइं स्थिर-थाइय चारित्रजां णिवी पमादइ ।१०१।

विषयः। जैनानां योगकथनं।

---

**No. 3207**. उपलेखा। Substance, country-made paper, 10 × 4 inches. Folia, 6. Lines, 10 on a page. Extent, 127 ślokas. Character, Nágara. Date, Sm. 1863. Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Generally correct.

**Upalekhá**. Sanskrit orthography, treating especially of the accents. By Saunaka.

**Beginning**. श्रीगणेशाय नमः। अकारादयो द्वादश स्वराः स्थिहं व्यञ्जनं ककारादायः पञ्च पञ्च वर्गाः स्पर्शा यकारादयस्त्वन्तस्थोऽन्मस्थाः शकारादयोऽष्टा (?) ऊष्माणः कण्ठो विसर्गानुस्वारौ

प्रथमद्वितीयौ वर्गाणामुष्माणश्च अकारवर्ज्यमघोषवच्छिष्टं घोषवत् ह्रस्वमेकमात्रं दीर्घं द्विमात्रं प्लुतं त्रिमात्रं व्यञ्जनमर्द्धमात्रं स्वरभक्तिश्चाक्रमे क्रमे लर्द्धौ नाक्रमद्वि पदग्रस्तयोश्चरेणोत्तरं पदं संदध्या-दर्द्धचोत्ना द्रूं इतीमित्याकारे षत्वसंहितेष्विति पदे नः परेनावस्येत् ।

**End.** छतश्च सत्यं चैत्यपदक्रममिममुमयाभिगीतं द्विजवरगुणा गुरुणादरेण प्रपठितं परितोऽपि पुण्यकर्म्मा भवति शास्त्रमुपलेखं शास्त्रमुपलेखं । नमः शौनकाय नमः शौनकाय इति वा पाठः ।

**Colophon.** इत्युपलेखाख्यं पदशिष्टं समाप्तं । व्यञ्जनशिरसि सन्निविष्टो रफश्चवर्णतां याति स तु सर्व्वत्र न कर्त्तव्यः कर्त्तव्यः प्रथमस्वेषु वा । आदित्यैर्योतमित्यस्मिन्नद्वा + + स्वर परे। पदाध्यायेऽनुदात्तत्वात् संहितायामुदात्तवत् ।

**विषयः।** अकारादिहकारान्तवर्णानां स्वरव्यञ्जनादिभेदकथनं । परिगृह्यावगृह्यादिलक्षण-निर्द्देशः । उदात्तानुदात्तादिभेदे कम्पादिकथनञ्च ।

---

**No. 3208.** निर्व्वाणस्थितिः । Substance, country-made paper, $9\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 18. Lines, 10 on a page. Extent, 304 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India, Appearance, old. Verse. Generally correct.

**Nirvánasthiti.** A dissertation on final emancipation and the means thereof. An extract from the Rámáyaṇa of Válmíkí.

**Beginning.** श्रीगणेशाय नमः ।

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्त्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥१॥
अहं बद्धो विमुक्तः स्यामिति यस्यास्ति निश्चयः ।
नात्यन्तमज्ञो नो तज्ज्ञः सोऽस्मिन् शास्त्रेऽधिकारवान् ॥२॥
यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात् ।
तावत् सद्गुरुतः कश्चित् सच्छास्त्रमपि नो लभेत् ॥३॥
महानुभावसम्पर्कात् संसारार्णवलङ्घने ।
युक्तिः संप्राप्यते राम दृढा नौरिव नाविकात् ॥४॥
यस्मिन् देशे तु राम ज्ञो नास्ति सज्जनपादपः ।
सफलः शीतलच्छायो न तत्र निवसेद्बुधः ॥५॥

**End.** एतावदेव खिलमस्तिलमूर्त्तेः संसारसंस्तुतिचिरभ्रमनिष्टतस्य । तज्ज्ञस्य यस्य शमकोपविषादमोहलोभापदामनुदिनं निपुणं तनुत्वं । १ १ ।

**Colophon.** इति श्रीवाल्मीकीये रामायणे निर्व्वाणस्थितिः सम्पूर्णा ।

विषयः । निर्व्वाणसुखप्राप्तकथनं ।

---

**No. 3209. ग्रहयज्ञादिविधिः ।** Substance, country-made paper, 8½ × 5 inches. Folia, 39. Lines, 17 on a page. Extent, 1,960 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Generally correct.

**Grahayajnádi-vidhi.** Rituals for a number of domestic rites.

**Beginning.** आद्यखण्डितत्वात् प्रारम्भवाक्यं नास्ति ।

**End.** अन्तखण्डितत्वात् समाप्तिसूचकवाक्यं नास्ति ।

विषयः । ग्रहयज्ञविधिः । ग्रहाणां होमसङ्ख्याभेदे विभिन्नकुण्डलक्षणकथनं । ऋत्विक्सङ्ख्याकथनञ्च । दिग्विशेषे कुण्डानां कर्त्तव्यतानिरूपणं । देवरूपादिप्रतिष्ठायां समयनिर्णयः । गणपतिप्रतिष्ठा । सूर्य्यप्रतिष्ठा । शक्तिप्रतिष्ठा । भैरवप्रतिष्ठा । हनूमत्प्रतिष्ठा । नन्दिप्रतिष्ठा । दक्षिणामूर्त्तिखण्डप्रतिष्ठा । वैष्णवमूर्त्तिप्रतिष्ठा । गरुड़प्रतिष्ठा । राधाकृष्णमूर्त्तिप्रतिष्ठा । सर्व्वदेवदानविधिः । वापीकूपतड़ागोत्सर्गप्रयोगो विधिश्च । इन्द्रावनोद्यापनं । घट्टगोपुरसेतूद्यापनविधिः । तेषां प्रयोगश्च । पुष्पदानप्रतिपत्तप्रयोगौ । वास्तुशान्तिप्रयोगः । प्रासादकरणविधिः । शिलान्यासप्रयोगः ।

---

**No. 3210. ज्योतिषं ।** Substance, country-made paper, 5½ × 3¼ inches. Folia, 64. Lines, 7 on a page. Extent, 336 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Jyotisha.** The elements of civil astrology. The MS. is defective and the author's name has not been found. The name of the work as given, is obviously not correct.

**Beginning.** श्रीगणेशाय नमः । अथ होरा उपरि श्लोके । वारप्रवर्त्तिघटिका द्विघ्ना कालाख्यहोरापतयः शराशा । धिनाधिपाद्या रविशुक्रसौम्याः शशाङ्कशौरीज्यकुजाः क्रमेण । काकत्रयं विप्रचतुष्टयञ्च वभुद्वयं चाष्टचाम्बराणि । मिलन्ति मार्गे रजकीकुमारि सूर्य्यस्य होराचलितस्य पुंसां ।

**End.** शेषखण्डितत्वात् समाप्तिसूचकवाक्यं नास्ति ।

विषयः । होरादिकथनं विंशोत्तरीदशादिनिरूपणं । रव्यादिषु सप्तसु वारेषु कार्य्यविशेषा-

मुहामकथनं। वारविशेषे तिथिविशेषप्राप्तौ दग्धाकथनं। लग्नादिद्वादशराशिषु एकैकस्मिन् स्थितानां नवग्रहाणां शुभाशुभफलकथनं। जीवयोगादिनानाविधयोगनिरूपणं। लग्नादिषु स्थानविशेषेऽवस्थितानां ग्रहाणां शुभाशुभफलकीर्त्तनं। सूर्य्यचतुष्पदादिनिरूपणञ्च।

---

**No. 3211.** ऐकाह्निकचातुर्मास्यम्। Substance, country-made paper, 9½ × 4 inches. Folia, 8. Lines, 9 on a page. Extent, 126 ślokas Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Aikáhika-cháturmásya.** The rituals of a rite named *Aikáhika-cháturmásya.*

**Beginning.** श्रीरामलिङ्गाय नमः।

दर्भेष्वासीनो दर्भान् धारयमाणः पवित्रपाणिः पत्न्या सह प्राणानायम्य अग्नीनाधास्ये सर्वक्रत्वर्थं येरस्माधिकृतो यांश्च ग्रन्थे प्रयोक्ष्ये॥ ऋत्विजो वृणीते। इत्यादि।

**End.** वरुणप्रघासवद्वाजिनभक्षः। यज्ञकर्म्मः पर्य्यवर्त्तयत्॥

**Colophon.** इत्यैकाह्निकचातुर्मास्यं समाप्तम्।

विषयः। ऐकाह्निकचातुर्मास्यप्रयोगकथनम्।

---

**No 3212.** मङ्गलागौरीव्रतोद्यापनम्। Substance, country-made paper, 10 × 4½ inches. Folia, 8. Lines, 10 on a page. Extent, 190 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Incorrect.

**Mañgalágaurí-vratodyápana.** An extract from the Bhavishya Purána on a fast named after the goddess Mañgalágaurí.

**Beginning.** युधिष्ठिर उवाच।

उद्यापनविधिं ब्रूहि व्रतराजस्य केशव।
यतो विनव्यापनकं व्रतं निष्फलमुच्यते॥

कृष्ण उवाच।

तस्मादुत्तममिदं धर्म्मं स्त्रीभिः कर्त्तव्यमद्भुतम्।
श्रावणे मासि भौमेषु चतुर्षु व्रतमाचरेत्॥ इत्यादि॥

**End.** विसर्ज्जनं मङ्गलाया दीप × × ततः क्रमात्।
पञ्चसंवत्सरेष्वेवं कर्त्तव्यं पतिमिच्छुभिः॥

**Colophon.** इति भविष्योत्तरे मङ्गलागौरीव्रतोद्यापनं सम्पूर्णम् ।

विषयः । भविष्यपुराणोक्तमङ्गलागौरीव्रतोद्यापनस्य विधिकथनम् ।

---

**No. 3213.** व्यूढाहीनद्वादशाहप्रयोगः । Substance, country-made paper, 9 × 4 inches. Folia, 64. Lines, 8 on a page. Extent, 861 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Incorrect.

**Vyúḍháhinadvádaśáha-prayoga.** Rituals of the rite called *Ahínadvádaśha.*

**Beginning.** श्रीमहालक्ष्म्यै नमः ।

अथ व्यूढाहीनस्य द्वादशाहप्रयोग उच्यते । तत्र महत्रे वोच इत्यादिसमिदाधानान्तो विधिः सर्व्वोऽपि भवति ॥ विशेषस्तूच्यते ॥ इत्यादि ।

**End.** इया हारियाहाविय वोषमत् स्तात हाउ वा ।

इत्यतः खण्डितत्वात् परिशेषवाक्यं नास्ति ।

विषयः । अहीनद्वादशाहसवस्य प्रयोगकथनम् ।

---

**No. 3214.** आश्विनशस्त्रम् । Substance, country-made paper, 10 × 4 inches. Folia, 77. Lines, 9 on a page. Extent, 1,600 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Prose. Incorrect.

**A'śvinaśastra.** Rituals of the rite called *Áśvina-śastra.*

**Beginning.** अथाश्विनं शस्त्रं । पर्य्यायशस्त्रानन्तरं होताविसंस्थितसञ्चरेण निष्क्रम्याग्नी ध्रीयेर्ज्या × × × इतीर्जुह्यात् ।

**End.** युवं युञ्जुं समुद्र आरजसः पारइं × तं । यातमच्छा पतत्रिभिर्नासत्यासातये कृतोत्मावाम् ।

**Colophon.** आश्विनशस्त्रं सम्पूर्णम् ।

विषयः । आश्विनशस्त्रप्रयोगकथनम् ।

---

**No. 3215.** छान्दोग्योपनिषत् । Substance, country-made paper, 11 × 5 inches. Folia, 33. Lines, 13 on a page. Extent, 1,241 ślokas. Character, Nágara. Date, Sm. 1743. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Generally correct.

**Chhándogyopanishad**. An Upanishad of the Kauthuma S'ákhá of the Sáma-veda. Several times printed, and translated into English, severally by Rájá Rájendralála Mitra and Dr. Max Muller.

**Beginning**. श्रीमन्महागणपतये नमः । ॐमित्येदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानं तेषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः स एष रसानां रसतमः परमः परार्ध्योऽष्टमोऽयमुद्गीथः कतमा कतमत् कतमत् कतमत् साम कतमः कतम उद्गीथ इति विमृष्टं भवति ।

**End**. तद्धै तद्ब्रह्मा प्रजायत य उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्य्य-कुलाद्वेदमधीत्य यथाविधानं गुरोः कर्म्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्म्मिकान् विदधदात्मनि सर्व्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन् सर्व्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते ॥

**Colophon**. इति कौथुमशाखायां छान्दोग्योपनिषत्समाप्तोऽष्टमः प्रपाठकः ।

विषयः। प्रणवोपासना प्रतीकोपासना अर्च्चिरादिमार्गनिरूपणं शाण्डिल्यविद्यादिकथनञ्च ।

---

No. 3216. छान्दोग्योपनिषद्भाष्यं । Substance, country-made paper, $11 \times 4\frac{1}{4}$ inches. Folia, 115. Lines, 12 on page. Extent, 4,560 S'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Generally correct.

**Chhándogyopanishad-bháshya**. A commentary on the work noticed in the next preceding No. By S'aṅkara A'chárya.

**Beginning**. श्रीगणेशाय नमः । ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्त्तृभ्यः । ॐमित्येतदक्षरमित्याद्यष्टाध्यायी छान्दोग्योपनिषत्तस्याः संक्षेपतोऽर्थजिज्ञासुभ्य ऋजुविवरणमल्पग्रन्थ-मिदमारभ्यते । तत्र सम्बन्धः समस्तं कर्म्माधिगतं प्राणादिदेवताविज्ञानसहितमर्च्चिरादिमार्गेण ब्रह्म-प्रतिपत्तिकारणं केवलञ्च धूमादिमार्गेण चन्द्रलोकप्रतिपत्तिकारणं । स्वभावप्रतिपन्नानाञ्च मार्गद्वय-परिभ्रष्टानां कष्टाधोगतिरुक्ता न चोभयोर्मार्गयोरन्यतरस्मिन्नपि मार्गे आत्यन्तिकी पुरुषार्थसिद्धि-रित्यतः कर्म्मनिरपेक्षमद्वैतात्मविज्ञानं संसारगतित्रयहेतूपमर्द्देन वक्तव्यमित्युपनिषदारभ्यते ।

**End**. पुनरावृत्तेः प्राप्तायाः प्रतिषेधादर्च्चिरादिना मार्गेण कार्य्यब्रह्मलोकमभिसम्पद्य यावद्ब्रह्मलोकस्थितिस्तावत्तत्रैव तिष्ठति प्राक् ततो नावर्त्तत इत्यर्थो द्विरभ्यास उपनिषद्विद्यापरि-समाप्त्यर्थः ।

Colophon. इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीमच्छङ्करभगवतः कृतौ छान्दोग्योपनिषद्विवरणेऽष्टमोऽध्यायः समाप्तः ।

विषयः । छान्दोग्योपनिषद्व्याख्या ।

---

No. 3217. छान्दोग्यभाष्यटीका । Substance, country-made paper, 11 × 4½ inches. Folia, 152. Lines, 12 on a page. Extent, 5,322 ślokas Character, Nágara, Date, ? Place of deposit, Calcutta, Government of India. Appearance. fresh. Prose. Incorrect.

**Chhándogya-bháshya-ṭiká**. A gloss on the work noticed under the next preceding No. By A'nanda Giri.

**Beginning.** नमो जन्मादिसम्बन्धबन्धविध्वंसहेतवे ।
हरये परमानन्दवपुषे परमात्मने ॥
नमस्त्रय्यन्तसन्दोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥

छन्दोगानामुपनिषद्वेदं व्याचिख्यासुर्भगवान् भाष्यकारश्चिकीर्षितग्रन्थपरिसमाप्तिप्रचयपरिपन्थिदुरितनिवर्हणसिद्ध्यर्थमोङ्कारोच्चारणलक्षणं मङ्गलाचरणं सम्पादयन् व्याख्येयस्वरूपं दर्शयति । तमित्येतदिति । व्याख्यानं सप्रयोजनं प्रतिजानीते । तस्या इति । इत्यादि ।

**End.** नमस्त्रय्यन्तसन्दोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानगिरिकृतायां छान्दोग्यभाष्यटीकायामष्टमोऽध्यायः समाप्तः ।

विषयः । शङ्कराचार्य्यकृतच्छान्दोग्योपनिषद्भाष्यस्य व्याख्यानम् ।

---

No. 3218. दर्शपौर्णमासहौत्रप्रयोगः । Substance, country-made paper, 9½ × 4½ inches. Folia, 7. Lines, 11 on a page. Extent, 136 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Darśa-paurṇamása-hotraprayoga**. Rituals of the Full-moon and the New-moon rites. Anonymous.

**Beginning.** अथ दर्शपौर्णमासहौत्रप्रयोगो लिख्यते। नमः प्रवक्त्रे नम उपद्रष्ट्रे नमोऽनुख्यात्रे। क इदमनुवक्ष्यति। स इदमनुवक्ष्यति। इत्यादि।

**End.** . मे यज्ञोपपत्ते नमश्च यत्ते न्यूनं तस्मै ते + यत्तेऽतिरिक्तं तस्मै ते नमः।

**Colophon.** इति दर्शपौर्णमासहौत्रप्रयोगः समाप्तः॥

विषयः। हौत्रदर्शपौर्णमासयोः प्रयोगकथनं।

---

**No. 3219.** श्रीसूक्तविवरणम्। Substance, country-made paper, 10 × 4 inches. Folia, 6. Lines, 9—10 on a page. Extent, 150 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**S'rísúktavivaraṇa.** A gloss on a Rig Veda hymn in praise of Lakshmí. Anonymous. This is different from the work noticed under No. 3017, (*ante* p. 119.) The hymn has been noticed under the name of a "Litany to Fortune," in the Journal of the Asiatic Society of Bengal, by Mr. Fitz-Edward Hall.

**Beginning.** श्रीसूक्तस्य विवरणं लिख्यते। तत्रेयमाद्या ऋक्। हिरण्यवर्णामिति। जातानि विश्वानि भुवनानि धनानि वा। वेद इति। जातवेदा अग्निः। तस्य सम्बोधने हे जातवेदः हे अग्ने गृहे कुले इत्यध्याहारः। मम गृहे धनाधिष्ठात्रीं देवतां आवह। आ समन्तात् प्रापय। किम्भूतां हिरण्यस्येव हाटकस्येव वर्णो यस्याः तां। इत्यादि।

**End.** यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम्॥ अथ स्तुतिभागः।

**Colophon.** समाप्तं श्रीसूक्तं।

विषयः। लक्ष्मीसूक्तस्य व्याख्यानम्।

---

**No. 3220.** सप्तपाकसंस्थाविधिः। Substance, country-made paper, 10 × 4½ inches. Folia, 34. Lines, 12—14—16—17 on a page. Extent, 1,060 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Correct.

**Saptapákasañsthávidhi.** A guide to the sacrifices which require cooking of rice as an important element of the rites. The codex is defective.

**Beginning.** प्रणम्य मातरं गङ्गां भैरवं कुलदेवतां।
महादेवाख्यपितरं श्रीमत्सार्वभिमारदं॥

दिवाकरेण सुधिया सारमुद्धृत्य शाखतः ।
शिष्टानां तन्यते तुष्टे पाकसंस्था हि पञ्च च ॥
तास्तु । श्रवणाकर्म्मसर्पाणां बलिराश्वयुजीविधिः
विधिराग्रयणस्यापि तथा प्रत्यवरोहणं ॥
अष्टकापार्व्वणश्राद्धं सप्त संस्था यथाक्रमम् । इति ।

तत्रादौ श्रवणाकर्म्म । श्रावण्यां पौर्णमास्यां श्रवणाकर्म्मेत्युपक्रम्य—इत्यादि ।

**End.** आमश्राद्धं द्विजः कुर्य्याच्छूद्रः कुर्य्यात् सदैव हि ।
आमश्राद्धं प्रकुर्व्वीत हेमश्राद्ध (?) मथापि वा ॥

इति हेमाद्रौ कौस्तुभे चेति ॥

**Colophon.** (अस्मात् परं खण्डितत्वात् परिशेषवाक्यं नास्ति ।)

विषयः। श्रावण्यां पौर्णमास्यां श्रवणाकर्म्मविधितत्प्रयोगकथनमुखेन स्थालीपाकविधिकथनं। सर्पबलिविधिकथनपूर्व्वकं तत्प्रयोगकथनं। अश्वयुजीविधिकथनपूर्व्वकं तत्प्रयोगकथनं। आग्रयणस्थालीपाकविधिकथनपूर्व्वकं तत्प्रयोगकथनं। प्रत्यवरोहणविधिकथनपूर्व्वकं तत्प्रयोगकथनं। पिण्डपितृयज्ञविधिकीर्त्तनपूर्व्वकं तत्प्रयोगकीर्त्तनं। पिण्डपितृयज्ञव्यतिरिक्तपार्व्वणश्राद्धप्रयोगकथनं। अष्टकाश्राद्धविधितत्प्रयोगकथनं। अन्वष्टक्यश्राद्धप्रयोगकथनं। तत्र काम्यश्राद्धादिप्रयोगकथनं। साङ्कल्पिकश्राद्धविधितत्प्रयोगकथनं। मघात्रयश्राद्धविधिकथनं। एवं गजच्छायश्राद्धयुगादिश्राद्धविधिकथनं। (अतः खण्डितम्।)

---

**No. 3221. त्रिपिण्डीश्राद्धप्रयोगः** | Substance, country-made paper, 8 × 4 inches. Folia, 4. Lines, 9 on a page. Extent, 72 ślokas. Character, Nágara. Date, Sm. 1787. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Correct.

**Tripiṇḍiśráddha-prayoga.** A manual for that kind of śráddha which requires three balls of offering for its accomplishment, also for the śráddhas celebrated at places of pilgrimage. Anonymous.

**Beginning.** श्रीगणेशाय नमः । अथ त्रिपिण्डीश्राद्धप्रयोगः । तत्रादौ कर्त्ता तीर्थे गत्वा स्नात्वा माध्याह्निकञ्च कृत्वा शुचिः सन् पूर्व्वमेव प्रकल्पिते गोमयोपलिप्तस्थले कृतकुशोपघ्नः साक्षान्तो विष्णोर्दशोपचारैः षोडशोपचारैर्वा यथोक्तं पूजनं कुर्य्यात् । ततोऽपसव्यं कृत्वा दक्षिणाभिमुख उपविश्य प्रागग्रेषु कुशेषु उदङ्मुखोपविष्टानां त्रयाणामेव ब्राह्मणानां निमन्त्रणं कुर्य्यात् ॥

**End.** एतानि सम्पाद्य त्रिपिण्डीश्राद्धमनुष्ठेयं ।
वस्त्रमुपानहौ पात्रं तिलपात्रं तथैव च ।

तत्वार्य्येतानि दानानि समभागानि कारयेत् ॥
अन्यथा तु क्वते विप्र सर्व्वं निष्फलतामियात् ।
इति तत्रैवोक्तत्वात् समभागानि कार्य्याणि । शालग्रामस्य वै दानं सर्व्वपापप्रणाशनं ।

**Colophon.** इति सामग्रीसंग्रहः समाप्तः । श्रीविश्वेश्वरार्पणमस्तु ।

**विषयः ।** त्रिपिण्डीश्राद्धस्येतिकर्त्तव्यतानिरूपणं । तत्तु तीर्थे कर्त्तव्यमितिकथनञ्च ।

---

**No. 3222. तृचपद्धतिः ।** Substance, country-made paper, 8 × 4½ inches. Folia, 19. Lines, 9 on a page. Extent, 256 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India Appearance, new. Prose. Correct.

**Trichapaddhati.** Rituals for the worship of the sun after the cure of a disease. Anonymous.

**Beginning.** श्रीगणेशाय नमः । दैवज्ञनिर्दिष्टे समये रोगादिनिमित्तप्राप्तौ वा तान्त्रिकसमुचितं केवलमेव वा यथाऽधिकारं प्रातःकृत्यं शिरःस्नानादिपूर्व्वकं निर्वर्त्य शुक्लाम्बरधरः प्रयतो मायत्र्या त्रिः प्राणानायम्य देशकालौ सङ्कीर्त्य एवं गुणविशेषणविशिष्टायां शुभपुन्यतिथावारभ्य सर्व्वासुतिथीः प्रतिपद्द्वितीयातृतीयेत्यादिक्रमेण पृथक् पृथग्गुणाय्येनावत्सङ्ख्याकासु तिथिषु ममामुकरोगनिरसनद्वारारोग्यसिद्ध्यर्थं श्रीसूर्य्यप्रीत्यर्थं वा उदयमयेतिसूर्य्यदैवत्येन तृचेन प्रत्यक्षमाहत्त्यंशादिसङ्ख्यामुकसङ्ख्याकाभिरावृत्तिभिरंशादिभिर्वाऽमुकसङ्ख्याकब्राह्मणद्वाराऽर्घ्यान्यतमं कारयिष्ये करिष्ये वा ।

**End.** अथ शतं गच्छेत् प्रतिरविवारं द्वादशब्राह्मणान् भोजयेत् तोषयेच्च । तुष्टेषु ब्राह्मणेष्वेव कर्म्मपूर्त्तिर्न चान्यथा । अन्यूनानधिकं कर्त्तुं यथावत् केन शक्यते । न पावको न कर्म्माणि न मन्त्रा न च देवताः । फलन्त्यपि तु भक्तानाममोघा ब्राह्मणाशिषः ॥

**Colophon.** इति तृचपद्धतिः समाप्ता । श्रीकृष्णार्पणमस्तु ।

**विषयः ।** रोगप्रशमनादिकामस्य सूर्य्यपूजानन्तरं तदर्घ्यदानमन्त्रकथनं ।

---

**No. 3223. तीर्थेन्दुशेखरः ।** Substance, country-made paper, 10 × 4 inches. Folia, 28. Lines, 12 on a page. Extent, 829 slokas. Character. Nágara. Date, Sm. 1850. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Correct.

**Tírthenduśekhara.** Descriptions of various sacred pools or places of pilgrimage, and the rites and ceremonies to be observed there. By Nágojí Bhatta, son of Śiva Bhatta.

**Beginning.** श्रीगणेशाय नमः । अथ तीर्थयात्राकार्य्यादिनिर्णयः । कर्म्मणा मनसा वाचा यत्नाद्धर्म्मं समाचरेदित्यादिस्मृतिभिर्द्धर्म्मस्यावश्यकर्त्तव्यतोक्ता । तत्र यज्ञादिधर्म्मस्य बहुधन-साध्यत्वेन तत्रासमर्थान् प्रति तीर्थयात्रा विहिता ॥ मात्स्ये भारते च ।

यो दरिद्रैरपि विधिः शक्यः प्राप्तुं जनेश्वर ।

तुल्यो यज्ञफलैः पुण्यैस्तं निबोध महीमते ॥

ऋषीणां परमं गुह्यमिदं भरतसत्तम ।

तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ॥

**End.** वैकुण्ठं लोहदण्ड-हेमगृध्रकूट-गृध्रवट--गृध्रगुहा--ऋणमोच-पापमोचशिला गणेशमुण्डपृष्ठा-रविन्दाद्रि-अरविन्दवन-क्रौञ्चपादादीनि । इति गयाप्रकरणं ।

**Colophon.** इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृततीर्थेन्दुशेखरः समाप्तः ॥

विषयः । गङ्गादितीर्थमाहात्म्यकीर्त्तनं तत्र तत्र कर्त्तव्यकर्म्मनिरूपणञ्च ।

---

**No. 3224.** तात्पर्य्यचन्द्रिका । Substance, country-made paper, 13 × 5 inches. Folia, 203. Lines, 10—13 on a page. Extent, 6,216 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Generally correct.

**Tátparya-chandriká.** Notes on A'nanda Giri's gloss on the commentary of S'añkara on the Vedánta Sútras. By Vyása Yati, disciple of Brahmaṇya Tírtha. The codex is incomplete containing only the first half of the work.

**Beginning.** अस्पृष्टदोषगन्धाय कल्याणगुणसिन्धवे ।

नमो नमो भक्तमुक्तिदायिने शेषशायिने ॥

शमयन् भवसन्तापं रमयन् साधुचातकान् ।

कृष्णमेघः कृपावृष्टिवृष्ट्या पुष्णातु मामपि ॥

श्रीमदानन्दतीर्थार्य्यपादपङ्कजरेणवः ।

पवित्रयन्तु मां नित्यं पापपाटनपण्डिताः ॥

शारदावासवदनशारदाम्बुरुहान् गुरुः ।

पद्मनाभमुनीन् वन्दे सर्वशास्त्रविशारदान् ॥

मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणाः ।

जयतीर्थाख्यतरणिभासतां नो हृदम्बरे ॥

— — — — — — — — ।

श्रीमद्भाष्यस्य टीका या जयतीर्थाख्यनिर्म्मिता ॥

गम्भीरा निर्म्मला चेमां व्याकरिष्ये यथामति ॥
सूत्रभाष्येऽणुभाष्ये च सन्न्यायविवृतौ तथा ।
टीकासु च यदस्पष्टं तच्च स्पष्टीकरिष्यते ॥
प्रतिसूत्रं प्रकाश्येते घटनाघटने मया ।
स्वीयान्यपक्षयोः सम्यग्विदांकुर्व्वन्तु सूरयः ॥

ग्रन्थादौ मङ्गलमाचरति श्रुद्धेति । इदञ्च पद्यं भाष्यस्थीयश्लोकविवरणरूपत्वात् तदेव—इत्यादि ।

**End.** श्रीवशब्दमात्रेण हिरण्यगर्भस्य प्राप्तेः परोक्तं पूर्वमेव दूषितम् ॥ ॐ ।

**Colophon.** इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना विरचितायां तात्पर्य्यचन्द्रिकायां द्वितीयाध्यायस्य चतुर्थः पादः ॥

**विषयः ।** जयतीर्थविरचितस्य ब्रह्मसूत्रीयानन्दतीर्थकृतभाष्यव्याख्यानस्य द्वितीयाध्यायस्य व्याख्यानम् ॥

---

**No. 3325. तिथिदीधितिकौस्तुभः ।** Substance, country-made paper, 10 × 4 inches. Folia, 66. Lines, 11 on a page. Extent, 1,452 ślokas. Character, Nágara. Date, Sk. 1731. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Correct.

**Tithídídhiti-kaustubha.** A civil and religious calendar, giving descriptions of the duties appropriate every lunar day in the year, and the incidents and astral conjunctions that might take place on each date. By Anantadeva, a Southern Bráhman, son of Ápadeva, under the auspices of a chief named Rájá Báhádurchandra of the Lunar Dynasty.

**Beginning.** श्रीगणेशाय नमः । श्रीविश्वेश्वराय नमः । दध्यापूर्णसुमङ्गलौचकलशं धृत्वा व्रजन्ती व्रजं काचिद्गोपकुमारिका त्वनुगतिर्युक्तानि संमुख्यतौ दृष्ट्वा श्रीसुरलीधरः स्मितयुतः भ्रूयुग्मभङ्ग्या यया तस्यै सूचितवान् गतिं समुचितां पायात्तया मे मतिं । १ । यः पूर्व्वजन्मार्ज्जितपुण्यभारैः संलब्धया दिव्यधियाऽवनीशान् वंशेऽकरोच्छीतकरोद्भवंशे स ज्ञानचन्द्रः किल चाविरासीत् । २ । कल्याणकर्त्ता सकलप्रजानां कल्याणचन्द्रो नृपतिर्बभूव । कदाऽपि दृष्ट्या न यदीयराज्ये जना अमीषां क नु दुष्टवार्त्ता । ३ । प्रतापेन यन्नो यमः स्वच्छकीर्त्या समाच्छादयन् यो जनान् चन्द्रतुल्यः । सदा सर्व्वविद्गुणज्ञो वदान्योऽभवच्चन्द्रवंशे ततो रुद्रचन्द्रः । ४ । श्रीरुद्रस्य षडाननः प्रमथराड्गौर्या वा बुधः श्रीमल्लक्ष्मणचन्द्रनामकसुतोऽभूद्रुद्रचन्द्रस्य यः । तेनानेकहिमाचलस्थनृपतीन् दुष्टान् विजित्य स्वके राज्ये इजिरकारि रमणाधारि विद्वद्वृद्धि । ५ । तस्मिन् मल्लयचन्द्रोऽभूद्भूपो नयो भूटो (योऽभूद्भटो) भुवि काशीस्थविद्वद्भ्यो धनराशीनदात् सदा । ६ । तस्मिन् कुलेऽजनि ततः किल नीलचन्द्रो यत्तीर्थसज्जननिषेवणभूरिपुण्यैः । तेजो दधार परमं पुरुषोत्तमाख्यं

धत्ते यथेन्द्रदिशि नीलगिरिः परं तत् । ७ । श्रीराजबाहादुरचन्द्रभूपस्ततोऽभूत्वान्द्रान्वयस्य भुवि भूरिकरोपशोभः । सर्व्वावनिस्थविदुषामसमं प्रकुर्व्वन् योऽस्मिन् कुलीचपि (?) ररच समस्तशास्त्रं । ८ । गन्तुं नार्हति यत्र क्षणमपि मनुजस्तत्र देशे स्थितान् यो दूरीकृत्याखिलारीन् निजभुजविलसत्खड्गकोदण्डबाणैः । भद्रन्यग्रोधभीमेश्वरमुखततसद्देवमातीर्थशक्तिः स्पष्टीकर्त्तुं पुराणं परनगरगतं स्कान्दखण्डं जहार । ९ । नैवातिदेशगतिरस्ति यदीयमन्ते स्यादन्यथात्वमथ तत्र कथं परेषां । ऊहे न बाधविषयां तु मदीयवार्त्तां मीमांसकाः श्रुतिगतापि मनोऽस्यचन्ते (?) । १० । योऽधीद्देदशिखोद्भवापरपदप्राप्तिं प्रसिद्धा नृणां भीत्वा सा वत पद्मकोशनिचयं मध्ये चरेत् कस्यचित् (?) । मन्ये धन्यतमं त्वमुष्य नृपतेः खड्गं विनिःसारितः कोशाद्यः परदृक्पथेऽनुगतिनो धत्ते परां सम्पदे (?) । ११ । स्वविषयगतसर्व्वाकाङ्क्षितार्थप्रकाशं न भजति परवाक्याधीनतां स्वार्थसिद्धौ । सततमपि ह + यो न्यायकार्य्ये समर्थः सकलभुवि + वादो ह्रीयते तोय एकः । १२ । सर्व्वासां परिपूरिणः क्षेमयशःसौधप्रवाहेण यो न्यक्कारं प्रणतोऽतिसौधवपुषो नामार्थवत्तानयत् (?) । कस्तस्मादितरः कलौ किल महासेव्यः प्रभुर्यो भवेत् क्रीडायामपि दानमानविनयैः सन्तोषदातुः सतां । १३ । येनार्थिता द्विजवरा शिविराणि यान्तो यान्ति स्फुटं पथि नृपा इति भान्ति लोके । नित्यं भटैः सतुरगैः परिपाल्यमाना धर्म्मार्थवे(?)तदितरं न कलौ विलोके । १४ । आसीद्गोदावरीतीरे वेदवेदिसमन्वितः । श्रीकृष्णभक्तिमानेक + + नाथाभिधो द्विजः । १५ । तत् सुतस्तद्गुणैर्युक्तः सर्व्वशास्त्रार्थतत्त्ववित् । आपदेवोऽभवद्देवात् प्रापयः (पावयन्) सकुलान्मनून् । १६ । मीमांसानयकोविदो मधुरिपोः सेवासु नित्योद्यतो विद्यादानविभाविनोत्तमयशा आसीत्तदीयात्मजः । यस्यानन्तगुणैरनन्त इव सन्नामार्थवत्तागतं येनावादि च वादिनां श्रुतिशिरःसिद्धान्ततत्त्वं मुदे । १७ । न्यायप्रकाशतर्कानिव धीविद्यामृतप्रदः सततं । मीमांसाद्वयनयवितने यस्तस्यापदेवादभूत् । १८ । तदात्मजं वैदिकशास्त्रविज्ञं सन्तोषकृत् (सन्तोषकं) प्राकृरनन्तदेवं । राजाज्ञरात्री वचसा विधेयं निबन्धसारोद्धरणत्वयेति (?) । १९ । अनन्तदेवेन मुदाऽस्य राज्ञो मुदे चरैः पूर्व्वनिबन्धरूपं क्षीराम्बुधिं बुद्धिगुणैर्मथित्वा प्रकाश्यतेऽयं स्मृतिकौस्तुभः कौ । २० । काश्यां श्रीविश्वनाथं हिमगिरितनयां धुण्ढिराजञ्च नत्वा नत्वा सम्प्रार्थयामो भवतु मणिरयं कौस्तुभाख्यः शुभाय । राज्ञस्तत्पर्व्वतस्याखिलमनुजमुदं तन्वते राजनाम्नोऽस्माकं स्याच्च काशीपुरसरितोर्वासनिर्वासकारी । २१ । चन्द्रदीधितयः पञ्च कौस्तुभस्यास्य यद्यपि चान्द्रस्य पूर्व्ववाच्यत्वात् + येयं तिथिदीधितिः । २२ । तत्रादौ परिभाषोक्ता वेद्य (?) वेदादिगोचरा । ततश्च निर्णयाः प्रोक्ता एकभक्तादिकर्म्मणां ।

**End.** इति तिथ्यादिषु नानाविधिनिषेधाः । येनार्जितानि युधि भूमिपतीन् विजित्य दुर्गाणि दुर्गचतराणि (दुर्गमतराणि) निजैः कटाक्षैः । श्रीराजबाहादुरसंज्ञनृपस्य तस्य वाचा चरैरिव गिराऽवनिदेवतुष्टे । १ । योऽनन्तदेवकृतमन्थननिबन्धः क्षीराब्धिजोऽथ कमलापतिना धृतो यः । नित्यं निजे हृदि सतां प्रमुदे सुतस्य तिथ्याख्यदीधितिरियं स्मृतिकौस्तुभस्य । २ ।

**Colophon** इति तिथिदीधितिकौस्तुभः समाप्तिमगमत् ।

विषयः । एकभक्तादिनिर्णयः । तिथिनिर्णयः । वैधकर्मसु तिथिव्यवस्था । तिथिविशेषेषु निषिद्धकथनं । पर्व्वनिरूपणं । पिण्डपितृयज्ञनिर्णयः । सामान्यविहितिकालनिर्णयः । श्राग्रयणेष्टि-कालनिर्णयः । चातुर्मास्यकालनिरूपणं । अपरेष्टिकालकथनं । आधानसोमयागादिकालनिरूपणञ्च ।

---

**No. 3226.** त्रिविक्रमी । Substance, country-made paper, 11 × 5½ inches. Folia, 2. Lines, 13 on a page. Extent, 117 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Correct.

**Trivikramí.** Rituals for the consecration of images transferred from one temple or place to another. Anonymous.

**Beginning.** श्रीगणेशाय नमः ।

अथातः सम्प्रवक्ष्यामि मूर्त्तीनां चरणं शुभं ।
विधानस्थापितानाञ्च ग्रामाद् ग्रामान्तरं प्रति ॥
विधानस्थापिता मूर्त्तिः प्रजाचीना प्रदृश्यते ।
प्रासादरचिता सा च आतपे विजने तथा ॥
उपघातैरपहता ग्रभिः काकैस्तथान्तजैः ।
चिरकालस्थिता चैवं पुनः प्रासादजन्मरः ॥
ग्रामस्वामी तथा चान्ये न कश्चिच्चेत्तदा पुनः ।
स्वेच्छोपद्रवसंयुक्ते स्थाने चातीवदूषिते ॥
या हि एवंविधा मूर्त्तिर्नेतुं ग्रामान्तरं प्रति ।
इच्छया योद्यमः कश्चिद्भक्तो भक्तिसमन्वितः ॥

**End.** एवं स्थाप्य यथान्यायं भित्तिस्थाश्च पञ्चकाः ।
ब्रह्मा शङ्करविष्णू च आदित्यश्च कुमारकः ॥
कुमार्य्यैयस्तु (कुमार्य्येय उ) मा चैव अर्च्चयञ्च (?) बुधस्तथा ।
तेषान्तु स्थापनं कुर्य्याद्विष्णुस्थाने विशेषतः ॥

इति विश्वकर्म्ममतं ।

**Colophon.** इति त्रिविक्रमी समाप्ता ।

विषयः । प्रासादादिरचितस्थापितदेवमूर्त्तीनां अन्यत्र प्रासादादिषु संस्थापनविधिः स्थाप-नानुष्ठानकथनञ्च ।

---

**No. 3227.** **उलूककपोतशान्तिप्रयोगः।** Substance, country-made paper, $9\frac{1}{2} \times 4\frac{1}{4}$ inches. Folia, 2. Lines, 8 on a page. Extent, 23 ślokas. Character, Nágara. Date, Sk. 1733. Place of deposit, Calcutta, Government of India. Apearance, old. Prose and verse. Correct.

**Ulukakapotaśánti-prayoga.** Expiations as described by Garga Áchâryya for averting evils attendant on owls and pigeons coming into a dwelling house. Anonymous.

**Beginning.** श्रीगणेशाय नमः। अथ गर्गोक्त उलूककपोतशान्तिप्रयोगः। मम गृहोपरि आसमन्तात् उलूकवाससूचितसकलारिष्टशान्तिद्वारा अथवा मम गृहमध्ये कपोतप्रवेशसूचित सकलारिष्टनिरासद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां गर्गोक्तां उलूकशान्तिं कपोतशान्तिञ्च करिष्ये।

**End.** शान्त्यङ्गत्वेन यथाशक्ति ब्राह्मणभोजनं गोदानञ्च कुर्य्यात्।

**Colophon.** इति गर्गोक्त उलूककपोतयोः शान्तिप्रयोगः।

**विषयः।** गृहपर्य्युलूकवाससूचितगृहाभ्यन्तरकपोतप्रवेशसूचितदोषशान्तिकथनं।

---

**No. 3228.** **काकमैथुनदर्शनशान्तिः।** Substance, country-made paper, $9\frac{1}{2} \times 4\frac{1}{4}$ inches. Folia, 2. Lines, 8 on a page. Extent, 23 ślokas. Character, Nágara, Date, Sk. 1733. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Generally correct.

**Kákamaithuna-darsanaśánti.** On the necessity of expiatory rites by a person who happens to see the conjugation of crows. An extract from the Adbhutaságara.

**Beginning.** अथ काकमैथुनदर्शनशान्तिः। मदनरत्ने नारदसंहितायां।
दिवा वा यदि वा रात्रौ यः पश्येत् काकमैथुनं।
स नरो मृत्युमाप्नोति यदि वा स्थाननाशनं॥

**End.** सर्व्वैः शान्तिं पाठयित्वा गृह्योयाद्दाशिषस्ततः।
एवं कृत्वा भवेच्छान्तिः काकारिष्टविनाशिनी॥

**Colophon.** इति अद्भुतसागरोक्ता काकमैथुनदर्शनशान्तिः।

**विषयः।** काकमैथुनदर्शने शान्तिविधानं।

---

**No. 3229.** **काकमैथुनदर्शनशान्तिप्रयोगः।** Substance, country-made paper, $9\frac{1}{2} \times 4\frac{1}{4}$ inches. Folia, 3. Lines, 8 on a page. Extent, 43 ślokas. Character, Nágara. Date, Sk. 1733. Place of deposit, Calcutta, Government of India. Appearace, old. Prose and verse. Generally correct.

**Kákamaithuna-darsana-śánti-prayoga.** A ritual for the expiatory rite ordained in the work described under the next preceding number.

**Beginning.** तीर्थादि सङ्कीर्त्य एवंगुणेति अमुकदेवशर्म्मणो मम काकमैथुनदर्शनजनित-सकलारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं दीर्घायुरारोग्यैश्वर्याभिवृद्ध्यर्थं शान्त्यर्थं पुष्ट्यर्थं तुष्ट्यर्थं काकमैथुनदर्शनशान्तिं करिष्ये ॥

**End.** ततो ब्राह्मणान् यथाशक्ति भोजयित्वा सुखं विहरेदिति ॥

**Colophon.** इति काकमैथुनदर्शनशान्तिप्रयोगः ।

**विषयः ।** काकमैथुनदर्शन शान्तिकथनं ।

---

**No. 3230.** गृहाभ्यन्तरकाकप्रवेशशान्तिः । Substance, country-made paper, $9\frac{1}{2} \times 4\frac{1}{4}$ inches. Folium, 1. Lines, 16. Extent, 12 ślokas. Character, Nágara. Date, Sk. 1733. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Correct.

**Grihábhyántara-Kákapraveśa-śánti.** Expiation of the evils resulting from a crow entering a house or temple. The work professes to be an extract from the Mánava Saṅhitá, a work hitherto undiscovered. The reference is obviously not intended for the laws of Manu.

**Beginning.** मानवसंहितायां ।

अथातः सम्प्रवक्ष्यामि वायसः प्रविशेद्गृहं ।
प्रवेशाद्दूरतो गच्छेन्मासमेकं विवर्ज्जयेत् ॥
द्वारान्तरे ततो गच्छेत् षण्मासांस्तु विवर्जयेत् ।
देवालयं विशेच्चैव शीघ्रमृत्युकरं भवेत् ॥

**End.** समाप्ते अभिषिक्तस्तु गोयुग्मं दक्षिणां दिशेत् ।
आज्यावलोकनं कृत्वा मन्त्रशान्तिं पठेदिति ॥

**Colophon.** इति मानवसंहितायां वायसशान्तिः ।

**विषयः ।** काकमैथुनदर्शने शान्तिप्रयोगः ।

---

**No. 3231.** त्रिपस्युद्धोत्रमन्त्रभागः । Substance, country-made paper, $12 \times 4$ inches. Folia, 26. Lines, 10 on a page. Extent, 650 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Generally correct.

**Tripaśu-hotra, mantra-bhága.** A collection of tha Mantras required in the celebration of the Tripas'u-hotra, a rite in which three animals are enjoined to be sacrificed. Anonymous.

**Beginning.** श्रीगणेशाय नमः। ऐन्द्रपशौ ।१।१। प्रयाजानां ।१। समिद्ध इन्द्र उषसाम-नीके पुरोरुचा पूर्व्वकृद्वा वृधानः। त्रिभिर्द्देवैस्त्रिंशता वज्रबाहुर्जघान वृत्रं विदुरो ववाराः ।१। ।

**End.** मापोमोषधीर्हिंसिष्ट भुवस्त्वयं द्विभक्तं वभ्यटच्छतु धाम्नो धाम्नो राजंस्ततो वरुण नो मुञ्च यमापो अघ्न्या इति वरुणेति शपाम इततो वरुण नामुञ्च । सुमित्रिया दुर्मित्रिया।

**Colophon.** इति त्रिपशोर्होत्रस्य मन्त्रभागः।

विषयः। त्रिपशुहोत्राख्ययागस्य मन्त्रकीर्त्तनं।

---

**No. 3232.** उडुदायप्रदीपः उद्योतनामकटीकासहितः। Substance, country-made paper, $10\frac{1}{4} \times 4\frac{1}{2}$ inches. Folia, 18. Lines, 12 on a page. Extent, 702 Slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse.—Generally correct.

**Uḍudáya-pradípa,** with a gloss named **Udyota**. On the different conjunctions possible in the course of the progress of planets round the zodiacal circle and their effect on human destiny. By Bhairavadatta, son of Harirâma S'armá. The gloss is anonymous.

श्रीगणेशाय नमः।

**Beginning.** मूलस्य—सिद्धान्तमौपनिषदग्राह्यानं परमेष्ठिनः।
शोणाधरं महः किञ्चिद्वीणाधरमुपास्महे ॥१॥
वयम्पाराशरीं होरामनुसृत्य यथामति।
उडुदायप्रदीपाख्यं कुर्म्मो दैवविदाम्मुदे ॥२॥
फलानि नक्षत्रदशाप्रकारेण विदृणमहे।
दशा विंशोत्तरी चात्र ग्राह्या नाष्टोत्तरी मता ॥३॥
बुधैर्भावादयः सर्व्वे ज्ञेयाः सामान्यशास्त्रतः।
एतच्छास्त्रानुसारेण संज्ञां ब्रूमो विशेषतः ॥४॥

टीकायाः।

श्रीगणेशाय नमः। श्रीलक्ष्मीरमणं गणेशमभयं श्रीमद्गुरुं शारदां सूर्य्यादिग्रहमण्डलं सविनयं नत्वा विदाम्प्रीतये। ज्योतिःशास्त्रकलाकुतूहलरतिस्तत्प्रबन्धात्मजं कौतुकोद्योतमिमं तनोमि विशदं दायप्रदीपेऽमलं ।१। परमसुखमुदारं ज्ञानसच्छास्त्रसारं विजितभवविकारं व्यक्तमुक्तिप्रकारं।

श्रुतिनयनविचारं भूरिशिष्यप्रचारं गुणमणिमयहारं तत्रपारं स्मरामः ।१। सार्वं मन्दमतिः स शास्त्रधिषणासाध्यं सतां सम्मतं ज्योतिःशास्त्रविविक्तदिष्टजफलं क्वासौ तदर्थोद्यमः। तानेव स्मृतिगोचरान् गुरुकृपापीयूषधारान् × × मन्ये चाद्‌कुबोधवह्निवकृतज्वालौकनिर्व्वापकान् ।२। वार्त्तिकः। अथ तावत् पौर्व्वदैहिकधर्म्माधर्म्माधीनजन्मनो जीवजातस्यानागतधर्म्माधर्म्मफलविवक्षया जातकशास्त्राणि परमर्षयः प्रणिन्युः ॥

End. मूलस्य —

धर्म्मकर्म्माधिनेतारावन्योन्याश्रयसंस्थितौ ।

राजयोगाविति प्रोक्तं विख्यातो विजयी भवेत् ॥४१॥

टीकायाः ।

अभूद्भैरवसूरीनां लिपकहरणीधरः ।

महाभारतनिर्म्माणे व्यासस्येव गणेश्वरः ॥

इति उडुदायप्रदीपेऽन्तर्दशाध्यायः सम्पूर्णः ।

Colophon. इति श्रीपण्डितहरिरामशर्म्मसूनुश्रीभैरवदत्तदैवज्ञविरचित उडुदायप्रदीपे। चतेऽन्तर्दशाध्यायश्चतुर्थः। समाप्तश्चायं ग्रन्थः।

विषयः। राशिचक्रे ग्रहाणां स्थितिविशेषेण नानाविधयोगकथनं ।

---

No. 3233. उग्ररथशान्तिप्रयोगः। Substance, country-made paper 11 × 5½ inches. Folia, 3. Lines, 11 on a page. Extent, 81 slokas Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Generally correct.

Ugrarathaśánti-prayoga. Description and details, according to the rules of S'aunaka, of a rite called Ugratha-s'ánti. Its object is to ensure long life, and has to be performed after the completion of the sixtieth year of one's age. Anonymous.

Beginning. अथ षष्टिपूर्त्त्युग्ररथशान्तिः। शौनकः।

अथातः संप्रवक्ष्यामि शान्तिश्चोग्ररथस्य च ।

ब्राह्मणक्षत्रियविशां शूद्राणाञ्चैव योषितां ॥

यदि स्यात् षष्टिवर्षन्तु तदा मृत्युर्भवेद्ध्रुवं ।

दुःस्वप्नानि च जायन्ते मातापित्रोर्मृतिस्तथा ॥

भार्य्यापुत्रवियोगश्च रोगश्चापि (?) भयं तथा ॥ इत्यादि ।

End. तस्य + शतवर्षाणां भवेदिति विनिश्चितं ।

सर्व्वारिष्टविनाशश्च सर्व्वसम्पद्भविष्यति ॥

**Colophon.** इति शौनकोक्तः उग्ररथशान्तिप्रयोगः समाप्तः ।

विषयः । समनौते षष्टिवर्षमिते वयसि दीर्घायुष्ट्वादिकामेन शौनकोक्तविधिना उग्ररथ-शान्तिर्विधेयेति विधानकथनपूर्व्वकं तत्प्रयोगकथनम् ।

---

**No. 3234. उग्ररथशान्तिकल्पप्रयोगः ।** Substance, country-made paper, 12 × 4 inches. Folia, 26. Lines, 10 on a page. Extent, 650 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old Prose and verse. Generally correct.

**Ugrarathaśánti-kalpa-prayoga.** The same subject as of the next preceding work, but treated according to the ordinances of the Tantras. An extract from the Saivágama.

**Beginning.** कैलासशिखरे रम्ये सर्वदेवनमस्कृतं ।
प्रणम्य शङ्करं देवं गुहः पप्रच्छ सादरं ॥
स्वामिन्नुग्ररथो नाम सर्वप्राणिक्षयङ्करः ।
पुत्रपौत्रक्षयकरः धनधान्यविनाशनः ॥
राज्यभ्रंशकरो राज्ञां क एष परिकीर्त्यते ॥ इत्यादि ।

**End.** यत्र तामाचरेदुग्ररथशान्तिं षड़ानन ।
शत्रवोऽस्य विनश्यन्ति सर्वदा सुखमेधते ॥

**Colophon.** इति श्रीशैवागमे शिवषण्मुखसंवादे उग्ररथशान्तिकल्पप्रयोगः समाप्तः ॥

विषयः । षष्टितमवर्षवयस्कस्य पुरुषस्य कल्याणलाभाय शैवागमोक्तविधिना उग्ररथशान्ति-र्विधेयेति तद्विधानकथनं तत्प्रयोगकथनञ्च ।

---

**No. 3235. उपनयनकारिका ।** Substance, country-made paper, 7 × 4 inches. Folia, 2. Lines, 9 on a page. Extent, 29 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Generally correct.

**Upanayana-káriká.** Memorial verses on the sacrament of Upanayana, or the investiture of the Brahminical cord. The codex is defective.

**Beginning.** अथोपनयनकारिका ।
आद्यसंस्कारपर्य्यन्तमुपलेपादि पूर्व्ववत् ।
परिधानं भवेदस्य वाससैवाहतेन तु ॥

भवेत्प्रावरणं वासः कृष्णाजिनमथापि वा ।

एवम्भूतं कुमारं तं कुर्य्याद्यज्ञोपवीतिकं ॥ इत्यादि ।

**End.** अहःशेषं ततस्तिष्ठेत् सायं सन्ध्यामुपास्य च ।

पूर्णपात्रनिधानान्तमुपलेपादि पूर्व्ववत् ॥ इति ।

विषयः । उपनयनेतिकर्त्तव्यताविधानम् ।

---

**No. 3236.** उपलेखाभाष्यम् । Substance, country-made paper, 10 × 4½ inches. Folia, 19. Lines, 8 on a page. Extent, 294 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, decayed. Prose. Generally correct.

**Upalekhá-bháshya.** A commentary on the Upalekhá-sutra of S'aunaka on Sanskrit pronunciation, accents, and syllabic quantities. Anonymous. The work noticed under No. 3207, p. 282, has been described as that of S'aunaka, but it is really a compilation from the work of that author.

**Beginning.** प्रथमतो द्वे पचे न स्तः । — — — ग द ध न ब भ म य र ल व चेति । घोषसंज्ञायाः प्रयोजनं तत्परितोषार्थं । इत्यादि ।

**End.** नमः शौनकाय नमः शौनकायेति आदरार्थः । परितोषार्थी द्विरभ्यासः ॥

इत्युपलेखाभाष्येऽष्टमो वर्गः । संवत् १७०१ ।

विषयः । उपलेखासूत्रस्य व्याख्यानम् ।

---

**No. 3237.** उदकशान्तिः । Substance, country-made paper, 9 × 4 inches. Folia, 7. Lines, 8 on a page. Extent, 87 slokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Generally correct.

**Udaka-śánti.** Baudháyana's rules for the performance of the Udakas'ánti rite.

**Beginning.** अथ वै भवति श्रद्धा वा आपः श्रद्धामेवारभ्येति । यज्ञो वा आपो यज्ञमेवारभ्येति । इत्यादि ।

**End.** भृगून् सर्पांश्चाङ्गिरसोऽथ सर्पान् घृतं कृत्वा आयुष्यामभयामम + + ॥

**Colophon.** इत्युदकशान्तिः समाप्ता ।

विषयः । बौधायनीयोदकशान्तिविधिकथनम् ।

---

**No. 3238.** **उत्सर्ज्जनोपाकर्म्मप्रयोगः ।** Substance, country-made paper, 8×4 inches. Folia, 44. Lines, 16 on a page. Extent, 5,739 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Correct.

**Utsarjjanopákarma-prayoga.** Rituals for the consecration and slaughter of animals according to the ordinances of Ás'valáyana. By Vápu Bhaṭṭa, son of Mahádeva.

**Beginning.** आश्वलायनमाचार्य्यं नत्वा च विमलेश्वरं ।
गृह्यसूत्रञ्च तद्वृत्तिं कारिकाः शौनकस्मृतिं ॥१॥
प्रयोगपारिजातादीन् ग्रन्थानालोक्य यत्नतः ।
प्रयोगः क्रियतेऽध्यायोपाकृत्युत्सर्गकर्म्मणोः ॥
तत्रादौ परिभाषार्थः किञ्चित् संगृह्यते स्फुटं ।
— — — — — — — — ॥

अथ यद्यपि आचार्य्येण ऋषिपूजादि नोक्तं । तथाप्यावश्यकस्य शास्त्रान्तरस्य शिष्टैरङ्गीकृतत्वात् प्रचुराचाराच्च—इत्यादि ।

**End.** अत आरभ्य षण्मासान् षडङ्गानि त्वधीयते ।
शुक्ले वेदमधीयीत कृष्णेऽङ्गानीति केचन ॥
इत्यलं पल्लवितेन ।
ऋष्यग्निमुनिभूशाके युवाब्दे श्रावणे सिते ।
केलकारोपनाम्नः श्रीमहादेवस्य सूनुना ॥
वापूभट्टेन विदुषा प्रयोगोऽयं विनिर्म्मितः ।
अनेन भगवानीशः प्रीयतां वेदपूरुषः ॥

**Colophon.** इति श्रीमच्चित्तपावनकेलकारोपाभिधमहादेवात्मजवापूभट्टविरचित उत्सर्ज्जनोपाकर्म्मप्रयोगः समाप्तः ॥

**विषयः ।** आश्वलायनोक्तविधिना उत्सर्ज्जनोपाकर्म्मणोः प्रयोगकथनम् ।

---

**No. 3239.** **उत्तरशान्तिः ।** Substance, country-made paper, 8½ × 4 inches. Folium, 1. Lines, 18. Extent, 24 ślokas. Character, Nágara. Date, ? Place of deposit. Calcutta, Government of India. Appearance, old. Prose and verse. Correct.

**Uttara-śánti.** A collection of the benedictory mantras occurring in the Vedas.

**Beginning.** अथ उग्ररथशान्तिप्रारम्भः ।

ॐ शन्नो मित्रः शं वरुणः शन्नो भवत्वर्य्यमा ।

शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥ इत्यादि ।

**End.** ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।

कण्ठं भित्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥

ॐ अथ । ॐ अथ । ॐ अथ ॥

विषयः । उग्ररथशान्तिविधिकथनम् ।

---

**No. 3240.** व्रतार्कः । Substance, country-made paper, 9¼ × 5 inches. Folia, 476. Lines 11-12 on a page. Extent, 11,424 ślokas. Character, Nágara. Date, Sk. 1758. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Vratárka.** An elaborate treatise on Vratas or optional fasts and penances. By S'aṅkara Bhaṭṭa.

**Beginning.** दिवाकरपदद्वन्द्वं फलद्वन्द्वप्रदायकं ।

त्रैलोक्यतमसो नाशकर्त्तृ तत् प्रणमाम्यहं ॥

यो जाग्र + तिकरमन्दराद्रिमन्थनै-

र्मन्थप्रथिततराम्बकारसिन्धुं । (?)

लोकेभ्यो वितरति सत्प्रकाशरत्नं

तं वन्दे वनजवनीविनोदबन्धुं (?) ॥

नामं नामं प्रणामोद्गुरभरतवलत्प्रोचनालिङ्गनेन ।

धाम्यद्गन्धाम्बुभृमिभ्रमजननपरौ जानकीवल्लभाङ्घ्री ॥

मातश्रीनीलकण्ठामलपदकृपया लब्धशास्त्रार्थतत्त्वः ।

कुर्व्वे श्रीशङ्करोऽहं सहृदयहृदयाम्भोजतुष्ट्यै व्रतार्कं ॥

अत्र च स्वकर्त्तव्यविषयो नियतः सङ्कल्पो व्रतमिति श्रीदत्तः । तत्र अग्निहोत्रसन्ध्यावन्दनादि विषये सङ्कल्पेऽतिप्रसक्तः—इत्यादि ।

**End.** य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः ।

अश्वमेधफलं तस्य सहस्रस्य भवेद्ध्रुवं ॥

**Colophon.** इति भविष्योत्तरपुराणे दशरथललिताव्रतं । इति व्रतार्कः समाप्तः ।

शाके १७५८ ।

विषयः । व्रतलक्षणकथनपूर्व्वकं तिथिनक्षत्रवारसंक्रान्त्यादिविहितानां व्रतानां विधानकथनं प्रयोगकथनञ्च ।

# CLASSIFICATION.

I.—VEDA S'ÁSTRA.
- *a.* Sañhitá (hymns).
- *b.* Bráhmaṇa (ceremonials).
- *c.* A'raṇyaka (do. appropriate for forest life).
- *d.* Upanishad (theology).
- *e.* Vaidika (Sútra, rituals, phonetics, &c.).

II.—AITIHA'SIKA S'ÁSTRA.
- *a.* Itihása (history).
- *b.* Puráṇa (ancient legends).

III.—KÁVYA S'ÁSTRA.
- *a.* Kávya (poems).
- *b.* Náṭaka (drama).
- *c.* Champú (poetico-prose compositions).
- *d.* Kosha (miscellaneous poetical collections).
- *e.* Upákshyáṇa (tales and romances).

IV.—ABHIDHÁNA S'A'STRA (lexicography).

V.—VYA'KARAṆA S'A'STRA (grammar).

VI.—CHHANDAH S'A'STRA (versification).

VII.—ALAÑKA'RA S'ÁSTRA (rhetoric).

VIII.—JYOTISH S'ÁSTRA (astronomy and astrology).

IX.—SMṚITI S'ÁSTRA (law, civil and canonical).

X.—SAÑGITA S'ÁSTRA (music).

XI.—S'ILPA S'ÁSTRA (arts).

XII.—KÁMA S'A'STRA (*ars erotica*).

XIII.—DARS'ANA S'A'STRA (philosophy).
- *a.* Dárs'anika (general philosophy).
- *b.* Sáñkhya (hylotheistic).
- *c.* YOGA (theocratic).
- *d.* Nyáya (dialectic).
- *e.* Vais'eshika (physical).
- *f.* Mímáñsá (ritualistic),
- *g.* Vedánta (monotheistic).
- *h.* Aparadárs'anika (minor systems of philosophy).

XIV.—BHAKTI S'A'STRA (faith).

XV.—TANTRA S'A'STRA (mysticism).

XVI.—VAIDYAKA S'A'STRA (medicine).

XVII.—JAINA S'A'STRA (Jaina religion).

XVIII.—BAUDDHA S'A'STRA (Buddhist religion).

XIX.—ANIRDISHṬA (miscellaneous).

# CLASSIFIED INDEX.

## I.—Veda S'ástra.

### *a. Sañhitá.*



### *d. Upanishad.*



### *e. Vaidika.*

## II.—Aitiha'sika S'a'stra.

### *a. Itihása.*



### *b. Puráṇa.*



## III.—Ka'vya S'a'stra.

### *a. Kávya.*

*b. Náṭaka.*



IV.—Abhidha'na S'a'stra.



V.—Vya'karaṇa S'a'stra.

## IX.—Smṛiti S'a'stra.

---

## XIII.—Dars'ana S'a'stra.

### *a. Dárśanika.*



### *c. Yoga.*



### *d. Nyáya.*



### *e. Vais'eshika.*



### *g. Vedánta.*

---

XIV.—Bhakti S'a'stra.

## XV.—Tantra S'ástra.



## XVI.—Vaidyaka S'ástra.

## XVII.—Jaina S'ástra.

## XIX.—Anirdhishṭa.